# सूर्योदयस्य योगदर्शनाङ्कः

( द्विचत्वारिंशत्तम-वर्षाङ्कः )



सम्पादकः

गोविन्द नरहरि वैजापुरकरः

( एम० ए०, न्याय-वेदान्त-साहित्याचार्यः )



प्रकाशन-स्थलम्

भारतधर्म-महामण्डलम्

जगत्गंज, वाराणसी



अक्षयतृतीया, २०२१ वै०

वार्षिकं शुल्कम्ः
रूप्यक-पञ्चकम्

अस्याङ्कस्य मूल्यम्
रूप्यक-चतुष्टयम्

# शुभ-कामना:

सादरं नारायणस्मृतिपूर्वकं शुभाशीर्वादाः श्रीमज्जगद्गुरुचरणानां ज्योतिष्पीठाधीश्वर - शङ्कराचार्य - श्रीकृष्णबोधाश्रमस्वामिपादानाम् । सूर्योदयस्य योगदर्शन-विशेषाङ्को निस्सरिष्यतीति ज्ञात्वा भृशं मुदितैः श्रीचरणैस्तत्साफल्याय शुभाशंसनं प्रेष्यते ।

—आचार्यः श्यामलालशर्मा

५-५-'६४ (ज्योतिष्पीठ-शङ्कराचार्यसचिवः)

× × ×

महाशय

श्री ५ महाराजाधिराज सरकारका हजुरमा तपाईंले 'सूर्योदय' मासिक पत्रिकाको ४२सौं वर्षारम्भमा प्रकाशित विशेषांकको निमित्त मौसूफ सरकारको शुभकामना संदेश पाउँ भनि ता० ६-४-१९६४-मा चढाई पठाउनु भएको विन्तिपत्र प्राप्त भई मौसूफ सरकारका हजुरमा जाहेर भयो ।

उक्त पत्रिकाले ४२ वर्षसम्म पाठक वर्गहरूको निरन्तर सेवा गर्दै आएको सह्लानीय छ र अझ वढी सेवा गर्न सकोस् भन्ने मौसूफ सरकारबाट शुभकामना व्यक्त गरी बक्सेकोले तपाईंलाई सूचना गरेकोछु ।

—मी० सु० मधुसूदन राज

वैशाख ३१, २०२१ (श्री ५ महाराजाधिराज, नेपालको निजी सचिव)

× × ×

मुझे यह जानकर खुशी है कि आप 'सूर्योदय' के ४२ वें वर्षारम्भ पर 'योगदर्शनांक'-विशेषांक दिनांक १४ मई '६४ को प्रकाशित करनेवाले हैं ।

में आपके इस अंक की सफलता के लिए हार्दिक शुभ-कामनाएँ भेजता हूँ ।

—जाकिर हुसैन

१२-५-'६४ (उपराष्ट्रपति, भारत)

Dear sir,

I am delighted to know that you are bringing out a special number of 'Suryodaya' in May. I send my best wishes to your venture.

**V. V. Giri**

20.4.'64 ( Rajyapal, Keral. )

× × ×

प्रिय महोदय,

मुझे आपके पत्र से यह जानकर बड़ी प्रसन्नता हुई है कि 'सूर्योदय' का 'योगदर्शन-विशेषांक' आगामी अक्षयतृतीया को प्रकाशित होने जा रहा है।

मुझे पूर्ण विश्वास है कि योगदर्शन के गूढ़ रहस्यों को सुलझाने में यह विशेषांक पूर्ण सफलता प्राप्त करेगा। योग संस्कृत-साहित्य की अनुपम निधि है। चाहे भारतीय परम्परा के और बहुत से विषय कितने भी विवादास्पद हों, योग एक ऐसा विषय है, जिसकी मूर्धन्यता परस्पर विरोधी मतावलम्बियों ने भी स्वीकार की है। ऐसे सर्वसम्मत विषय पर विशेषांक प्रकाशित करने का आपका संकल्प सर्वथा समर्थन के योग्य है। आपका यह आयोजन सभी दृष्टियों से सफल हो, एतदर्थ समस्त शुभकामनाओं के साथ--

**—भक्तदर्शन**

२१-४-'६४ ( उप-शिक्षामंत्री, भारत )

× × ×

सूर्योदयस्य योगदर्शनाङ्क-नामा विशेषाङ्कः अक्षयतृतीयादिने प्रकाशितो भविता इति भवद्भिः सूचितम्। सूर्योदयद्वारा सततं गीर्वाणवाणीसेवायाम् भवन्तः यत्नशीलाः, तदर्थं धन्यवादाः। सांप्रतं संस्कृतविषये जनानां तथैव च शासकानाम् उत्साहो वर्धमानो दृश्यते। तस्य फलम् अचिरादेव सूर्योदयोऽपि लप्स्यत इति आशास्महे।

**—( महामहोपाध्याय ) दत्तो वामन पोतदार**

२७-४-'६४ ( कुलगुरु : पुणें विद्यापीठ,
अध्यक्ष : केन्द्रीय-संस्कृत समिति )

त्रैलोक्यं निखिलं करामलकवद् यत्र स्फुटं भासते
दिक्कालौ विजितौ यया जनयतो न क्वापि भेदव्यथाम् ।
सैषा योगपरम्परा विगलितध्वान्ताऽमृतस्यन्दिनी
जीयात् प्राचि निरन्तरं सुविमला भव्या ससूर्योदया ॥

—(डा०) रामकरण शर्मा
१३-५-'६४ ( विशेषाधिकारी–संस्कृत-
शिक्षा-मन्त्र्यालय, भारत )

× × ×

अयं सूर्योदयः एकचत्वारिंशत्तमं वर्षमतीत्य अधुना द्विचत्वारिंशत्तमे वर्षे वैशाखशुक्लाक्षयतृतीयायां प्रविविक्षतीति कस्य सचेतसः हर्षाय न भविष्यति । तत्राधुना नववर्षप्रवेशे योगदर्शनाङ्केन सह प्रस्तुतो वर्तते इति अतीव प्रमोदावहम् । अहमस्य पत्रस्य हार्दिकीं वृद्धिं कामयमानः भगवतः विश्वनाथाद् अभ्युदयम् कामये ।

—सुरतिनारायणमणि त्रिपाठी
२१-४-'६४ उप-कुलपतिः
वाराणसेय-संस्कृत-विश्वविद्यालयस्य

× × ×

सूर्योदयस्य योगदर्शन-विशेषाङ्क-प्रकाशनवृत्तमाकर्ण्य हार्दिकशुभ-कामनाप्रेषणे अतिप्रसन्नतां अनुभवामि । एष प्रयासः पूर्णरूपेण सफलतां प्राप्स्यतीति आशासे । अद्यतन-सम्पादकाः अभिनन्दनयोग्या अस्मिन् प्रयत्ने । यतस्तेषामेव बुद्धिमत्तायाः परिश्रमस्य च फलमिदं यत् सूर्योदये उच्च-विद्याविभूषितविदुषां प्रमाणिताः एवं शिक्षाप्रदाः लेखाः प्रकाश्यन्ते इति ।

—प्यारेकृष्ण कौलः
३०-४-'६४ ( अवसरप्राप्त जज, हाईकोर्ट )
चीफ सेक्रेटरी : भारतधर्ममहामण्डलम्

संस्कृतविद्यायाः प्रधानकेन्द्रभूताद् वाराणसीनगरात् सुचिरात् प्रकाश्यमानस्य 'सूर्योदयः' इति प्रथितस्य संस्कृतमासिकस्य 'योग-दर्शनाङ्क'-संज्ञया अन्वर्थमर्थजातं पुरस्करिष्यन्तं विशेषाङ्कं प्रकाशयितु-मुद्यता भवन्त इति विजानन् नितरामानन्दमनुभवामि ।

अद्यत्वे नवनवकाव्यनिबन्धादि-प्रकाशनविधया गीर्वाणगिरः प्रसारे प्रवर्तमानानां संस्कृतपत्राणां मध्ये 'सूर्योदयस्य' प्रतिपादितविषय-प्रकाशनसौष्ठवादि-वैशिष्ट्यमधिकृत्य सुचिरागतं सुप्रतिष्ठितं च गौरवं वरीवर्ति । भारतीयसंस्कृतेः प्रतीकविशेषस्य च सतो योगदर्शनस्याऽपि अध्यात्मसम्पदतिरेकादनन्यसामान्यं महत्त्वं च सर्वसम्मतं बोभवीति । अतस्तदीयसारसंग्राहिलोऽयं विशेषाङ्कः स्व-विषय-महिम्ना रुचिमतां विपश्चितां सविशेषां मुदमादधानो भवतां सर्वदोषकषणक्षमे सम्पादकत्वे स्फुटमेव विशेषाङ्कतां प्रतिपत्स्यते इति दृढं विश्वसन् हृदाऽभिनन्दामि शिवं सङ्कल्पमिमं भावत्कमित्याख्याति––

—विश्वबन्धुः

२८-४-'६४ ( सम्पादकः 'विश्व-संस्कृतम्' होशियारपुर )

× × ×

भवतां लिपिं प्राप्य सुखीभवामि । श्रीभारतधर्म-महामण्डलेन परिचालितस्य 'सूर्योदय'स्य द्विचत्वारिंशत्तमं वर्षं प्रारब्धम् इति महत् आनन्दजनकं संस्कृतभाषानुरागिणाम् । आशास्महे यत् सूर्योदयस्य भास्वरत्वं उत्तरोत्तरं वर्धितं भविष्यति । भगवत्-पदान्ते पत्रस्य दीर्घायुः प्रार्थयाम इति ।

—चपलाकान्तभट्टाचार्यः
( भारतीय-संसत्सदस्यः )

× × ×

सूर्योदयस्य योगदर्शनाङ्क-प्रकाशनविषये भवतां पत्रमवाप्तम् । अस्मिन् संक्रमणकाले सांस्कृतिकोऽयं सुप्रयासः साधुवादार्हः ।

प्रकाशवीरशास्त्री

११-५-'६४ ( भारतीय-संसत्सदस्यः )

अद्यत्वे भारतोत्तरखण्डे प्रचरत्सु सनातनधर्मतत्त्वादिप्रकाशकेषु संस्कृतभाषामयपत्रेषु काशीस्थ - भारतधर्म - महामण्डलसंसृष्टस्य "सूर्योदयाख्य"पत्रस्य महत्त्वं संस्कृतभाषारसिकानां विदुषां सुविदितमेव। साम्प्रतमस्य "योगदर्शनाख्यः" कश्चिद् विशेषाङ्कः प्राकाश्यमेष्यतीति विदित्वा चेतोऽस्माकं नितरां प्रसीदति। इत्थमेव तं तं विषयमुपजीव्य अन्तरान्तरा विशेषाङ्कप्रकाशनेन भारतीयसंस्कृतेर्विविधानामङ्गानां समालोचनेन विमर्शनादिद्वारा च सनातनधर्मस्य रहस्यमुन्मीलितं भवेत्, प्राकृतजनानां वहुधा कल्याणसिद्धिश्च स्यादित्याशास्महे। पत्रमिदं दीर्घजीवनमकुण्ठितप्रसारं चोपलभ्य समुचितप्रकारैर्विश्वहितं विदध्यादिति श्रीविश्वेश्वरचरणेष्वस्मदीया सनिर्बन्धा प्रार्थना।

श्रीआनन्दमयी-आश्रमः<br>पातालदेवी, अल्मोडा

—गोपीनाथ कविराज<br>१३-५-'६४

—×—

# अनुक्रमः

# सूर्योदयः

श्रीभारतधर्ममहामण्डलस्य मासिकं मुखपत्रम् ।

रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्,
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा ग्लापयन् ।
विद्वल्लोकमशोकयन् नयसुधीरोलम्बमुन्मीलयन्,
सञ्जातः सुमनोमनो मधुरयन् सर्वत्र सूर्योदयः ॥

वाराणसी, वैशाखशुक्ला अक्षयतृतीया २०२१ : १४ मई १९६४

पर्यङ्कग्रन्थिबन्धद्विगुणितभुजगाश्लेषसंवीतजानो-
रन्तप्राणावरोधव्युपरतसकलज्ञानरुद्धेन्द्रियस्य ।
आत्मन्यात्मानमेव व्यपगतकरणं पश्यतस्तत्त्वदृष्टया
शम्भोर्वः पातु शून्येक्षणघटितलयब्रह्मलग्नः समाधिः ॥

—श्री शूद्रकः

सम्पादकीयम्

# योगदर्शनाङ्क-विषये किञ्चित् !

भगवतः श्रीविश्वनाथस्य परमया कृपया 'सूर्योदय'स्य योगदर्शनाङ्कोऽयं तत्रभवतां करसरोरुहयोः उपायनीकुर्वतामस्माकं चेतः किमपि अनिर्वचनीयं समाधिसुखम् अनुभवति। अक्षयतृतीयादिने पुनरस्य समर्पणमिदं नूनमक्षय्याय फलाय प्रभवेदिति विश्वसिमः। तिथिरियं 'सूर्योदय'स्य प्राथमिकोन्मेषस्य दिवसः। १९८० मिते वैक्रमीये संवत्सरे अस्मिन्नेव शुभदिने उन्मिषितः सूर्योदयोऽविरतम् अद्यावधि प्रथमपृष्ठोल्लिखितश्लोकानुसारं राग-द्वेषविधूननादिकार्येषु यथाशक्ति प्रयतमानः आस्ते। अक्षयतृतीयायाः सद्यः फलं त्वनेन स्फुटमेवाधिगतं मन्महे यत्प्रायः कियत्कालमाविर्भूय तिरोधानस्वभावं दधतां संस्कृतपत्राणां मध्ये पत्रमिदं द्विचत्वारिंशत्तमम् आयुर्दायम् उपभुञ्जन् संस्कृतसाहितीरसचणानां तत्रभवतां सेवायै समुपस्थितमास्ते। अक्षयतृतीया नाम उत्पथगामिनां प्रजापीडकानां राजन्यानां त्रिःसप्तकृत्वः क्षयं विदधतः उत्साहावतारस्य लोकोत्तरपितृभक्तस्य परशुधारिणो रामान्यतमस्य जामदग्न्यस्य भगवतो विष्णोः भूमौ समवतरणतिथिः। अतोऽपि दिनेऽस्मिन् प्रादुर्भूय पत्रमिदं भगवतस्तस्य कियदपि उत्साहप्रवणता-ऽन्यायप्रतीकारदक्षतादिप्रभावस्य नूनं दायादं स्यात्। सत्यपि अक्षयतृतीयादिने आविर्भावे, व्यवस्थासौकर्याय अस्माभिः पत्रस्यास्य वर्षारम्भो जनवरीमासत एव व्यवह्रियते। 'वार्षिकविशेषाङ्कः' पुनरस्मिन्नेव दिने प्रकाशयिष्यते। नवं परिष्कृतं रूपमपि जनवरी( '६२)-मासत एवानेन धृतम्। अतोऽपि ग्राहकादीनां व्यवहारादिकं जनवरीमासत एव भवेत्।

सुप्रसङ्गेऽस्मिन् सूर्योदयशुभचिन्तकैः कृपालुपाठकैः अमूल्यसहयोगदातृभिर्विद्वन्मूर्धन्यैः, विज्ञापनादिसाहाय्यमाचरद्भिर्व्यावसायिकैः,

संस्कृतप्रणयिसमाजेन, भारतशासनेन च पत्रं प्रति विधीयमानानां नैकश उपकाराणां स्मरणमत्यावश्यकम्। यदि तैस्तैः स्व-स्वमर्यादानुसारं पत्रमिदं नोपकृतमभविष्यत्, तदाऽस्य ईदृशी समुन्नतिरपि दुरापाऽभविष्यत्। एवमेव पूर्वतनसम्पादकैर्यावान् श्रमोऽस्य सुस्थितये चिरस्थितये च समाचरितः, तस्यापि स्मरणं कृतज्ञतायाः प्राथमिकी भूमिः खलु। नूनं तैर्यादृशं गभीरतमं चिरस्थायि च वाङ्मयं सूर्योदयमुखेन संस्कृतसमाजाय उपायनीकृतम्, तस्य मूल्यमापने विपश्चित एव प्रमाणम्। अयं जनोऽपि तेषामेव सरणिमाश्रित्य अग्रे सरति। भूतपूर्वसम्पादकेष्वन्यतमाः प्रथितवैदुष्याः श्रीविन्ध्येश्वरीप्रसादशास्त्रिणस्तु अद्याप्येनं भूयसा सहयोगेन उपकुर्वन्तीति सौभाग्यास्पदमेतत्। सूर्योदयस्य उत्तरोत्तरविकासाय सततं सक्रियं चिन्तयन्त्यः भारतधर्ममहामण्डलसञ्चालिकाः पूज्याः श्रीविद्यादेवीमहोदयाः, तासां सहयोगिन्यश्च आर्यमहिला-महाविद्यालयाध्यक्षाः श्रीसुन्दरीदेवीमहोदयाश्च सर्वस्यास्य उपक्रमस्य जीवितमेव। परमेशितुः अकल्प्यसङ्केतेन यथावत् सुसङ्घटितां सर्वामिमां सामग्रीमादाय संयोजकरूपेण यद्ययं जनः सूर्योदयममुं गीर्वाणवाणीरसिकेभ्यः प्रयच्छति चेत्, नात्र अस्य सुमहान् यशोभागः। तथापि ज्ञानतोऽज्ञानतो वा यद्यदत्र स्खलनं संवृत्तं स्यात्, तत्सर्वमस्यैव मत्वा नूनं क्षन्तव्यम्। यतो हि अयमपि केवलं सुरभारतीसमाराधनाय सर्वत्र चास्याः सविशेषप्रचाराय इत्थं प्रयतमान आस्ते इति।

प्रसङ्गेऽस्मिन् अन्यदपि एकं निवेदनं संस्कृतसमाजस्य कृते। 'सूर्योदय'-स्तु यथाशक्ति नियमतः संस्कृतसमाजस्य सेवां विदधात्येव; परं तेन नैकाः विकासयोजनाः निर्ध्याताः सन्ति, याः किल सफलयितुं ग्राहकानां बलं सर्वतोऽधिकमपेक्ष्यते। यदि प्रत्येकं संस्कृतपाठशालाः, संस्कृतसंस्थानानि, आंग्लपाठशालीय-संस्कृतविभागाः, पुस्तकालय-वाचनालयाः समर्थाश्च विद्वांस एकैकं पत्रं सशुल्कं ग्रहिष्यन्ति, तदा समस्येयं सारल्येन लोकतान्त्रिक-प्रणाल्या च समाहिता भवेत्। अतो विषयेऽत्र सम्बद्धा जनाः सामान्यमुखेन प्रार्थ्यन्ते यत्तैरस्माकं प्रार्थनेयं त्वरितं पूरणीयेति।

इतः परं प्रस्तुताङ्कविषये किञ्चित्। योगदर्शनाङ्कोऽयं त्वरितं प्रकाशितः, यतो हि प्रकाशननिर्णय एव विलम्बेनाभवत्। अत एव समपेक्षितानां बहूनां विषयाणामत्र सन्निवेशनमशक्यं संवृत्तम्। प्रधानतोऽत्र पूज्यपादानां ब्रह्मीभूतगुरुदेव-ज्ञानानन्दस्वामिनां पातञ्जलयोगदर्शनीयं भाष्यमेव अशेषतः सङ्कलितमास्ते। तदुपष्टम्भकाः केचन अन्येऽपि परिगणिताः निबन्धाः सन्निवेशिताः। योगदर्शनाङ्कीयविषयेषु भगवतः पतञ्जलेर्योगसूत्राणां यथावद्विवरणं सर्वतः प्राथम्यमादधातीत्यत्र न विप्रतिपत्तिपदम्। तानि च योगदर्शनस्य मूलम्, 'मूलं नास्ति कुतः शाखाः' इति च सुप्रसिद्धेः। योगसूत्राणामेतेषां विवरणाय सत्स्वपि बहुषु ग्रन्थेषु समासतः सारल्येन च प्रमुखप्रामाणिकसम्प्रदायानुसारि विवरणं यथाऽत्र संग्रथितमास्ते, न तथा क्वचन उपलभ्यते। पूज्यश्रीस्वामिपादैः सर्वा एता असुविधा विचार्यैव सरलया भाषया आधुनिकतमोदाहरणादिमुखेन एतद् ग्रथितमासीत्। अस्य प्रकाशनेन विषयोऽयम् आदर्शायितो भवेदिति निर्ध्याय विशेषाङ्के एतदविकलं सङ्कलितम्। तत्रापि यत्र तत्र ऐच्छिकसन्धीनां परिहारेण सारल्यं बुद्ध्या संयोजितम्। सत्येवम् अङ्ककलेवरो गुरुतरः संवृत्तः। अत एव अन्यान् कतिपयानेव लेखान् सङ्कलय्य विशेषाङ्कोऽयं सम्पूरितः। यदि विज्ञा विद्वांसो विषयेऽत्र अन्यदपि गुरुतरं नूत्नं स्थायि च साहित्यं प्रेषयिष्यन्ति चेत्, तत्साधारणेषु अङ्केषु यथावकाशम् अस्माभिरवश्यं प्रकाशयिष्यते, सति सम्भवे परिशिष्टाङ्करूपेण क्रमशः प्रत्यङ्कं वा। विशेषाङ्कस्यास्य कृते यैः शासकश्रेणीयैः, अन्यैर्विद्वद्भिः, आचार्यैश्च याः शुभकामनाः प्रेषिताः, तदर्थं 'सूर्योदयः' तेषां हार्दिकीं सश्रद्धां कृतज्ञतां ज्ञापयति। अभिव्यनक्ति एतद् यदेते विद्वांसः अस्माकं शासकाश्च संस्कृतस्योन्नयने कियतीमसाधारणीं रुचिं जागरूकतां च बिभ्रतीति।

योगदर्शनस्य प्रायः सर्वे विषया प्रायोगिकाः। तत्र भावनायाः श्रद्धायाश्च अत्यल्पोऽवसरः। अत एव दर्शनमिदम् आस्तिक-नास्तिक-पाश्चात्त्य-पौर्वात्यादिभिः सर्वैरेव समं समादृतम्। अवान्तरविषयेषु स्यान्नाम

मतवैविध्यम्। लक्ष्यभेदोऽपि कुत्रचन नासम्भवी। परं क्रियांशानां प्रयोगे न कुत्रापि मतभेदः। नूनं योगदर्शनोक्ताः सिद्धीः आश्रित्य बहवो विप्रतिपद्यन्ते। केचन तासामस्तित्वमपि न स्वीकुर्वन्ति। परमेतत् आपातरमणीयम्। देश-कालसीमानौ अतीत्य सर्वत्र सर्वदा तादृशसिद्धिसम्पन्नानां दर्शनं जातम्, जायते सम्पत्स्यते च। ऐश्वर्यापरपर्यायास्ताः ईश्वरे नियमेन वर्तन्त एव। स च तस्य स्वभाव एव। अविद्याक्षये ईश्वरभावापन्नमात्मानम् अनिच्छन्तमपि स्वत एव ताश्छायावत् धावन्ति। वस्तुतः सर्वात्मता पूर्णाहन्ता वा महाविभूतिः, अणिमाद्याश्च तस्या अतिक्षुद्राः स्थूला अंशाः। जीवस्य साधनलक्ष्यम् आत्मस्वरूपोपलब्धिरेव। साधनद्वारा जीवो यदा ईश्वरभावं प्राप्नोति, तदैनाः उदयन्ति, पुनः कैवल्यपथेऽग्रेसरणेन विलयं यान्ति च। ततोऽनिर्वचनीयम्, अनाविलम्, अक्षुब्धम्, अक्षोभ्यम्, आत्मरूपमेव तिष्ठति। अतः सिद्धीनां नात्यन्तमभावो न च ताः सर्वथा हेया वा। अवस्थाविशेषे तत्तत्सिद्धीनां ग्रहणं त्यागो वाऽभिप्रेतः। एतच्च तत्र तत्र शास्त्रे प्रतिपादितम्। यथावसरमेतत् विवेचयिष्यते।

योगदर्शनकर्तुः पतञ्जलेरपि विषये विवेचनावसरः। 'योगेन चित्तस्य पदेन वाचाम्...' इत्यादिश्लोकानुसारं केचन योगसूत्रकर्तारम्, व्याकरणमहाभाष्यकारम्, आयुर्वेदाचार्यं चरकं च पतञ्जलिमेकमेव मन्वते। परमेतत् अपरे न क्षमन्ते। तैरनेकैः प्रमाणैः अनेकानि मतानि साधकबाधकयुक्तिभिः साधितानि। सर्वाण्येतानि मतानि परीक्ष्य अद्यतनीया विचारकाः आर्षकालभवः पुरुषः सामवेदीय-निदानसूत्रप्रवक्ता एव योगसूत्रकारः पतञ्जलिरित्यभ्युपगच्छन्ति। विषयोऽप्ययं विवादास्पदो विशेष-विमर्शसापेक्षश्च। वयं त्वत्र सर्वसिद्धं सरसं रसालफलमिव प्रमेयविवेचनमेवाश्रित्य प्रवृत्ताः, तत्पर्णगणनावत् नीरसविषयैः सम्प्रति तटस्था एव भवामः। प्रसङ्गतो विषयस्यास्य विचाराय सङ्केतमात्रः कृतः।

कुण्डलिनी-षट्चक्रादि-हठयोगीय-विषयेषु योगशास्त्रेऽस्मिन् न किमप्युल्लिखितम्, यद्यपि आधारशक्तिरूपायाः कुण्डलिन्या अपि गभीरं रहस्यमस्ति। नाथसम्प्रदायानुयायिभिः हठयोगिभिरत्र सविशेषं विवेचितमास्ते। परं सर्वमेतत् सीमितकाये विशेषाङ्के कथं सङ्कलयितुं शक्यमिति कृत्वा स मोहोऽपि समावृतः।

अन्ते साधनसौलभ्यानुसारं यावत्कर्तुं पारितम्, तत्कृत्वा विशेषाङ्कोऽयं पाठकेभ्यः सप्रश्रयं सप्रेम च उपायनीक्रियते। आशास्यते च ते अमुं विशेषाङ्कं सस्नेहं स्वीकरिष्यन्तीति।

---

**पूज्य श्री कृष्णबोधाश्रम स्वामिपादाः**

जगद्गुरुशङ्कराचार्य-ज्योतिष्पीठाधीश्वराः

# 'योग'शब्दस्य व्यापकता

अयं खलु 'योग'शब्दो न केवलं चित्तवृत्तिनिरोधार्थकः, अपि तु बहुष्वर्थेष्वपि अस्य वृत्तिः। योगदर्शनादिप्रयोगेषु समस्यमानोऽयं नानार्थकतामापन्न इव असमस्यमानावस्थायामपि बह्वर्थकतां न विजहाति। समाधिसंयमनार्थकयोः युज्-धात्वोः भावार्थक-घञ्प्रत्ययेन निष्पन्नस्यास्य शब्दस्य प्रेमार्थे प्रयोगो दृग्पथमवतरति। यथा देवीभागवते—

"स्वीयान् गुणान् प्रविततान् प्रवदंस्तथासौ
तां प्रेमदामनुचकार स योगयुक्तः॥"

अत्र पद्ये प्रेमरज्ज्वाकृष्टस्य निष्क्रियस्य अनन्तानन्तब्रह्माण्डनायकस्य अनेक-गुणगणनिलयस्य तस्य प्रेम्णैव योगयुक्तता सङ्घटते।

ज्योतिश्शास्त्रे सप्तविंशतिसंख्यकेषु विष्कम्भादिषु अपि योगशब्दो वर्तते। तत्रैव क्रकचामृतशब्दैः सह वर्तमानोऽयं योगशब्दः स्वस्य संहननार्थतां ख्यापयति।

अन्यत्रापि आध्यात्मिकविषयमधिकृत्य योगशब्दस्य अपरोऽर्थः। तथा हि—

"दुःखाम्बुमग्नाः पुरुषा प्राप्य ब्रह्म सनातनम्।
उत्तरेयुर्भवाम्भोधिं तथा तमनुचिन्तय॥
इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम्।
नराणामुपकाराय दुःखविच्छित्तिकारकम्॥"

अत्र क्रियायोगान्तर्गत-योगशब्दस्य आराधनमर्थः संविभाति। आध्यात्मिकाधिदैविकादि-विविधदुःखव्रातैः आपीड्यमानस्य पुंसो दुःखविच्छित्तये

परमस्य पुंसः समाराधनेन खेदात्यन्ताभावो भवतीति सुनिश्चितम्। अत एव अस्मिन्नेव प्रकरणे—

"तमाराध्य जगन्नाथं क्रियायोगेन वाडवाः।
अग्नौ मोक्षं परं जग्मुस्तस्मात् तन्मोक्षकारणम्॥"

इत्युक्तम्। अर्थात् विपश्चितो विद्वांसः संसारार्णवमग्नानां विषयोपहतचेतसां सचेतसां कृते हरितोषणाय परमया भक्त्याऽऽराधनरूपया अग्नौ तं परब्रह्म परमात्मानं भेजिरे। अतोऽयं क्रियायोगान्तर्गतो 'योग'शब्द आराधन-रूपमर्थं गाहते। तेन चाराधनेन अशमवतां शमं यान्ति शोक-व्रातानि।

योग-साधनप्रभृतिषु शब्देषु अन्तर्गतस्य योगशब्दस्य ब्रह्मणि संयोगो-ऽर्थः। अत एव—

"आत्मप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।
तस्या ब्रह्मणि संयोगो योग इत्यभिधीयते॥" इत्युक्तम्।

बन्ध-मोक्षकारणस्य विषयासक्ताऽनासक्तस्य बन्धमुक्तरूपस्य मनसो विष-येभ्यः समाहृत्य विज्ञानात्मनि प्रेरितस्य तस्य ब्रह्मभूये परमेश्वरे एकात्म-भावनयनमेव योग-साधनम्। अनेन योगसाधनेन मनसोऽनेकात्मभावस्य निरसनपूर्वकं ब्रह्मभूयत्वमापद्यते।

क्वचित् योगशब्देन अष्टाङ्गयोगयुक्तेन मुक्तिलाभस्य चर्चा चर्चिता। तथा हि—

"मुक्तिरष्टाङ्गविज्ञानात् संक्षेपात् तद्वदामि ते।
यमाः पञ्च त्वहिंसाद्या अहिंसाऽप्राणिहिंसनम्॥
सत्यं भूतहितं वाक्यमस्तेयं स्वाग्रहं परम्।
अमैथुनं ब्रह्मचर्यं सर्वत्यागोऽपरिग्रहः॥"

इत्यादिभिः यम-नियमादिपुरस्सरं चित्तस्य शोधनम्। तदनु ब्रह्मात्म-भावप्राप्तिः।

क्वचित् गीतादि-प्रबन्धेषु योगशब्दस्य—

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।
तेषां नित्याभियुक्तानां योग-क्षेमं वहाम्यहम्॥"

इत्यत्र अप्राप्तस्य वस्तुनः प्राप्तिर्योगः, प्राप्तस्य वस्तुनो रक्षणं क्षेमः इति सन्दर्भेण प्राप्तिरर्थः ।

योगदर्शने च "योगश्चित्तवृत्तिनिरोधः" इति सूत्रयता भगवता पतञ्जलिना चित्तवृत्तीनां शुद्धाशुद्धानां सर्वासां निरोध एव योगपदार्थ उक्तः । तेन च 'तदा द्रष्टुः ( परमात्मनः ) स्वरूपेऽवस्थानम्' भवति ।

इतोऽपि योगशब्दस्य व्यापकमर्थं दिदर्शयिषुणा शास्त्रकारेण अभ्यधायि यत्—

"योगास्त्रयो मया प्रोक्ता नृणां श्रेयोविधित्सया ।
ज्ञानं कर्म च भक्तिश्च नोपायोऽन्योऽस्ति कुत्रचित् ॥
निर्विण्णानां ज्ञानयोगो न्यासिनामिह कर्मसु ।
तेष्वनिर्विण्णचित्तानां कर्मयोगश्च कामिनाम् ॥
यदृच्छया मत्कथासु जातश्रद्धश्च यः पुमान् ।
न निर्विण्णो नातिरक्तो भक्तियोगोऽस्य सिद्धिदः ॥" इति ।

अत्र 'योग'शब्देन ज्ञान-कर्म-भक्तीनां त्रिकाणां बोधो भवति । विषयेषु अनासक्तस्य निवृत्तेन्द्रियव्यापारस्य संन्यासिनो ज्ञानम् । यज्ञादिकर्मकलापेषु अनिवृत्तचित्तस्य विविधाभिलाषिणश्च पुंसः कर्मप्रवृत्तये शास्त्रस्योपदेशः, स च कर्मपदवाच्यः । भगवतो गुणगणश्रवणजस्नेहस्य तत्कथासु जातश्रद्धस्य नातिनिर्विण्णस्य नातिसक्तस्य पुरुषस्य निर्दिश्यते भक्तिः उपादेयत्वेन । अत एव भगवत्सम्बन्धिनीषु कथासु सश्रद्धं प्रवर्तमानस्य निष्कामकर्मयुक्तस्य स्वधर्मपालनैकपरायणस्य भगवति जायते अहैतुकी भक्तिः । निर्मलस्वान्तो निर्धूतमनोमलः, अत एव विशुद्धान्तःकरणो विशुद्धस्य ज्ञानस्य अवाप्तौ अधिकारतां प्राप्नोति ।

गीतायां बहुत्र स्थलेषु योगशब्दः प्रयुक्तो वर्तते—

"सांख्ययोगौ पृथक् बालाः प्रवदन्ति न पण्डिताः ।"
"ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥"
"योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।"
"योगः कर्मसु कौशलम् ।" इत्यादि ।

इत्थं विविधप्रकरणेषु सांख्य-कर्म-ज्ञान-विज्ञानादिशब्दैः सह योगं भजमानो योगशब्द अनेकार्थतामवगाहमानः स्वार्थस्य व्यापकताम् अभिव्यनक्ति।

एवन्त्वे योगदर्शनस्थ-योगशब्दस्य चित्तवृत्तिनिरोध एवार्थः। निरुद्ध-चित्तवृत्तेः पुरुषस्य पुरुषसाक्षात्कारयोग्यता सम्पद्यते। अनेकासां विभूती-नामपि प्रादुर्भावो भवत्यञ्जसा। तथापि ज्ञानहेतुकायाः कैवल्यमुक्तेः ज्ञानेनैव सम्पाद्यमानत्वात् योगोऽयम् अवरकोटावेव। समाधिकाले समा-सादितायां ब्रह्मात्मैकभावनायामपि व्युत्थानदशायां तदपायात्। वेदान्तमते च जाग्रदादिषु निखिलप्रपञ्चस्य असत्यतया भाने समाधौ चापि ब्रह्मात्मकभानस्य वर्तमानत्वात् सर्वदा आत्मस्वरूपेऽवस्थितत्वा-न्नानिर्मुक्तिप्रसङ्गात्।

अतो योगशब्दस्य नानार्थकता ज्ञानकर्मोपासनादिपरेषु वाक्यकदम्ब-केषु स्फुटैव। शास्त्रचिन्तापरायत्तैकबुद्धिभिः स्वप्रयोजनपरवशतया यत्र यादृगर्थोऽपेक्ष्यते, तादृशेनार्थेन शास्त्रतात्पर्यमवगन्तव्यम्। 'यत्परः शब्दः स शब्दार्थः' इत्यभियुक्तैर्निष्कण्टकः पन्थाः प्राणिनायि। किं बहुना।

—०:❋:०—

पद्मविभूषणाः महामहोपाध्यायाः

श्रीगोपीनाथ कविराज महोदयाः

# योगोक्त-विषयाणां परिचयः

[ भारतीयदर्शनागमशास्त्रेषु सविशेषवैदुष्यवतां श्रीकविराजमहोदयानां लेखोऽयं योगविषयाधिगमाय सुबहु साहाय्यं विधास्यतीति कृत्वाऽत्र प्रकाश्यते। एतादृशलेखप्रदानानुग्रहेण उपकृतः 'सूर्योदयः' सुचिरं सश्रद्धं तेषां कृतज्ञतां प्रकटयतीति।

—सम्पादकः ]

प्राचीनभारतीयवाङ्मये 'योग'शब्दो व्यापकेषु विभिन्नेष्वर्थेषु व्यवह्रियते। शब्दस्यास्य आध्यात्मिकेऽर्थे सत्यपि प्रकारभेदे अंशतो मौलिकं सामञ्जस्यं दरीदृश्यत एव। तस्य किमपि लक्षणं विधीयताम्—'जीवात्म-परमात्मनोः संयोगः, सूर्याचन्द्रमसोः सम्मेलनम्, शिव-शक्त्योः सामरस्यम्, चित्तवृत्तेर्निरोधो वा योगः' इति, अन्यद्वा किमपि लक्षणं क्रियताम्, मूलतो विशेषभेदो न स्यात्।

## महायोगः पूर्णयोगश्च

योगशिखोपनिषदि सुविस्तृतं वर्णितमास्ते यत् स्वाभाविको योग एक एव, नाऽनेकः। साधकेषु 'महायोग'-नाम्ना स प्रथितः। अवस्थाभेदैर्महायोग एवायं मन्त्रयोग-हठयोग-लययोगापरपर्यायराजयोगरूपैः प्रकाशते।

## मन्त्रयोगो जपयोगश्च

योगशास्त्रे 'मन्त्रयोग'-शब्दो यद्यपि तत्र तत्र नैकेष्वर्थेषु प्रयुक्तः, तथापि तस्य मुख्यं लक्षणं 'मन्त्रमाश्रित्य जीवात्म-परमात्मनोः सम्मिलनम्' इति स्वीक्रियेत, तदा तददुष्टं भवेत्। शब्दात्मकस्य मन्त्रस्य चेतनत्वे तत्साहाय्येन जीवः क्रमश ऊर्ध्वं गच्छन् शब्दातीते परमात्मधाम्नि स्थानं प्राप्नुयात्। वैखरीशब्दतः क्रमशो मध्यमामवस्थां भिन्दन् पश्यन्तीशब्दे

प्रवेश एव मन्त्रयोगस्य मुख्यमुद्देश्यम्। पश्यन्तीशब्दोऽयं स्वप्रकाशमानः चिदानन्दमयः। चिदात्मकस्य पुरुषस्य सैव अक्षया अमरा च षोडशी कला। तदेव आत्मज्ञानस्य इष्टदेवसाक्षात्कारस्य शब्दचैतन्यस्य वा प्रकृष्टं फलम्। अवस्थामिमाम् अधिगतो जीवः कृतकृत्यतां भजते। ततः परं स्वयमेव अव्यक्तो भावः समुदेति। सैव शब्दस्य तुरीयावस्था। मूलाधारतो निरन्तरं शब्दस्रोत ऊर्ध्वं गच्छति। अयमेव शब्दो निखिलस्य जगतः केन्द्रे नित्यं प्रतिष्ठितः। बहिर्मुखो जीव इन्द्रियवशवर्ती भूत्वा विषयेषु धावति। अत एव नैतत् स जानाति। यदा क्रियाकौशलविशेषेण अन्येन वा केनचन उपायेन इन्द्रियाणां बहिर्गतिः निरुद्ध्यते, प्राण-मनसी च स्तम्भिते भवतस्तदा साधकाः चेतनं शब्दममुं श्रोतुमधिकृता भवन्ति। षण्मुखीमुद्रया कृत्रिमोपायेन नादस्याय अनुसन्धानं चेष्टयते। नोदनेन अभिघातेन वा जनितस्य शब्दस्य अनाहतनादे लये असम्भाव्यमाने मन्त्रोऽयम् अक्षरसमष्टिरूपेणैव तिष्ठति। तस्य सामर्थ्यं प्रकाशश्च नानुभूयेते। इडा-पिङ्गलयोर्गतिः अवरुद्ध्य प्राण-मनसोः सुषुम्णायां प्रवेशे सम्पद्यमाने तदिदं नित्यं सारस्वत-स्रोतः अनुभूयते। इदमेव साधकम् आज्ञाचक्रं नयति, ततश्च बिन्दुस्थानं विभेद्य क्रमशः सहस्रारकेन्द्रे महाबिन्दुं यावत् प्रापयति। निरन्तरं श्वास-प्रश्वासैः जीवो यं 'हंस'मन्त्रं जपति, गुरुकृपया प्राणे विपरीतभावापन्ने सः 'सोऽहम्'-मन्त्ररूपेण परिणमते।

## अस्पर्श-योगः

माण्डूक्य-कारिकायां श्रीमदाचार्यगौडपादैः 'अस्पर्श-योगः' समुल्लिखितः। यद्यपि तत्रायं न विवृतः, तथापि प्रसङ्गतो विशेषणमुखेन किञ्चित् तद्वर्णनं तत्र समुपलभ्यत एव। तेनेदं ज्ञायते यत् योगोऽयं नितरां दुर्लभः। साधारणो योगी विषयेऽत्र प्रवेष्टुं न शक्नोति। सर्वभूतानां मङ्गलस्य आनन्दस्य च निदानभूतोऽयं योगः सर्वविधं विरोधमतीत्य प्रतिष्ठितः, वस्तुतः 'अभयपद'शब्देन अभिधेयश्च। प्रसङ्गतो वेदान्तग्रन्थविशेषेऽपि अयं समुल्लिखितो दृश्यते। यैः कुयोगिभिः 'निरालम्ब-पद'मधिगन्तुम्

अधिकारो नासाद्यते, ते आत्मलोपाशङ्कया निर्विकल्पायामस्यां परमभूमौ प्रवेष्टुं न क्षमाः, नापि वाञ्छन्ति च।

वस्तुतः 'अस्पर्शयोगो'ऽयम् असम्प्रज्ञातस्य निर्विकल्पस्य वा समाधेः अवस्थाविशेषः। नात्र संशीतिलेशोऽपि। इन्द्रियार्थसन्निकर्षरूपेण स्पर्शेण वृत्तिज्ञानं समुदेति। किन्तु बहिरिन्द्रियाणाम् अन्तःकरणस्य च सम्यक् निरोधे या अस्पर्शावस्थाऽनुभूयते, सा वृत्तिरहितां शुद्धचैतन्यभूमिमेव सूचयति। न्यायदर्शनानुसारमपि स्पर्शेन्द्रियेण त्वचा मनःसंयोगमन्तरा कस्यापि ज्ञानस्य प्राकट्यमसम्भवि। अयमेवात्र हेतुर्यत् मनोवहा ज्ञानवहाश्च नाड्यः त्वचमाश्रित्यैव प्राकट्यं यान्ति, ताश्च सर्वा वायवीयाः। स्पर्शश्च वायोर्धर्मः। अत एव अस्पर्शयोगावस्थायां वायोः स्पन्दननिरोधेन पूर्वोक्ता नाड्यो यदाऽव्यक्ततां गच्छन्ति, तदा एकत्र मनो वृत्तिशून्यं जायते, अपरत्र च इन्द्रियाण्यपि निरुद्ध्यन्ते। तदा आत्मा निजस्वरूपे प्रकाशते।

## शब्दयोगो वाग्-योगश्च

प्राचीनेषु आगमशास्त्रेषु वाग्योगापरपर्याय-'शब्दयोग'नाम्ना या योगप्रणाली समुल्लिखिता, तत्तात्पर्यं रहस्यं च सम्प्रति बहवः प्रायो विस्मृतवन्तः। शैवागमान्तर्गते व्याकरणागमेऽपि योगसाधनस्यास्य परिचयो दृश्यते। भर्तृहरेः 'वाक्यपदीयम्' साम्प्रदायिकाश्च प्राचीनास्तद्व्याख्याः यैरनुशीलिताः, ते नूनं वाग्योगस्यास्य अभिज्ञाः स्युः। व्याकृतशब्दस्य वैखरीदशातो मध्यमामुत्तीर्य पश्यन्तीस्वरूपे प्रवेश एव योगसाधनस्यास्य मुख्यमुद्देश्यम्। पश्यन्तीदशातो परावस्थायाम् 'अव्याकृते पदे' गति-स्थिती स्वभावतो नियमेन स्वत एव जायेते। न ते कस्याश्चन साधनाया आन्तरिकं लक्ष्यम्। तत्र वैखर्याः स्थूलेन्द्रियग्राह्यशब्दविशेषाणां च मिश्रावस्थायां वर्तमानत्वाद् असंख्या आगन्तुका मलास्तिष्ठन्त्येव। गुरूपदिष्टप्रणाल्या साधनेऽनुष्ठीयमाने कोऽपि शब्दः स्थूलावस्थया विमोच्य विशुद्धः कर्तुं पार्यते। शोधन-क्रियैवेयं 'शब्द-संस्कारः' इति व्यपदिश्यते। यदा शब्दः-

सम्यक् शुद्धः संस्कृतश्च जायते, तदा स दिव्यवाणीरूपेण, संस्कृतभाषा-रूपेण सृष्टिकारिब्राह्मीशक्तिरूपेण वा परिणमते। केवलमेकमपि शब्दं प्रणाल्याऽनया संशोद्ध्य जीव ऐकान्तिकीं कृतकृत्यतामासादयति।

'एकः शब्दः सम्यग् ज्ञातः सुप्रयुक्तः
स्वर्गे लोके च कामधुक् भवति।'

ये ह्येकस्यापि शब्दस्य संस्कारे समर्थास्तेषां कस्याप्यभावो न जायते। एक एव शोधितः स शब्दः शक्तिरूपेण प्रकाश्य तेषां पुरतः कामधेनोराकारेण आविर्भवति। शब्दमर्मविदो वसिष्ठादयो महर्षयः अनेनैव उपायेन अलौकिकशक्तौ अधिकृताः समभूवन्। आवर्तनस्य जपयज्ञादेर्वा अभ्यासेन यदा वैखरीशब्दस्य समस्ता आगन्तुका मलाः प्रक्षाल्यन्ते, तदा इडा-पिङ्गलयोः सापेक्षं स्तम्भनं भवति, सुषुम्णापन्थाश्च कियान् उन्मुक्तो जायते। ततः प्राणशक्तेः साहाय्येन शोधिता शब्द-शक्तिः सुषुम्णारूपं ब्रह्मपथमाश्रित्य क्रमश ऊर्ध्वगामिनी भवति। सैवेयं शब्दस्य सूक्ष्मा मध्यमा वाऽवस्था। अस्यामेव अवस्थायामनाहतनादः प्रकटते, स्थूलशब्दश्च विराट्प्रवाहेऽस्मिन् निमज्ज्य तेन पूर्यते, चैतन्यञ्च बिभर्ति। अयमेव मन्त्रचैतन्यस्य उन्मेषः। इमामवस्थां प्राप्तः साधको जीवमात्रस्य चित्तवृत्तीः अपरोक्षभावेन शब्दरूपेण जानाति। देश-काल-व्यवधानं शब्दस्येमां स्फूर्तिं निरोद्धुं न क्षमम्। ततः परं प्रातःकालीन-बालसूर्यवत् शब्दब्रह्मरूप आदित्यः साधकस्य आत्मरूपेण इष्टदेवतारूपेण वा प्रकाश्य अन्तराकाशस्थं तमो दूरीकरोति। आगमशास्त्रे इयमेव 'पश्यन्ती वाक्' उच्यते। प्राचीनवैदिकवाङ्मये 'ऋषित्वप्राप्तिः मन्त्र-साक्षात्कारः' इति वा नाम्ना यस्याः यत्र तत्र समुल्लेखो दृश्यते, सैवेय-मवस्था नाम। आत्मदर्शनम्, इष्टदेवदर्शनम्, ज्ञानचक्षुष उन्मीलनम्, शिवनेत्रस्य विकासः, षोडशीकलाया उन्मेषः, सांख्योक्तस्य पुरुषस्य स्वरूपा-वस्थितिरूपं कैवल्यम्—सर्वमिदं पश्यन्तीभूमेर्विविधा अवस्थाः। पश्यन्त्य-पेक्षया पराभूमेः पन्था अत्यन्तं गूढः। अत एवात्र तदालोचनम् अप्रासङ्गिकम्, अनधिकृतचेष्टितञ्च भवेत्।

## योगमार्गो वियोगमार्गश्च

योगस्य वियोगस्य ( विवेकस्य ) वा मार्गयोः परस्परं को भेद इत्यत्र साधारणपाठकानां काचित् विशिष्टा धारणा स्यादिति तु न ज्ञायते। नूनमात्यन्तिकया परमार्थदृष्ट्या नास्ति कश्चिद् भेद इति तु सत्यमेव। किन्तु व्यावहारिकभूमौ तयोः परस्परं भेदो दरीदृश्यते, तदनुसारमेव च सिद्धावपि भेदो जायते। साधारणतो जीवो यस्यामवस्थायां संसारे परिभ्रमति, तत्र स्थूलसूक्ष्मभावौ परस्परं मिलितौ वर्तेते। न केवलमेतदेव, प्रत्युत सूक्ष्मभावे स्थूलस्यांशः स्थूलभावे च सूक्ष्मस्यांशोऽनिवार्यतया ओतप्रोतः। सुतरां विशुद्धदृष्ट्या दृश्यमाने उभयोरेकः कश्चिद् अपरं विहाय नैव स्थातुं क्षमः। दारुणि वह्निरिव, तिले तैलमिव, दुग्धे वा सर्पिरिव स्थूले सूक्ष्मतत्त्वं प्रच्छन्नतया निहितमास्ते। क्रियाविशेषेणास्य स्थूलतः पृथक्करणमावश्यकम्। सांख्यादिशास्त्रानुमोदिता साधनप्रणाली अस्यैव वियोगाख्यस्य विवेकाख्यस्य वा मार्गस्य समर्थिका। वेदान्तसिद्धः पञ्चकोषविवेकोऽपि प्रकारान्तरेण विवेकप्रथान्तर्गत एव। योगिनां मतमिदं यद्वियोगस्यास्य पूर्णतः सिद्धौ सत्याम् उभयत्र योगस्थापनमावश्यकं जायते। विवेकसाधनद्वारा परस्परं पृथग्रूपेण यौ द्वौ पदार्थौ उपलभ्येते, वस्तुतो न तौ पृथक्पदार्थौ। उभावपि एकस्यैव मूलभूतस्य पदार्थस्य पृथगवभासमात्रम्। तत्त्वस्यास्य उपलब्धये योगप्रक्रियाया अवलम्बनमन्तरा न निर्वाहः। स्थूलं लिङ्गं च परस्परमाश्लिष्य यदा चरमावस्थायाम् एकस्मिन् परमे पदार्थे परिणमतस्तदा प्रतीयते यदस्मात् मूलाद्वयभावत एव स्थूलसूक्ष्मयोर्भावयोः विकासः सम्पद्यते।

निदर्शनरूपेणात्र सर्वसुबोधभाषया तत्त्वस्यैकस्य उल्लेखः क्रियते। शास्त्रज्ञाः स्वल्पमात्रमपि आध्यात्मिकविषयज्ञाश्च जानन्ति यत् स्थूलशरीरवत् जीवस्यैकं सूक्ष्ममपि शरीरं भवति। शरीरमिदं साधारणतः स्थूलशरीरेण ईदृक् घनिष्ठतया समाश्लिष्टं वर्तते यद् दीर्घकालं यावद् अभ्यासमन्तरा मनुष्यः केवलमिच्छामात्रेण अमुं स्थूलशरीरतः पृथक्कर्तुं न

पार्येत। सत्यप्येवं स नैकैः कारणैः सहजत एव ततः पृथग्भावमनुभवितुं शक्नुयात्। स्वप्नादिषु, जीवितावस्थाया अनुभवविशेषे, सूक्ष्मदर्शिभिर्दृष्टे मृत्युकालीने अनुभवे वा सूक्ष्मशरीरस्य पृथक्सत्तां स्पष्टत एव अनुभवितुं शक्नुयात्। यथा मन्थनप्रक्रियया तैलपेषण्या तिलेभ्यस्तैलं निष्कास्यते, तथैव प्रक्रियाविशेषेण स्थूलशरीरतोऽपि सूक्ष्मशरीरं पृथक्कर्तुं शक्यते। कामं तत् पूर्णतो न स्यात्, अंशतस्तु प्रायः सर्वे एव अभ्यासिन एतत् कर्तुं शक्नुवन्ति। दशायामस्यां स्थूलशरीरमकर्मण्यवत् प्रस्तरखण्डमिव तिष्ठति, सूक्ष्मशरीरं पुनस्ततो बहिर्निर्गत्य नैकेषु स्थानेषु परिभ्रमद् अन्ते पुनर्यदा स्थूलशरीरं प्रविशति, तदा पुरुषश्चैतन्यमासादयति, तत्र पूर्ववदेव ज्ञान-क्रिये सञ्चरतः। सूक्ष्मशरीरमिदं भौतिकैरावरणैर्न प्रतिरुद्ध्यते, न वा स्थूलजगतः कश्चिदपि नियमस्तं प्रभावयति। केचन योगिनो गृहे बद्धाः स्थूलशरीरं तत्र स्थापयन्तोऽपि सूक्ष्मशरीरद्वारा भित्त्याद्यावरणसीमा अतिक्रम्य वहिर्जगति परिभ्रमितुं शक्नुवन्ति। तदा तेषां स्थूलशरीरं गृहे निष्क्रियं सद् आवद्धं तिष्ठति। कश्चिदपि स्वेन्द्रियैरमुं स्थूलशरीरमनुभवितुं शक्नोति।

निदर्शनेनैतेन सुस्पष्टं यद् गृहे आवद्धं शरीरं स्थूलशरीरम्, ततो निर्गत्य वहिरितस्ततो विचरणशीलञ्च सूक्ष्मं शरीरम्। परस्परसम्बद्धे अपि उभे पृथक् पृथक्। पार्थक्यमिदं वियोगमार्गेण समुपलभ्यते। तथापि एतादृशी अवस्थैका जायते, यदाऽस्य निर्णयो दुष्करो जायते यद् देहोऽयं स्थूलः सूक्ष्मो वा। यतो हि कुत्रचन इदमपि दृश्यते यत् कश्चिद् योगी गृहे आवद्धः सन्नपि यदा गृहान्निर्गतस्तदा गृहे पूर्ववत् स्थूलशरीरमासने समुपविष्टं नासीत्। अर्थात् स समग्रं शरीरमादाय निर्गतः, स्वेच्छया भ्रमन्नासीत्, कैश्चित् स दृष्टोऽपि। येन शरीरेण स गृहान्निर्गत्य भित्त्यादिकमावरणमतिक्रम्य वहिर्गतः, न तत् स्थूलशरीरम्, यतो हि तत् प्रतिघातधर्मविशिष्टं भित्त्यादिकं विभिद्य गन्तुमक्षमम्। परं तन्न सूक्ष्मशरीरम् इत्यपि निश्चितम्। यदि तत् सूक्ष्मशरीरं स्यात्तर्हि स्थूलशरीरस्य निष्क्रियरूपेण आसनसमुपवेशनमावश्यकं भवेत्। योगिन एता-

दृशं देहं 'सिद्धदेहा'ख्यया व्यपदिशन्ति। सिद्धिरियं स्थूल-सूक्ष्मयोः अत्यन्तघनसंश्लेषणेन लभ्यते। अत्र स्थूलसूक्ष्मयोर्धर्माः दृष्टिपथं यान्ति। अतोऽयं देहः प्रकारान्तरेण स्थूलः सूक्ष्मोऽपि वक्तुं शक्यः। किन्तु वस्तुतः स न स्थूलो नाऽपि सूक्ष्मः। अवस्थामिमामधिगन्तुं योगमार्गानु-सरणमावश्यकम्। स्पष्टमेतद्, आरम्भे एतादृशो योगो न सम्भवी। आदौ वियोगमार्गसाधनद्वारा मिश्रसत्तायां वर्तमानयोः द्वयोः सत्तयोः पार्थक्यं करणीयं भवति। ततश्च योगमार्गसाधनेन उभयोः सम्मेलन-पुरस्सरमेकीकरणं साधनीयं भवति।

योग-वियोगमार्गयोः समासत इदमेव रूपम्। इतोऽधिका विषय-स्यास्य विवेचना अप्रासङ्गिकी भवेत्।

## नादानुसन्धानम्

शब्दयोगस्य पूर्वोक्तविवेचनया नादानुसन्धानस्यापि तत्त्वमंशतोऽव-गन्तुं शक्यम्। बद्धो जीवः श्वास-प्रश्वासाधीनो भूत्वा इडा-पिङ्गलामार्गेण गच्छति। तस्य सुषुम्णामार्गः प्रायोऽवरुद्धः। अत एव तस्य इन्द्रियाणि चित्तं च सर्वमपि बहिर्मुखम्। जगतः अन्तस्तले, आकाशमण्डले सततं ध्वन्यमानम् अखण्डनादं स चित्तस्य प्राणानां च विक्षेपेण श्रोतुं न पारयति। किन्तु यदा गुरुकृपातः क्रियाविशेषेण च सुषुम्णामार्ग उन्मुक्तो जायते, तदा प्राणः स्थिरां सूक्ष्मां चावस्थामासाद्य तत्र प्रविशति, तेन शून्यपथा च मन अनाहतध्वनिं शृणोति। निरन्तरं ध्वनेरस्य अनुसरणेन मनः क्रमशो निर्मलं शान्तं च जायते। यदा मनः पूर्णतः स्थैर्यं भजते, तदा नादध्वनिर्न श्रूयते। तदा चिदात्मक आत्मा स्वस्वरूपे स्थितो बाह्यप्रकृतिस्पर्शतो मुक्तिमासादयति।

मूलतो नादस्यैक्येऽपि औपाधिकसम्बन्धात्स विभिन्नस्तरेषु विभक्तः। योगिभिः साधारणतोऽस्य सप्त स्तराः समुल्लिखिताः। प्रणवः ॐ कारो वा उपाधिरहितं शब्दतत्त्वम्। वैयाकरणैः प्राचीनसाधकसम्प्रदायविशेषैश्च

'स्फोट'नाम्ना अस्य व्याख्यानं कृतमस्ति । स्फोट एवायम् अखण्डसत्तारूपस्य ब्रह्मतत्त्वस्य वाचकः । अर्थात् अनेनैव ब्रह्मभावस्य स्फूर्तिर्जायते । प्रणव ईश्वरस्य वाचक इत्यस्यापि इदमेव तात्पर्यम् । वाचकः स्फोटशब्दो 'ब्रह्म'रूपेण वाच्यसत्ता च 'परब्रह्म'रूपेण वर्णिता दृश्यते । अत एव प्रकारान्तरेणेदं वक्तुं शक्यं यत् ब्रह्म एव ब्रह्मणः प्रकाशकम् । स्वप्रकाशं ब्रह्म स्वस्वरूपातिरिक्तेन केनापि पदार्थेन प्रकाशितुमक्षममिति सुस्पष्टतरम् । किन्तु स्फोटः शब्दतत्त्वं वा यावत् जीवस्य कृते अव्यक्तम्, तावत् तेन तस्य किमपि प्रयोजनं न सिद्ध्यति । अत एव योगी यथाविधि ध्वनि-नादौ अवलम्ब्य एनमभिव्यनक्ति । कुण्डलिन्या उद्बोधनमपि अंशत एतादृश-मेवास्ते । मूलाधारतो नादस्य उद्भवः प्रारभ्यते, सहस्रारे च गत्वा स लीयते । साधकस्य मनो यदि नादेनैतेन युक्तं सद् अनायासेन परब्रह्म यावत् गत्वा चिन्मयमाकारं बिभर्ति, चैतन्ये च स्वात्मनो विलयनं वितनुते ।

हठयोग-प्रदीपिकायाम्, योग-तारावलौ अन्येषु च नैकेषु ग्रन्थेषु नादानुसन्धानस्यास्य विस्तृतं वर्णनं दरीदृश्यते ।

## असम्प्रज्ञातः समाधिः

पातञ्जलयोगशास्त्रे असम्प्रज्ञातः समाधिर्द्विधा विभक्तः—१. भव-प्रत्ययः, २. उपायप्रत्ययश्चेति भेदात् । चित्तवृत्तेः सम्यक् निरोध एव तस्य लक्षणम् । चित्तमात्मनो निकटतरम्, उभयोश्च स्वस्वामिभावसम्बन्धो-ऽपि । व्युत्थानदशायां द्रष्टा पुरुषः स्वस्वरूपं विस्मृत्य वृत्तिसङ्कुलेन चेतसा स्वात्मानमभिन्नं मनुते, वृत्त्याकारं च बिभर्ति । किन्तु यदा वृत्तयो निरु-द्ध्यन्ते, तदा तस्य कृते एतादृशं वृत्त्याकारधारणम् असम्भवि । वृत्तिहीनाया-मस्यां दशायां पुरुषः चैतन्यमासाद्य द्रष्टुः साक्षिणो वा रूपेऽवस्थितो भवति । अथवा गभीरेण अज्ञानेन आच्छन्नो भूत्वा एकतो यथा विषय-ज्ञानशून्यो भवति, तथैवापरतः स्वचित्स्वरूपोपलब्धितोऽपि वञ्चितो जायते । शास्त्रानुसारम् इयमेव प्रकृतिलय-दशा जडसमाधि-दशा वा । योगिभिर्नेयं

कदापि काम्या। वृत्तिशून्यत्वादियं यद्यपि असम्प्रज्ञात-समाध्यन्तर्गतैव, तथापि ज्ञानोन्मेषाभावात् नेयं योगावस्था। पतञ्जलिना अयमेव भवप्रत्ययाख्योऽसम्प्रज्ञातसमाधिरुच्यते। प्रकृतिलीनवदेव विदेहदेवता अपि अस्यामेव अवस्थायां तिष्ठन्ति।

साधक-समाजेषु योगिनां वास्तविकी योगावस्था उपायप्रत्ययात्मकेन असम्प्रज्ञातसमाधिरूपेणैव परिचीयते। अत्र उपायो नाम प्रज्ञा, अर्थात् शुद्धज्ञानमेवावधेयम्। सम्यग्ज्ञाने समुत्पद्य निरुद्धे सति योऽसम्प्रज्ञातसमाधिः आविर्भवति, न स ज्ञानानुदयकालीनेन असम्प्रज्ञातसमाधिना तुलनीयः। भवप्रत्ययावस्थायां कियत्कालं यावत् चित्ते निरुद्धे सत्यपि कालान्तरे तदुत्थानम् अवश्यम्भावि। यतो हि तावत्पर्यन्तं चित्तसंस्काराः पूर्णतया तिष्ठन्ति। किन्तु प्रज्ञायाः समुत्पत्तौ क्रमशः संस्कारदाहाद् योऽसम्प्रज्ञातसमाधिः प्रादुर्भवति, तत्र व्युत्थानस्य न काऽपि आशङ्का। वस्तुतः स एव प्रकारान्तरेण कैवल्यस्य पूर्वास्वादो वक्तुं शक्यः।

बौद्धैर्योगिभिः प्रतिसंख्या-ऽप्रतिसंख्यानामकौ निरोधस्य यौ द्वौ प्रकारौ वर्ण्येते, प्रायस्तौ उपायप्रत्ययरूपस्य असम्प्रज्ञातसमाधेस्तुल्यौ। सम्प्रज्ञातसमाधौ प्रवेशमन्तरा असम्प्रज्ञातसमाधेरधिगमः कदापि योगिभिर्न प्रार्थनीयः। अविद्यादिक्लेशान् अदग्ध्वा केवलं वृत्तिनिरोधकरणेनैव पुरुष आत्मस्वरूपेऽवस्थातुं क्षमो न भवति। ज्ञानमन्तरा अविद्याबीजनाशस्य न कोऽप्युपायो वरीवर्ति। क्रियायोगद्वारा अर्थात् तपःस्वाध्यायेश्वरप्रणिधानानां यथाविधि अनुष्ठाने कृतेऽपि अविद्यासंस्कारा न दग्धुं शक्याः। किन्तु एतेन नेदं वक्तुं शक्यं यत् क्रियायोगो निष्फल इति। यतो हि क्रियायोगप्रभावादेव संस्काराणां स्थूलं रूपं छिद्यते, ते च सूक्ष्ममाकारं धारयन्ति। ततः परं प्रसंख्याने ज्ञानाग्नौ वा प्रज्वलिते तूर्णं ते दग्धा जायन्ते, पुनर्जागरणशक्त्या च रहिता भवन्ति। सम्प्रज्ञातसमाधेः प्रत्येकभूमिकायामेव तदाश्रयेण ज्ञानं विकसति। ततः सास्मितभूमौ सालम्बज्ञानस्य चरमा शुद्धिः सम्पद्यते। अस्यैव पारिभाषिकं नाम 'गृहीतसमापत्ति'रिति। श्रद्धा, वीर्यम्, स्मृतिः, समाधिः, प्रज्ञा चेति ज्ञानप्राप्तेः

स्वाभाविकः क्रमः। 'श्रद्धावाँल्लभते ज्ञानम्' इति गीतोक्तवचनेऽपि ज्ञानप्राप्तिमूले श्रद्धैव प्रतिष्ठापिता। अत एव श्रद्धाहीनेन शतशः प्रयतितेऽपि ज्ञानप्राप्तेः सामर्थ्यं नाधिगम्यते। भवप्रत्ययरूपे असम्प्रज्ञातसमाधौ चित्तस्य निरोधे सत्यपि अविद्या न निवर्तते। अविद्यायास्तज्जनितसंज्ञायाश्च वर्तमानत्वे आत्मा न मुच्यत इति योगशास्त्रसिद्धान्तः।

## निर्माणकायः, निर्माणचित्तं च

निर्माणकायः निर्माणचित्तं चेति विषयौ योगशास्त्रे सविशेषं समालोचितौ। उच्चकोटिका योगिनो बहुवारम् एते निर्माय यथावश्यकं कार्यं सम्पादयन्ति। साधारणतो बहवो जना आभ्यामपरिचिताः, यतो हि लौकिकसाहित्ये एतादृशस्य देहस्य चित्तस्य वा वर्णनं कुत्रापि नोपलभ्यते। जगति वयं साधारणतो यैर्देहैः परिचिताः, ते भौतिकदेहा एव। पञ्चभूतानि—ते उपादानरूपाः स्युः, एकमुपादानं शिष्टाश्च सर्वे उपष्टम्भका वा भवेयुः—परस्परं संश्लिष्य स्थूलदेहं विरचयन्ति। रचनाया अस्या मूले भौतिकसंयोगस्य वा मूले देहभृतां जीवानां पूर्वजन्मार्जितानि प्रारब्धानि भवन्ति। प्रारब्धकर्मणा देहोत्पत्तिः। देहस्य आयुः स्थितिकालो वा, तद्देहस्य च यावान् सुख-दुःखभोगो नियतः—एतत्सर्वं प्रारब्धकर्मणैव नियन्त्रितम्। किन्तु योगिनः केवलं स्वसङ्कल्पेनैव अर्थात् प्रारब्धसहयोगमन्तराऽपि देहं निर्मातुं क्षमाः, तथा तैः स निर्मीयतेऽपि। नूनमेतादृशदेहनिर्माणस्य नैकाः पद्धतयः। मन्त्रबलेन, द्रव्यविशेषप्रभावेण, तपसः फलेन, समाधिसिद्धयोगिनो योगप्रभावेण च एतादृशा देहाः निर्मातुं शक्याः। विशिष्टे प्राक्तने वा कर्मणि सति केवलं योनिविशेषे जन्मग्रहणादपि एतादृशो देहः प्राप्यते। दृष्टिभेदेन अमुं निर्माणदेहं केचन 'निर्माणचित्त'मपि व्याहरन्ति। न्यायकुसुमाञ्जलौ श्रीमदुदयनाचार्येण प्रथमस्तवकारम्भे पातञ्जलसम्प्रदायं निर्दिशता 'निर्माणकाय'शब्दः प्रयुक्तः। बौद्धशास्त्रेऽपि सर्वत्र धर्मकायसम्भोगकायाभ्यां सहैव निर्माणकायोऽपि समुल्लिखितो वर्तते। प्राचीनकाले मध्यकाले च बहुभिर्बौद्धपण्डितैः स्वस्वदार्शनिकग्रन्थेषु एतादृशानां विभिन्न-

देहानां विशेषतो वर्णनं कृतमस्ति। अन्वेषणेच्छुभिः आर्यमैत्रेयनाथा-ऽसङ्ग-वसुबन्धु-हरिभद्रादीनाम् आचार्याणां ग्रन्था अवलोकनीयाः। पञ्चशिखाचार्येण एकत्र लिखितमस्ति यत् परमर्षिः कपिलः करुणावशीभूतो निर्माण-चित्तमवलम्ब्य स्वान्तेवासिनं जिज्ञासुम् आसुरिं षष्टितन्त्रमुपदिदेश। निर्माणकाये निर्माणचित्ते च वस्तुतो न कोऽपि भेदः। लौकिकदेहे लौकिक-चित्ते च यादृशो भेदः समुपलभ्यते, योगिनः सङ्कल्पनिर्मिते देहे चित्ते च न तथा भेदः। यतो हि सिद्धयोगिनः सङ्कल्पाद् यादृश आकार उत्पद्यते, आपाततो देहसदृशोऽपि वस्तुतः स चित्तमन्तरा न किमपि वस्तु भवति। स इच्छाशक्तिप्रभावात् प्रभवतीति प्रसिद्धेः।

पूर्वोक्तस्य निर्माणचित्तस्य निर्माणदेहस्य वा ऐक्येऽपि व्यावहारिक-दृष्ट्या तौ विभिन्नौ प्रतिपाद्येते। प्रयोजकचित्तम्, प्रयोज्यचित्तं चेति निर्माणचित्तस्य भेदद्वयं व्यवहारमूलकमेव। योगिनो योगबलेन यत् निर्माणचित्तं समुत्पद्यते, तस्य मुख्यं वैशिष्ट्यमिदमेव यत्तत्र शुक्लः, कृष्णः प्रकारान्तरयुक्तो वा कीदृशोऽपि कर्माशयो न तिष्ठति। उपायान्तरैः रचिते निर्माणचित्ते कीदृशोऽपि साकारः कर्मसंस्कारः संलग्न एव तिष्ठति। अत एव ज्ञानलिप्सोरधिकारिणः शिष्यस्य ज्ञानोपदेशकाले योगिनः एतादृशं चित्तं निर्माय उपदिशन्ति। निर्माण-देहमवलम्ब्य यत् ज्ञानोपदेशादिकं क्रियते, तत्र भ्रम-प्रमादादेः सम्भावना न जायते। वस्तुतोऽयमेव गुरु-देहः। भौतिकदेहेन तत्त्वज्ञानोपदेशः संशय-विपर्ययशून्यो न भवितुं शक्नोति। शुद्धेन अस्मितातत्त्वेन देहोऽयं निर्मीयते। जैनाचार्यैः आचार्य-देहरूपेण यो देहो वर्णितः, स प्रायश एतादृश एव।

## ब्रह्मचर्यम्, ऊर्ध्वरेतस्त्वं च

आध्यात्मिक-साधनायाः समुन्नत्यर्थं ब्रह्मचर्यस्य विशेषतः पालनमत्या-वश्यकम्। वैदिके, तान्त्रिके, बौद्धे, जैने च धर्मे विभिन्नदेशीयविभिन्न-धर्मेषु सम्प्रदायेषु चापि अस्य अत्यावश्यकत्वं स्वीकृतमास्ते। आश्रमचतु-ष्टयस्य व्यवस्थापकैः ऋषिभिरपि बुद्ध्या सर्वप्रथमो ब्रह्मचर्याश्रम एव

परिगणितः। ब्रह्मचर्यपालनमन्तरा शारीरिकं मानसिकम् आध्यात्मिकं वा कीदृशमपि बलं न संगृह्यते। बलसञ्चयमन्तरा च कार्यसिद्ध्याशा गगनकुसुमायिता। तथा चोक्तम्—"नायमात्मा बलहीनेन लभ्यः" इति। अत एव निःसन्दिग्धमेतत् यद् ब्रह्मचर्यमन्तरा नात्मन उपलब्धिः सम्भवेति। ब्रह्मचर्यस्य वास्तविकस्वरूपपर्यालोचनाय बहु वक्तव्यमपेक्ष्यते। लेखगौरवभयादत्र द्वित्राः विषया एव समुपस्थाप्यन्ते।

साधारणा जनाः वीर्यधारणमेव ब्रह्मचर्यमभ्युपगच्छन्ति। नूनं वीर्यधारणं हि ब्रह्मचर्यस्य प्रधानमेकम् अङ्गम्। अस्य च सम्यक्परिपालनेन शिष्टानि सर्वाणि अङ्गानि अनायासेनैव सिद्ध्यन्ति। ये च अष्टाङ्गमैथुनत्यागं ब्रह्मचर्यमामनन्ति, तेऽपि वीर्यरक्षामेव लक्ष्यीकृत्य एतादृशं लक्षणं निर्धारयन्ति। परिच्छिन्नमेतद् ब्रह्मचर्यं योगशास्त्रे यमान्तर्गतं स्वीकृतम्। बौद्धैरपि शीलसम्पत्तौ एतत् प्रधानतया परिगणितम्। जैनाद्यन्यशास्त्रेष्वपि प्राय ईदृगेवेदं दृष्टमास्ते। ऋषिप्रणीते धर्मशास्त्रे गृह्य-धर्मसूत्रादौ च ब्रह्मचारिण आदर्श-दिनचर्याविषये बहूक्तमस्ति।

ये हि ब्रह्मचर्यस्य रहस्यमन्वेष्टुं वाञ्छन्ति, ते साधारणानुसन्धानेन अनायासं ज्ञातुं शक्नुवन्ति यद् बिन्दोः संरक्षणम्, संशोधनम्, उद्बोधनं चेति त्रयमेव ब्रह्मचर्यस्य यथार्थम् उद्देश्यम्। येन ब्रह्मणि ब्रह्मपथे वा सञ्चारो न भवति, न तद् वास्तविकं ब्रह्मचर्यम्। ये शास्त्रसिद्धब्रह्मचर्यसम्पन्नाः, वस्तुतस्ते केवलं ब्रह्मपथे एव सञ्चरन्ति। यतो हि वासनायाः, मिथ्यासङ्कल्पस्य, इन्द्रियचाञ्चल्यस्य, चित्तविक्षेपवृत्तेश्च निवृत्तौ सत्यां बिन्दोर्या आपेक्षिकी साम्यावस्था भवति, सैव ब्रह्मचर्यप्रतिष्ठायाः प्रथमा भूमिः। बिन्दुक्षरणात् संसारः, बिन्दोश्च स्थैर्ये अमृतत्वं मोक्षो वा सिद्ध्यति। यथा गणितशास्त्रे वृत्त-त्रिकोणादीनां केन्द्रमेव 'बिन्दु'रुच्यते, तथैव देहतत्त्वज्ञैरपि देहस्य कोषाणां वा केन्द्रमेव 'बिन्दुः'व्याह्रियते। अन्नमयकोषः स्थूलशरीरं वा यत् समाश्रित्य प्रतितिष्ठते, तदेव अन्नमयकोषस्य केन्द्रं स्थूलबिन्दुर्वा कथ्यते। एवमेव यान् प्राणमय-मनोमय-विज्ञानमयकोषान्

आश्रित्य सूक्ष्मशरीरमिदं प्रतिष्ठितम्, तेषामपि केन्द्ररूपेण एकैको विन्दुर्वर्तते। वेदान्तपरिभाषया साधारणत आनन्दमयकोष एव 'कारणशरीरम्' उच्यते। अस्यापि केन्द्रं स एव अमृतविन्दुः। सर्वेऽपि इमे विन्दवः वस्तुत एकस्यैव महाविन्दोः देशगत-संस्कारगतभेदमात्रम्। यावद् औपाधिको भेदस्तिष्ठति, तावदयं भेदोऽनिवार्यः। अमुं भेदं स्वीकृत्यैव क्रमश एतदतिक्रमचेष्टा विधेया भवति। विन्दोः क्षरण-कारणम् अनिरुद्ध्य ऊर्ध्वगतिस्तु दुरापास्ता, तस्य स्थिरताऽपि असम्भवा। यावत् कोऽपि स्थिररेता न जायते, तावत् स ऊर्ध्वरेतोभूमिमारोढुं न क्षमः। ये च अव्याकृतस्य कामबीजस्य रहस्यं जानन्ति, यैश्च गुरूपदिष्टप्रणाल्या रसतत्त्वं सम्यक् परिशालितमास्ते, तेषां कृते स्फुटमिदं तत्त्वम्। साधारणतः हठयोगिनो वदन्ति यद् विन्दौ स्थिरे प्राणोऽपि स्थिरायते, प्राणे च सुस्थिरे विन्दुः कदापि अस्थिरो न तिष्ठति। एवमेव विन्दुना सह मनसः, मनसा च प्राणस्य परस्परं सम्बन्धो वेदितव्यः। कौशलेन तेषु कस्याप्येकस्य वन्धने साधिते शिष्टयोर्द्वयोः वशीकरणं सुकरं जायते। हठयोगशास्त्रेषु योगवासिष्ठे च एतद्विषयका अन्येऽपि विषयाः समुल्लिखिताः। शास्त्रसिद्धान्तोऽयम् अतितरां सारगर्भः। यतो हि उक्तपूर्वमेतद् यद् एक एव विन्दुः आधार-भेदे तत्र तत्र तेन तेन रूपेण प्रकाशित इति। अत एव साधकस्य पूर्व-संस्कार-योग्यतानुसारं यत्र स्थाने संयमः सम्भवेत्, तेनैव अन्यान्य-स्थानगतानां विक्षेपाणामपि निवृत्तिः सम्भवति, तत्र-तत्रस्थाः विन्दवोऽपि स्थैर्यमासादयन्ति च।

चक्षुर्यदा रूपं पश्यति, श्रवः शब्दं शृणोति, अन्यानि च इन्द्रियाणि यदा स्वस्वविषयान् गृह्णन्ति, तदा तदा वस्तुतो देहमध्यस्थितो विन्दुरेव क्षरितो भूत्वा तत्तत्स्थाने विषयप्रतिभासरूपेण जन्म लभते। विन्दोः क्षरण-मन्तरा विषय-ग्रहणमसम्भवि। अत एव यावद्वयं इन्द्रियमार्गैः विषयान् गृह्णीमः, तावत् लौकिकमान्यतानुसारं वीर्यरक्षायाः सम्भवेऽपि व्यभिचारो भवत्येव। विषयभेदे विनष्टे सति यदा सर्वत्र ब्रह्मसाक्षात्कारो जायते, तदैव मन्तव्यं यद् व्यभिचारो निवृत्तः, साधकश्च ब्रह्मचर्ये स्थित इति।

विन्दुक्षरणमन्तरा अखण्डस्य कूटस्थस्य ब्रह्मतत्त्वस्य अस्माकं पुरतः स्वयंप्रकाशोऽसम्भवी। अत एव ब्रह्मणो या याः स्वयंप्रकाशावस्थाः वर्तन्ते, यासु च एकमात्रं विशुद्धं चैतन्यमेव स्वयमेव पुरः प्रकाशितं भवति, ता एव ब्रह्मचर्यस्य अवस्थाः। तासु अवस्थासु विन्दोः क्षरणेऽपि तत् सरलमार्गेण सम्पद्यते। तेन अद्वैतभावे व्याघातो न जायते, भेदप्रतीतिः नोत्पद्यते, विषयसत्ताऽपि च न भासते। अवस्थेयं रहस्यदृष्ट्या 'उपकुर्वाणब्रह्मचर्य'स्य अवस्था। इमामेव अनुकृत्य समाजेऽपि उपकुर्वाणब्रह्मचर्यस्य व्यवस्था विहिताऽऽस्ते। गुणभेदतः उपकुर्वाण-ब्रह्मचर्यस्य भेदत्रयम्—शुक्लम्, रक्तम्, कृष्णं चेति। नात्र एतद् विवेचनीयमस्ति। किन्तु यद्धि नैष्ठिकब्रह्मचर्यं कथ्यते, तत्र विन्दुक्षरणं सर्वथाऽसम्भवि, यतस्तत्र विन्दोः क्षरणं न भवति। अत एव सा निर्गुणब्रह्मचर्यावस्था अव्यक्तभावे परिगण्यते। सामाजिकदृष्ट्या विवाहत्यागो विवाहिते च स्वपत्न्या सह संयतवर्तनम्—उभयमेव ब्रह्मचर्यस्वरूपम्। चित्ते स्वल्पाऽपि परस्त्रीविषयिणी आसक्तिः ब्रह्मचर्यावस्थातः पतनहेतुः, यतो हि चित्तस्य सेयमवस्था व्यभिचारान्तर्गता मता। स्वदारे निरतस्यापि चित्तसंयमतारतम्येन गृहस्थस्यापि ब्रह्मचर्यं सात्त्विक-राजस-तामसभेदेन त्रिविधमाख्यातमास्ते।

सम्यक् शोधनमन्तरा अन्यक्रियाकौशलेन स्थिरीकृतेऽपि विन्दौ स्थैर्यस्थायित्वं न सम्भवति। यतो हि संस्कारात्मकस्य मलस्याकर्षणेन निर्दिष्टस्थितिकाले समतीते सति विन्दुः पुनः पूर्ववत् नीचैः गतिशीलो जायते। वैदिक्यां तान्त्रिक्यां च साधनपद्धतौ विन्दुशोधनस्य नैके प्रकाराः निर्दिष्टाः। महायान-साम्प्रदायिकेषु बौद्धेष्वपि वज्रयान-मन्त्रयान-सहजयानसाधनमार्गेषु अस्य सूक्ष्मा अकृत्रिमाश्च उपाया वर्णिताः। हठयोगे विशेषाधिकारप्राप्तये विन्दोः स्थैर्यसाधकानामेषाम् उपायानाम् अवलम्बनमन्तरा कार्यं न सिद्ध्यति। विन्दौ शुद्धे सत्येव स्वभावतः स्थैर्यं जायते। स्थिरविन्दुरयं कयाचन अलौकिकप्रक्रियया विक्षुब्धः क्रियेत चेत्तदा स स्वभावत एव ऊर्ध्वं सञ्चरति। विन्दोः सेयम् ऊर्ध्वगतिः प्रबुद्ध-

कुण्डलिन्याः सहस्रारस्य आकर्षणाद् ऊर्ध्वप्रवाहस्य नामान्तरम्। बिन्दुः क्रमशः स्थूलभावं परित्यज्य सूक्ष्म-सूक्ष्मतर-सूक्ष्मतमाः अवस्थाः प्राप्नोति, अन्ते च सहस्रदलकमलस्य कर्णिकायां स्थितेन महाबिन्दुना सम्मिलति। अयमेव चिच्चन्द्रमसः षोडशीकलारूपः अमृतबिन्दुः। नाभिग्रन्थिं विभिद्य बिन्दोः ऊर्ध्वस्रोतसि संश्लेषकरणमेव उपनयनस्य दीक्षायाश्च वा वास्तविकं रहस्यम्। नाभिचक्रत उपरि उत्थानमन्तरा बिन्दोः मध्याकर्षणचक्रे स्थितिरेव संसृतेरपरः पर्यायः। ब्रह्मचर्यसाधनया बिन्दुं विषयजगद्भ्यः पृथक्कृत्य, तं च पावयित्वा ब्रह्ममार्गे नियोजनमेव संसारात् मुक्तिप्राप्तेः एकमात्रोपायः। बिन्दुर्यदा विक्षुब्धो भूत्वा ऊर्ध्वं सञ्चरति, तदैव नादस्य विकासो जायते। अत एव नाभिचक्रादुपरि स्वाभाविकः खेलो नाद-ज्योतीरूपाभ्यामनुभूयते। इयमेव शब्दब्रह्मणः सञ्चारावस्था। इतः परं नाद-ज्योतिषादेः परिपूर्णतया परमभावस्य यः समुदयः, स एव निजबोध-रूपस्य आत्मज्ञानस्य विकासः। विषयस्यास्य विशेषविवरणं 'दीक्षातत्त्व'स्य तत्सम्बद्धायाः षडध्वशुद्धेश्च आलोचनाया अङ्गीभूतम्।

भगवता पतञ्जलिना निर्दिष्टमेतद् यद् ब्रह्मचर्यधारणया वीर्यप्राप्तिर्जायते इति। वस्तुतो ब्रह्मचारिणः अवस्थाया एव वर्णनं योगसूत्रे प्रकारान्तरेण श्रद्धारूपे कृतमस्ति। ब्रह्मचर्यपालनेन सम्भूतवीर्यस्य प्राप्तौ सत्यां देहे दिव्यतेजसो विद्युच्छक्तेर्वा विकासो जायते। तेजसोऽस्य आधिक्येन चित्तचाञ्चल्यं विनश्यति, प्राणानां गतिः स्थिरायते, चित्तस्य च ध्येये एकतानप्रवाहः प्रादुर्भवति। अस्यैव नामान्तरं ध्यानं स्मृतिर्वा। उपासनाया इदमेव स्वरूपम्। क्रमशः सर्वेषामेतेषां घनीभावे चित्तस्य समाधिदशा प्रादुर्भवति। समाहिते च चित्ते ध्येयवस्तु आवरणमुक्तं सद् उज्ज्वलरूपेण स्वज्योतिषा उद्भासितं प्रकाशितं च जायते। तदा चित्तं तिरोदधाति, केवलं ध्येयमेव तेनानुभूयते। ध्येयमिदं चित्तस्यैव आकारविशेषः, नैतत् चित्ताद् वस्त्वन्तरम्। प्रकाशोऽयं 'प्रज्ञायाः उन्मेषः' 'ज्ञानचक्षुषः अनावरणम्' वा कथ्यते। प्रज्ञायामस्यां निरुद्धायां यः असम्प्रज्ञातः समाधिः समुदेति,

वस्तुतः स एव 'योगा'भिधानार्हः। एतेन योगस्य पूर्णावस्थाप्राप्तये ब्रह्मचर्यं नितान्तमावश्यकमिति समासतः स्फुटीभवति।

## सिद्धिभ्यः पारमार्थिक-हानिः

'आध्यात्मिकमार्गे सिद्धीनां किं स्थानम् ? विषयेऽत्र विभिन्न-देशेषु विभिन्न-कालेषु च विभिन्ना विचारास्तैस्तैः प्रकटिताः। अत्र तेषां चर्चा अप्रासङ्गिको भवेत्। तथापि सिद्धीनां किं सार्थक्यम्, का च सिद्धिः कदा आध्यात्मिकसाधनायां बाधिका मन्तव्या इत्यस्यात्र विवरणमावश्यकम्। बहुभिर्मन्यते यत् 'सिद्धिर्न वाञ्छनीया, तत्प्राप्त्या मुमुक्षु-योगिनः योगमार्गे अन्तराया आविर्भवन्ति' इति। धारणाया अस्या मूले किञ्चित्तथ्यं वर्तते, नास्त्यत्र संशीतिलेशः। किन्तु प्रायश इयं भ्रान्ता प्रतिभाति। यतो हि प्रत्येकस्य वस्तुनः सद् असत् चेति उभयविधो व्यवहारो भवितुं शक्नोति। व्यवहारदोषेण वस्तुसत्ता नाक्राम्यते। अग्नेर्निन्दनम्, तत्त्यागो वा न प्रेक्षावतः कर्म। स हि स्वभावानुसारमवश्यं कार्यं करिष्यति। किन्तु यः तत्स्वभावं ज्ञात्वा तन्नियन्त्रणं च विधाय स्वाभीष्टं साधयति, स एव विचक्षणः कथ्यते। अग्निना सद् असच्च उभयविधं कार्यं सम्पद्यते। किन्तु एतावता अग्निनिन्दया कार्यं न सेत्स्यति। शक्तिमात्रस्य इयमेव स्थितिर्विज्ञेया।

## मधुमती भूमिः, योगविघ्नाश्च

भगवतः पतञ्जलेर्नाम येन योगसम्प्रदायेन संश्लिष्टम्, तत्र चतुर्विधा योगिनो निर्दिष्टाः। तेषु प्राथमिकावस्थो योगी 'प्रथमकल्पिकः' उच्यते। एते हि अष्टाङ्गयोगे सम्पन्ने सत्येव योगभूमिं सद्यः प्रविशन्ति। अत एव एते सर्वतो निम्नश्रेण्यां परिगण्यन्ते। एते स्थूलसमाधिसिद्धाः अर्थात् वितर्कानुगतसमाधौ अधिकृतत्वात् एषु अन्तर्ज्योतिषः स्फुरणं प्रारब्धमास्ते। चित्तेऽसमाहिते ज्योतिष उन्मेषोऽसम्भवी। किन्तु ज्योतिष आविर्भावे सत्यपि क्रमशस्तस्य शुद्धिरपेक्षिता। यावत् तन्न विशुद्ध्यति,

तावत् तत्त्वानि विजित्य ( स्ववशीकृत्य ) स्वयं योगस्य उच्चभूमिः नासादयितुं शक्या।

प्रथमकल्पिकावस्थायाः परं योगिनः 'मधुमती'नामिकायां द्वितीयायां योगभूमिकायां प्रविशन्ति। तदा तेषां चित्तं नितरां विशुद्धं भवति। अत एव पदस्थाः देवाः ऋषयः अप्सरस अन्ये च बहवोऽधिकारिणः तेषां पुरः समुपस्थाय विविधैः अलौकिकैः प्रलोभनैस्तान् लोभयितुं यतन्ते। एतादृश्यामवस्थायां साधारणस्य मानवस्य हृदि आसक्तेः अहङ्कारस्य वा उदयः स्वाभाविकः। किन्तु यो योगी गुणातीतात्मस्वरूपे प्रतिष्ठातुं समुद्यतः, तस्य कृते सर्वाणि क्षुद्राणि प्रलोभनानि सर्वथा समुपेक्ष्याणि। यदा ते संयता भूत्वा, चेतसि बलसञ्चयं कृत्वा साधनपथे अग्रेसरन्ति, तदा क्रमशस्ते भयैरेभिः मुच्यन्ते। इयं 'मधुमती'नामिका अवस्थैव योगिनां परीक्षावसरः। प्रथमावस्थायां चित्तं यतो न सम्यग् विशुद्ध्यति, अतस्तत्र देवतादिद्वारा एतादृशानि प्रलोभनानि न संभाव्यन्ते। तृतीयावस्थायां पुनः योगिनः स्वसङ्कल्पेनैव समस्तानि प्रलोभनीयानि वस्तूनि निर्मातुं शक्नुवन्ति, स्वयं साधको योगी दिव्यभावापन्नो भवति; अतस्तत्रापि योगिनां कृते प्रलोभनानामेतेषां विशेषत आशङ्का न भवति।

तृतीयावस्थायां योगिनः विशोधितेन प्रज्ञाज्योतिषा पञ्चभूतानां पञ्चावस्थाः, पञ्चेन्द्रियाणि तेषां पञ्चावस्थाश्च अधिकृत्य भूतजयिनः इन्द्रियजयिनश्च भवन्ति। भूतजयेन ते वज्रवत्-सिद्धदेहं प्राप्नुवन्ति। एतादृशानां योगिनां देहेषु पञ्चभूतकृतः आघातो न जायते, अर्थात् भौतिकपदार्थानां गुणाः योगिदेहे स्वीयाः क्रिया न कुर्वन्ति। इन्द्रियजयद्वारा मनोजयित्वं, विकरणभावश्च प्राप्यते, प्रधानं मूलप्रकृतिर्वा विजीयते। योगशास्त्रे सिद्धीनामासां वर्णनं 'मधुप्रतीक'नाम्ना कृतमस्ति। यैर्योगिभिः इन्द्रियजयित्वं मनोजयित्वं चासाद्य इत्थम् अलौकिक्यः सिद्धयः अधिगताः, प्रायशस्ते शक्तौ शुद्धौ च नूनं देवेभ्य उन्नताः। अत एव साधारणदेवताद्वारा तेषां विलोभनस्य सम्भावनैव न जागर्ति। विशेषतः

पञ्चभूतेषु पञ्चेन्द्रियेषु च अधिकृतत्वात् सृष्टिस्थितिसंहारशक्तिरपि एतादृशानां योगिनां करतलगता भवति। चित्ते विमलवैराग्यस्य समुदयात् ते कमपि अभावं नानुभवन्ति, यन्निवृत्तये तेषांप्रलोभनविशेषग्रस्तता सम्भाव्येत।

**हठयोगः**

कठिनतरमेतत् निरूपणं यत् हठयोगस्यास्य आद्या आचार्याः के आसन्निति। भारतीयानामाचार्याणां सिद्धान्तोऽयं यत् सर्वस्यापि शास्त्रस्य प्रथमा प्रवृत्तिः परमेश्वरादेव जायते। अतः हठयोगोऽपि ईश्वरप्रोक्तः कथ्यते। हठयोगिनः कथयन्ति यद् आदिनाथो भगवान् सदाशिव एव हठयोगस्य प्रवर्तक इति। येन अद्भुतेन उपायेन मत्स्येन्द्रनाथेन इयं विद्या अधिगता, तस्यैतिहासिकं कियत् मूल्यमिति वक्तुमशक्यम्। तथापि विषयेऽत्र हठयोगस्य बहुषु ग्रन्थेषु एका किंवदन्ती श्रूयते। मत्स्येन्द्रनाथवत् गोरक्षनाथ-चर्पटि-जालन्धर-कनेरी-चतुरङ्गी-विचारनाथप्रभृतिभिः नाथ-सम्प्रदायाचार्यैः हठयोगे निष्णातैर्भूत्वा जगत्ययं प्रचारितः। सम्प्रदायस्यास्य इतिहासशास्त्राणाम् आलोचनया हठविज्ञानस्य नैके ज्ञातव्या विषयाः अवगम्यन्ते। गोरक्षशतकम्, गोरक्षसंहिता, सिद्धसिद्धान्त-पद्धतिः, सिद्ध-सिद्धान्तसंग्रहः, गोरक्षसिद्धान्तसंग्रहः, अमनस्कः, योगबीजम्, हठयोग-प्रदीपिका, हठतत्त्व-कौमुदी, घेरण्डसंहिता, निरञ्जनपुराणम् एवमाद्याः साम्प्रदायिका ग्रन्थाश्च अद्यापि समुपलभ्यन्ते।

मत्स्येन्द्रनाथ-गोरक्षनाथतः पूर्वमपि हठयोगः प्रचलित आसीदित्यत्र न सन्देहः। कथ्यते यत् पूर्वकाले मार्कण्डेयमुनिवराः योगस्यास्य साधका आसन्—

"द्विधा हठः स्यादेकस्तु गोरक्षादिसुसाधकैः।
अन्यो मृकण्डुपुत्राद्यैः साधितो हठसंज्ञकः॥" इति।

श्रीगोरक्षोपदिष्टस्य हठयोगस्य षडङ्गानि—तत्र यमनियमौ न गृह्येते। किन्तु श्रीमार्कण्डेयमुनयः अष्टाङ्गहठयोगस्य पक्षपातिन आसन्। योगतत्त्वोपनिषद्यपि हठयोगस्य अष्टौ अङ्गानि प्रोक्तानि।

हठयोगस्य पूर्णपरिणती राजयोगः। पातञ्जलदर्शने अयमेव 'असम्प्रज्ञात-समाधि'-नाम्ना वर्णितः। हठयोगस्य नियमितानुष्ठानेन राजयोगः सिद्ध्यति। अत एव आचार्याः हठयोगं राजयोगस्य सोपानत्वेन वर्णयन्ति। राजयोग-प्रभावादेव साधनशीलो जीवः काल-पराक्रमतो मुच्यते। 'हठयोगप्रदीपिका'मतानुसारं समाधिः, उन्मनी, मनोन्मनी, अमरत्वम्, लयः, तत्त्वम्, परमपदम्, अमनस्कम्, अद्वैतम्, निरालम्बः, निरञ्जनम्, जीवन्मुक्तिः, सहजस्थितिः, तुरीयस्थितिश्चेति—एतत्सर्वं राजयोगस्यैव पर्यायान्तरम्। स्वात्मारामेण स्पष्टमेवोक्तं यत् कुम्भकद्वारा प्राणस्य गतौ रुद्धायां चित्तं निरालम्बं जायते। ब्रह्मानन्देनापि स्वव्याख्यायां स्पष्टमुल्लिखितं यत् यदा सम्प्रज्ञात-समाध्युत्तरं ब्रह्माकारा स्थितिः समुदेति, तदा पर-वैराग्यधारणया चित्तस्य सम्यक् निरोधनमावश्यकं जायते। एतेनेदं स्फुटीभवति यत् हठयोगेन स्वभावतः राजयोगो विकसति।

देहशुद्धिः हठयोगस्य अव्यवहितमुद्देश्यम्। योगिपरिभाषानुसारम् इयं 'घटशुद्धि'नाम्ना प्रथिता। घेरण्डसंहितायामुक्तं यत् हठशास्त्रोक्तैः धौति-बस्ति-नेति-त्राटक-नौलि-कपालभाति-नामकैः षट्कर्मभिः देहः शुद्ध्यति। देहस्य दृढता स्थिरता च आसन-मुद्राभ्यासेन सिद्ध्यति। प्रत्याहार-प्राणायाम-ध्यान-समाध्यभ्यासेन च देहस्य क्रमशो धीरता, लघुता, आत्म-प्रत्यक्षम्, निर्लेपता च सुसम्पद्यते। अनेके आचार्याः प्रवदन्ति यद् आसनम्, प्राणायामः कुम्भको वा, मुद्राकरणं वा, नादानुसन्धानश्चेति चत्वारो हठयोगस्य प्रधानप्रतिपाद्या विषया इति। एषु आसनस्य विधि-वदभ्यासेन देहस्य स्थिरता, नीरोगता, लघुता च सम्पद्यते। 'आसनेन रजो हन्ति' सिद्धान्तोऽयं योगिसम्प्रदाये सुप्रसिद्धः। दीर्घकालं यावत् विधिवद् आसनाभ्यासेन रजोगुणजनिता देहस्य चञ्चलता मनसश्च अस्थिरता दूरीभवति। रोगो विक्षेपस्य प्रधानमेकं कारणम्, आसना-भ्यासेन च स निवर्तते। अभ्यासेनानेन तमोगुणक्रियया समुत्पन्ना देहस्य गुरुता दूरीभवति। देहे सात्त्विकतेजोवृद्ध्या तमोगुणो ह्रसति, स्वभाव-

तश्चैव देहो लघुतामापद्यते। पुनःपुनरभ्यासेन स्थिरीकृते आसने प्राणायामक्रिया सहजसाध्या जायते। किन्तु नाडीचक्रस्य विविधप्रकारैः आच्छन्नत्वाद् वायुः सुषुम्णामार्गे न प्रविशति। अत एव प्राणसंग्रहात् पूर्वं नाडीशोधनमावश्यकम्। नाड्या विशुद्धिमन्तरा उन्मनीभावस्य मनोनिवृत्तेर्वा न काऽप्याशा। विधिपूर्वकं प्राणायामसाधनेन सुषुम्णान्तर्गतः सकलोऽपि मलः क्षाल्यते। शाण्डिल्योपनिषदनुसारं नाडीशोधनप्राणायामो बहुमासं यावत् नित्यं द्विवारं विधेय इति[1]। देहस्य कृशता, कान्तिः, इच्छानुसारं वायुधारणसामर्थ्यम्, अग्निवृद्धिः, नादाभिव्यक्तिः, आरोग्यश्चेति क्रमशो यदा सर्वाणीमानि लक्षणानि आविर्भवन्ति, तदा अवधेयं यत् सर्वा नाड्यः शुद्धा इति[2]। त्रिशिखब्राह्मणोपनिषदि चोक्तं यत् यम-नियमासनानाम् अशुद्धौ प्राणायामो यथार्थतया न कर्तुं शक्यः। अत एव तदा नाडीशुद्धेश्चेष्टा अनुचिता। वात-पित्त-कफेषु एकस्य द्वयोर्वा आधिक्ये षट्कर्मसाहाय्यमावश्यकम्। घटशुद्धिवत् स्थूलतानाशादिकमपि हठयोगस्यैकम् अव्यवहितं फलम्। याज्ञवल्क्यप्रभृतय आचार्याः प्रवदन्ति यत् यदा केवलं प्राणायामेनैव समस्ता मला क्षाल्यन्ते, तदा षट्कर्माणि नात्यन्तमावश्यकानीति।

मुद्रासाधनस्य उद्देश्योऽयं यदेतेन ब्रह्मद्वारेण सुषुम्णामुखेन वा निद्रिता कुल कुण्डलिनी जागृता भूत्वा ऊर्ध्वमुत्तिष्ठति। कुण्डलिनी-जागरणानन्तरं चक्राणां ग्रन्थीनाञ्च भेदनं भवति, प्राणोऽनायासं सुषुम्णां प्रविशति,

---

१. टीकाकृतां मतं यत् त्रिचत्वारिंशद्दिवसानि यावत्, मासत्रयम्, मासचतुष्टयम्, सप्तमासं वर्षं वा यावत् प्राणायामोऽयं विधेय इति।

२. हठयोगप्रदीपिकायां दशमोपनिषदि च कृशताविचारोऽयमुल्लिखितः। शाण्डिल्योपनिषदि कृशतास्थाने लघुता प्रयुक्ता वर्तते। योगतत्त्वोपनिषदि च कृशता-लघुते सममेव पठिते। शिवसंहितामतानुसारं नाडीशुद्धौ दोषाः नश्यन्ति; देहे साम्यम्, सुगन्धः कान्तिश्च प्रस्फुटन्ति; स्वरे च माधुर्यं सिद्ध्यतीति।

चित्तं निरालम्बं जायते, मृत्युभयं च दूरीभवति। आधारशक्तिरूपा कुण्डलिनी समस्तस्य योगाभ्यासस्य मूलमवलम्बनम्। मुद्रा चेयम् अष्टविधा। आसामभ्यासस्य फलम् अष्टैश्वर्यप्राप्तिश्चेति।

समासतो योगविषयविशेषाणामेतेषां गुरुशास्त्रगम्यं रहस्यं प्रकटयितुमत्र स्वल्पीयान् यत्नो विहितः। विशेषस्तु अनुभवैकगम्य इति कृतं तदधिकविवेचनेन।

—०:❀:०—

# श्रीभारतधर्म-महामण्डल-शास्त्रप्रकाश-विभागद्वारा प्रकाशितानि पुस्तकानि

धर्मकल्पद्रुम—प्र० ख० २), द्वि० ख० १॥), तृ० ख० २), च० ख० २), प० ख० २), ष० ख० ३॥), स० ख० २), अ० ख० ३॥), धर्मकल्पद्रुम, प्रथम-द्वितीयखण्डे सहैव, रायल एडी०—५), प्रवीण दृष्टिमें नवीन भारत ख० प्र०द्वि २), नवीन दृष्टि में प्रवीण भारत १), साधनचन्द्रिका १॥।), शास्त्र-चन्द्रिका १॥), धर्मचन्द्रिका १।), आर्यगौरव ॥), नीतिचन्द्रिका ॥), धर्म-प्रश्नोत्तरी ।), चतुर्दश-लोक-रहस्य ।), गीतार्थचन्द्रिका सजिल्द ३), अजिल्द २॥), सनातनधर्मदीपिका ॥।), धर्मविज्ञान प्र० ख० ५), द्वि० ख० ४), तृ० ख० ४), सती चरित्र-चन्द्रिका २), नित्यकर्म-चन्द्रिका ।), धर्मसोपान ।), धर्मकर्म-दीपिका ।), सदाचार-सोपान ━), कन्याशिक्षा-सोपान ━), ब्रह्मचर्य-सोपान ।), साधन-सोपान ॥), शास्त्र-सोपान ।), उपदेशपारि-जात ॥), कल्किपुराण १॥), पातञ्जलयोगदर्शन ३), महामंडल-रहस्य १॥) मन्त्रयोगसंहिता १), हठयोगसंहिता ॥), तत्त्वबोध ≈), स्तोत्र-कुसुमाञ्जलि ।), भगवद्गीता प्रथम खंड १), विष्णुगीता १), सूर्यगीता ॥), शक्तिगीता १), धीशगीता ॥।), शंभुगीता १), संन्यासगीता १), गुरुगीता ।), कर्ममीमांसादर्शन प्र० ख० १॥), द्वि० ख० २), तृ० ख० ५), कर्ममीमांसादर्शनम् संस्कृत—२), रामगीता २॥), कहावत-रत्नाकर साधा० रायल १०), रामायण तुलसीकृत १॥) दैवीमीमांसा-दर्शन प्र० भा० ३॥), द्वि० भा० ५), त्रिवेदी सन्ध्या ।≈), गोत्रत-तीर्थमहिमा ॥), मार्कण्डेयपुराण प्र० ख० १), द्वितीय ख० १), तृ० ख० १), ऋजुपाणिनीयम् ॥।), संगीत-सुधाकर ।), पुराणरहस्य १॥) संन्यासधर्मपद्धति १॥), पातञ्जलयोगदर्शनम् संस्कृत—४)।

———

# भारतीय-दर्शनानामुद्धारः संस्कारश्च

## — श्री दयानन्दस्वामिनः —

शिल्पसमुन्नत्या बहिर्जगतः समुन्नतिरिव दर्शनशास्त्रसमुन्नयने मानवसमाजे अन्तर्जगतः समुन्नतिरवधार्यते। येन मनुष्यसमाजेन यदा यावती च शिल्पसमुन्नतिः संसाधिता, स हि तदानीं तावत्परिणामत एव बहिर्जगत्सम्बन्धीयसमुन्नतिमार्गेऽग्रेसर्तुं सामर्थ्यं लेभे। साकं शिल्पोन्नत्या मानवसमाजे पदार्थविज्ञानस्योन्नतिरपि नूनमेव सम्पद्यते। पदार्थविज्ञानसमुन्नतिर्यद्यपि न सर्वोच्चस्थानमधिकरोति, तथापि तदुन्नतिपरिणाममनुसृत्य मनुष्यसमाजे बहिर्जगदुन्नतिपरिणतिरनुमीयते।

सूक्ष्मातिसूक्ष्मस्यातीन्द्रियस्य आन्तरिकराज्यस्य कृते दर्शनशास्त्रमेव एकमवलम्बनम्। स्थूलराज्यातीतानन्तवैचित्र्यपरिपूर्ण-सूक्ष्मराज्यरूपानन्तपारावारावबोधाय ध्रुवतारायते किल दर्शनशास्त्रम्। सूक्ष्मराज्ये प्रविविक्षुभिर्जिज्ञासुभिः साधकैर्दर्शनशास्त्रसाहाय्येनैव सूक्ष्मराज्ये प्रवेष्टुं शक्यते। यथा किल नेत्रविरहितो मानवः स्थूलस्यापि जगतो न किमपि वस्तु द्रष्टुं पारयति, तथैव दर्शनशास्त्रानभिज्ञः सूक्ष्मस्य जगतः किञ्चिदपि वस्तु नैव परिज्ञातुं शक्नोति।

अतो ह्येतेन इदमवधार्यते यत् यद्धि सूक्ष्मस्य जगतो वास्तविकं तत्त्वमवबोधयति, तदेव दर्शनशास्त्रमित्युच्यते।

जागतिकेतिवृत्तपर्यालोचनेनेदं परिज्ञायते, यद् यदा मानवजातिराध्यात्मिके जगति अग्रेसर्तुमशक्नोत्, तदैव तत्र दर्शनशास्त्रालोचनं प्रारब्धम्। वैदिकधर्मावलम्बिनि मानवसमाजे यथा दर्शनशास्त्रसमुन्नतिर्न तथा कुत्रापि मनुष्यजाताविति निश्चप्रचम्। सनातनधर्मावलम्बिनो मुनयो योगसाधनेन स्वान्तःकरणविशुद्धिमधिगम्य अन्तर्जगति प्रवेष्टुमचेष्टन्त। पूज्यचरणा महर्षयस्तपोयोगशक्तिसाहाय्येन अन्तर्दृष्टिं लब्ध्वा जगत्कल्याणाय सूत्राणि निर्माय दर्शनशास्त्राणि रचितवन्त आसन्। ते किल पूर्वमन्ताराज्याधिपत्यं स्थापयित्वा जिज्ञासुजनहित-

साधनाय दर्शनानि प्रणिन्युः। किन्तु जागतिक्यो विभिन्ना जातयः शिक्षिता अपि तथाकर्तुमपारयन्त्या दूरत एवान्तर्जगत ईषदवभासं प्राप्य तद्विषयक-वास्तविकसत्यमन्वेष्टुमचेष्टन्त। पृथ्वीतलनिवासिन्यः सकला अपि शिक्षितजातयो यथा वहिर्जगदाश्रयेण सूक्ष्मजगत्प्रवेशमकामयन्त, न तथा प्राचीना महर्षयः। तैस्तु प्रथममन्तर्जगतो विस्तृतं परिज्ञानमासाद्य सर्वसाधारणलोकहितकामनया तज्ज्ञानं बहिर्जगति प्रकाशयितुं यत्नोऽक्रियत। अत एव वैदिकदर्शनानि सप्तधा विभज्य परिपूर्णतामासादितवन्ति। परन्तु सांसारिकान्यान्यशिक्षितजाति-प्रादुर्भूतदर्शनशास्त्राणि वैचित्र्यमयानि असम्पूर्णानि चेति।

सृष्टितत्त्वपर्यालोचनेन इदमनायासेनैव परिज्ञातुं शक्यते यत् त्रिगुणमय्याः प्रकृतेः राज्येषु सर्वत्रैव त्रयो विभागा विद्यन्ते। वात-पित्त-कफ-नामतः शरीर-रक्षायास्त्रिविधा शक्तिः। त्रिविधं कर्मेत्यादि। एवं च सप्तभावावलम्बनतः सृष्टिराज्येषु सप्त धातवः, सप्त वर्णाः, सप्त वाराः, सप्त ऊर्ध्वलोकाः, सप्त अधो-लोकाः, सप्त रत्नानि, सप्त अज्ञानभूमयः, सप्त ज्ञानभूमयश्चेत्यादि सप्त विभागाः सर्वेष्वपि स्थानेषु परिलक्ष्यन्ते। एवं रीत्या सप्त ज्ञानभूमीरतिक्रम्य क्रमेण परमं पद-मधिकर्तुं यस्य वैदिकदर्शन-विज्ञानस्य आविर्भावः, तदपि सप्तधा विभक्तमव-धेयम्। एषु सप्तसु दर्शनेषु द्वे पदार्थवाद-दर्शने, द्वे सांख्यप्रवचन-दर्शने, त्रीणि मीमांसा-दर्शनानि च। आधुनिकेषु ग्रन्थेषु यत् षड्दर्शननामोल्लेखः, स हि जैन-बौद्धग्रन्थानुकरणपरिणामः। यतस्तदीयदर्शनानि षड्-दर्शननाम्ना अभिहितानि। अतो नास्तिकदर्शनानुकृत्या वैदिकदर्शनान्यपि षड्दर्शन-नाम्ना विख्यातानि बभूवुः। कुत्राप्यार्षग्रन्थेनैव आर्षदर्शनानां षड्दर्शनसंज्ञा समुपलभ्यते। बहुभ्यः शताब्दीभ्यो मध्यमीमांसादर्शनसिद्धान्तग्रन्थस्य लुप्तत्वात् नैव तस्य कोऽपि सिद्धान्तग्रन्थः समुपलभ्यते स्म। कारणादस्मादेव अज्ञानमूलकः षड्दर्शनशब्द आर्षसाहित्येऽपि प्रचचाल।

वस्तुतो न्याय-वैशेषिकौ पदार्थवाददर्शने, योग-सांख्यौ सांख्यप्रवचननामके, वेदोक्तकर्मोपासनाज्ञानं चेति त्रयमनुसृत्य कर्ममीमांसा दैवीमीमांसा-ब्रह्ममीमांसा चेति त्रयं मिलित्वा सप्त दर्शनानि स्वतः सिद्धयन्ति।

दर्शनग्रन्थानामभावात् दार्शनिकशिक्षाया विलोपाच्च सनातनधर्मस्य वर्तमाना दुर्गतिरभूत्। इदानीं किल स्वधर्मेऽविश्वासः, परधर्मग्रहणसमीहा, सदाचार-वर्जनम्, पूज्यपाद-महर्षीणामादेशस्योपहासः, वेदेषु, पुराणेषु च श्रद्धाऽभावः, सम्प्रदायानां पारस्परिको विरोधः, अलौकिकेऽन्ताराज्येऽविश्वासः, पारलौकिकभयराहित्यम्, देवर्षि-पितृणामस्तित्वे सन्देहः, कर्मकाण्डोपरि अनास्था, साधुषु ब्राह्मणेषु च भक्तेरभावः, वर्णाश्रमधर्मोपेक्षा, त्रिलोकपवित्रकारिणो हिन्दुस्त्री-धर्मस्य मूलच्छेदे प्रवृत्तिः, जप-ध्यानादिसाधनमार्गेषु अरुचिः, इत्याद्य आर्यत्वनाशकारिणः प्रबला दोषा ये समुत्पद्यन्ते, ते किल वैदिकदर्शन-शिक्षाभावादेव इत्यत्र नाणीयानपि संशयलेशः।

इदानीं किल न्यायदर्शन-शिक्षा नैव पूर्णरूपेण सम्पद्यते। पुरेव नैवेदानीं प्राचीनस्य न्यायस्य शिक्षापद्धतिः कुत्राप्यवलोक्यते। अत्र नात्युक्तिलेशोऽपि। सम्प्रति हि प्राचीनन्यायस्थाने नव्यन्यायस्यैवाधिकः प्रचारो दृश्यते। वैशेषिक-दर्शनस्योपयोगिन आर्षभाष्यस्याभावात् तदीया चर्चा प्रायशो लुप्तप्रायैव प्रतिभाति।

योगदर्शनन्तु नितरां कठिनम्। तेन च सहान्तर्जगतो महिष्ठः सम्बन्धः। अतो याथातथ्येन तदध्ययनाध्यापने प्रायो निरस्तमासाते। यतो हि योगदर्शनाध्यापकेन नूनमेव योगिना भवितव्यम्। अद्यत्वे तादृशस्य वास्तविकयोगिनोऽभावात् योगदर्शनशिक्षाऽपि लुप्तप्रायैव।

सांख्यदर्शनस्यावस्थाऽपि नितरां शोचनीयतामावहति। केचन तदाधुनिक-दर्शनमामनन्ति। अपरे प्रक्षिप्तविषयपरिपूर्णं तदिति व्याहृत्य घृणां प्रकुर्वते। अन्ये नास्तिकं दर्शनं तदिति घोषयन्ति। अनेकसहस्रसंवत्सरेभ्यस्तदुपरि आर्षभाष्यानुपलब्ध्या, जैनधर्मावलम्बिना आचार्येण निर्मितस्य आधुनिकभाष्यस्योपलब्ध्या च एतादृशं विशृङ्खलत्वं समुपस्थितमिति निश्चप्रचम्। सांख्यदर्शनभाष्यकर्ता विज्ञानभिक्षुर्जैनाचार्यो बौद्धाचार्यो वेत्यत्र न कश्चन संशयः। यतोऽसौ येन भावेन भावितः सांख्यदर्शनभाष्यमरीरचत्, तेन सुस्पष्टमिदं ज्ञायते यदसौ सनातन-धर्मावलम्बी नासीत्। तेनाप्रासङ्गिकीं रीतिमाश्रित्य वैदिकी हिंसा निन्दिता; लौकिकमलौकिकं च प्रत्यक्षविज्ञानं परिवर्तयता ईश्वरसिद्धिसम्बन्धे च अनुमिति-

सिद्धान्तं प्रतिपाद्य सनातनशास्त्रोक्त-देवतादिखण्डनं यत् समनुष्ठितं तदधीत्य निरपेक्षः कोऽपि दार्शनिक इदमङ्गीकरिष्यत्येव यदसौ सनातनधर्मविरोधिनः कस्याप्यन्यस्य सम्प्रदायस्य आचार्य आसीदिति। सांख्यदर्शनस्योपरि प्रकाशितानां टीकानां प्रणेतारोऽपि जैनाचार्यविज्ञानभिक्षुमतमेवानुसरन्तोऽभूवन्निति मन्महे ।

दर्शनशास्त्रवास्तविकप्रचारं समनुष्ठातुं प्राचीनन्यायदर्शनस्य, महर्षीणामभिप्रायानुसारिणा भाष्येण संयोजितस्य वैशेषिकदर्शनस्य च विशिष्टप्रचारो नितरामावश्यकः। भगवद्व्यासकृत-भाष्यमवलम्ब्य योगिनो महापुरुषस्य द्वारा प्रणीतभाष्यसंवलितस्य योगदर्शनस्यापि प्रचार आवश्यकः। सांख्यदर्शनभाष्यमपि सूत्रकाराभिप्रायमनुसृत्य तत्त्वज्ञानिनो महात्मनः साहाय्येन नूतनपद्धत्या प्रणीय प्रचारणीयमास्ते ।

त्रिष्वपि मीमांसादर्शनेषु घोरविप्लवः समुपस्थितो निभाल्यते। पूज्यचरणमहर्षिजैमिनिकृतं कर्ममीमांसा-दर्शनमतिविस्तृतमपि असम्पूर्णमेवास्ते। जैमिनीये कर्ममीमांसादर्शने तु वैदिककर्मकाण्डविज्ञानमेव सुचारुरूपतो वर्णितमालोक्यते। किन्तु वेदोक्तयज्ञानां प्रचारस्य लुप्तप्रायत्वादेतद्दर्शनेन नैवास्माकं कस्याप्युपकारस्य सम्भावना।

किं स्वरूपो धर्मः, साधारणविशेषधर्मयोः को भेदः, कश्चाश्रमधर्मः, पुरुषधर्मो नारीधर्मश्च कः, जन्मान्तरवादस्य किं विज्ञानम्, पारलौकिकी गतिश्च कीदृशी, किं च संसाररहस्यम्, षोडशसंस्कारविज्ञानं किम्, संस्कारशुद्धिद्वारा कथमिव क्रियाशुद्धिः, उदभिज्जादियोनिभ्यो मानवयोनिं यावत् क्रमशो जीवः कथमिव प्रवेशं प्राप्नोति, मानवः पुण्यकर्मणा कथमिवाभ्युदयं निःश्रेयसं चाधिगच्छति, कर्मणः कियन्तो भेदाः, क्रियाशुद्धिं द्वारीकृत्य मनुष्यः किमिव विमुच्यते—इत्यादयो विषयाः कर्ममीमांसादर्शन-प्रतिपाद्याः सन्ति। एतादृशमीमांसादर्शनस्य सिद्धान्तग्रन्थो बहोः कालाद् विलुप्तो बभूव। इदानीं काले किल श्रीभारतधर्ममहामण्डलनेतृणां सुप्रयत्नेनैकः सुविस्तृतः सूत्रग्रन्थः समुपलब्धः। तदीयं भाष्यं हि संस्कृतभाषया निबद्धं प्रकाशितं चापि ।

यद्यपि कर्ममीमांसा विलुप्ताऽऽसीत्, किन्तु तदीयो ह्येको वृहदंशः समुपलब्धोऽभवत्। परन्तु दैवीमीमांसाया मध्यमीमांसाऽपरनामिकाया भक्तिमीमांसा-

पराभिधानाया वा कोऽपि ग्रन्थो नैव समुपलभ्यते स्म। अद्यत्वे तदीयोऽपि सिद्धान्तभूतः सूत्रग्रन्थः समुपलब्धः। तत्र संस्कृतभाष्यं प्रणीतं प्रकाशितञ्चापि। भक्तिः क्रियाख्या, तस्याश्च कति भेदप्रकाराः, उपासनया मुक्तेः कथमिव सम्भावना, भगवतः किमानन्दमयं स्वरूपम्, तस्य च ब्रह्मेशविराडिति रूपत्रितये को भेदः, भक्तेः प्रधानाचार्याणां महर्षीणां भक्तिविषये कानि कानि स्वतन्त्र-मतानि, सर्गस्य किं सुविस्तृतं रहस्यम्, अध्यात्माधिदैवाधिभूतसृष्टिश्च का, के च ऋषयः, के च देवा देव्यश्च, के पितरः, तैश्च जगतः कीदृशः सम्बन्धः, अवताराः कति विधाः, भक्त्या मुक्तिः कथं सम्भवति, कानि च चतुः-प्रकाराणि योगलक्षणानि, उपासनायाः कियन्तो भेदप्रकाराः, भक्त्युपासनाश्रयेण साधकः कथमिव मुक्तिं लभते, कर्ममीमांसा-दैवीमीमांसा-ब्रह्ममीमांसानां च प्रत्येकं किमन्तिमं लक्ष्यम्—इत्यादिविषया दर्शनशास्त्रेऽत्र समुपवर्णिताः। एतस्यैव दर्शन-शास्त्रस्य लोपेन योगोपासनयोरैक्यं संसाधयितुं समुन्नता ज्ञानिनोऽपि भ्रान्ता अदृश्यन्त।

सप्तम-ज्ञानभूमेरन्तिमं दर्शनं हि वेदान्तापरनामकं ब्रह्ममीमांसादर्शनमास्ते। तत्रात्युत्तमं भाष्यं भगवता श्रीशङ्कराचार्येण प्रणीतमुपलभ्यते। किन्तु बहोः कालात् दैवीमीमांसादर्शनस्य लुप्तप्रायत्वात् उपासकसम्प्रदायाचार्या अद्वैतवादं द्वैतवादस्वरूपेण परिणमयितुमचेष्टन्त। अतः कारणात् वेदान्तविचारे बह्व्यो-ऽसुविधाः समुत्पद्यन्त। यदि मध्यमीमांसापरनामकं दैवीमीमांसादर्शनं विलुप्त-प्रायं नाभविष्यत्, तदा द्वैताद्वैतवादयोरेतावान् विरोधो न समुदैष्यत्।

न्यायदर्शनस्य आर्षभाष्यमतीव विस्तृतं समुपलभ्यते। वैशेषिकदर्शनस्य संस्कृतभाष्यं प्रणीयते। योगदर्शनस्य पूर्वप्रणीतविस्तृतभाष्यस्य केचनांशा 'विद्या-रत्नाकर'नाम्नि संस्कृत-मासिकपत्रे प्रागपि प्रकाशिता आसते।

सांख्यदर्शनस्य पूज्यपाद-महर्षिमतमनुसृत्य प्रणीतसंस्कृतभाष्यस्य किया-नंशः पूर्वोक्तपत्रे प्रकाशितः, यमधीत्य शिक्षितमण्डली विस्मिता सती सम्प्रति स्वीकरोतीदं यत् सांख्यदर्शनमास्तिकदर्शनमास्ते। एतदिदानीं सर्वैरेव ऐकवाक्येन स्वीक्रियते। कर्ममीमांसादर्शनं संस्कृतभाष्यसंवलितं त्वरितमेव प्रकाशमेति। मध्यमीमांसापरनामकं दैवीमीमांसादर्शनं चापि ससंस्कृतभाष्यं

प्राकट्यं नीयते। वेदान्तदर्शनोपरि समन्वयनामकं भाष्यं संस्कृतभाषामाश्रित्य प्रकाशं नेष्यते। प्राचीनार्यमतसमुद्धरणपुरस्सरम् अन्यान्य-निम्नज्ञानभूमीनां समस्तदर्शनोक्तज्ञानभूमीनां च याथातथ्यविज्ञानमनुसृत्य सर्वाङ्गसुन्दरं वेदान्त-दर्शनभाष्यं निर्मातुं प्रयतिष्यते। एतेषां सप्तविधदर्शनानां प्रचाराय शिक्षणाय च सप्तदर्शन-संस्कृतभाष्य-प्रणयनकार्यमहरहोऽग्रेसरतां प्राप्नोति।

अनेकैर्विद्वद्भिरिदमाज्ञप्तं यत् ज्ञानभूमिक्रमानुसारेण पूर्वं न्यायवैशेषिकदर्शनयोः सभाष्यप्रकाशनमुचितमिति। किन्तु दर्शनद्वयस्यैतस्य हिन्दीभाष्यं सामान्यतः प्रचारितमास्ते। तथापि तस्य भाष्यद्वयस्य सविस्तरप्रकाशनावश्यकत्वेऽपि नैव तेन विद्वत्पाठकानां समुचितश्चित्तविनोदो भवितुमर्हति। विशेषतो योगदर्शनं सर्वदर्शनाविरुद्धम्। अतस्तस्यैव योगदर्शनस्य संस्कृतभाष्यं प्रकाश्यते।

उपर्युक्तसप्तदर्शनभाष्यग्रन्थप्रकाशनेन साकमेव योगस्य क्रियासिद्धांशसम्ब-न्धीयाः पञ्च ग्रन्था हिन्दीभाषानुवादसहिताः प्रकाशनीया सन्ति। तत्र मन्त्रयोग-संहिताया हिन्दीसंस्करणं समुदितमास्ते। उपासनामूलभित्तिरूपयोगस्य क्रियासि-द्धांशा मन्त्रयोग-हठयोग-लययोग-राजयोगाश्चेति चतुर्धा विभक्ताः। चतसृणामप्ये-तासां पद्धतीनां पृथक् पृथगङ्गानि ध्यानानि अधिकाराश्च निर्णीता विद्यन्ते।

नामरूपावलम्बनेन निर्णीता साधनपद्धतिर्मन्त्रयोगनाम्ना समाम्नाता। मन्त्र-योगस्याङ्गानि षोडशधा विभक्तानि। तदीयं ध्यानं स्थूलमित्युच्यते। स्थूलशरीर-साहाय्यतः चित्तवृत्तिनिरोधप्रकारो हठयोगः। स च सप्तधा विभक्तः। तदीयं ध्यानं ज्योतिर्ध्यानमभिधीयते। ततोऽपि समुन्नतो लययोगः। सकलशरीरेषु व्याप्नुवन्त्या जगत्प्रसविन्याः कुलकुण्डलिन्याः शक्तेर्गुरूपदेशं द्वारीकृत्य जागरणं विधाय सहस्रारे विलयेन चित्तवृत्तिनिरोधप्रकारो लययोग इत्यभिधीयते। स च नवधा विभक्तः। तदीयं ध्यानं बिन्दुध्याननाम्ना समाम्नातम्। राजयोगस्तु सर्वाभ्यर्हितः।

पूर्वोक्तास्त्रिविधा अपि साधकाः समुन्नतायामवस्थायां राजयोगसाहाय्य-माश्रयन्ति। राजयोगे केवलया विचारशक्त्यैव चित्तवृत्तिनिरोधः क्रियते। स हि षोडशभिरङ्गैर्विभक्तः, तस्य च ध्यानं ब्रह्मध्यानमित्युच्यते। उपर्युक्तत्रिविधयोग-पद्धतिसमाधिः सविकल्पः। केवलो राजयोगसमाधिरेव निर्विकल्पः समाम्नातः। चतुर्विधानामपि उपर्युक्त-योगपद्धतीनामङ्गोपाङ्गानि वेदार्षसंहिता-पुराण-तन्त्रादिषु

बहुत्र समुपलभ्यन्ते। परन्तु प्रत्येकस्याधिकारानुसारतः क्रियापद्धतयो यथाक्रमं न कुत्रापि समुपलभ्यन्ते स्म। पुरा किल गुरुशिष्यसम्प्रदायस्य समुन्नतत्वात् साधनविभागो नासीदावश्यकः। परमद्यत्वे तासां चतुर्विधसाधनप्रणालीनां पृथक् पृथक् सिद्धान्तग्रन्थानुपलब्ध्या योगपथपथिकेषु उपासकसम्प्रदायेषु च घोरातिघोरो विप्लवः समुपस्थितः।

सम्प्रति मन्त्र-हठ-लय-राजयोगानां पृथक् पृथक् योगसंहिता-सिद्धान्तग्रन्था गुरुकृपातः समुपलब्धाः। तेषु च प्रत्येकस्यापि साधनपद्धतयः सुचारुरूपतः सविस्तरं समुपवर्णिताः सन्ति।

तत्तद्योगपद्धतीनामवलम्बनपूर्वकं शिष्यशिक्षणाय 'योगप्रवेशिका'नाम चैको ग्रन्थोऽपि विरचितः। पूर्वोक्ता एते पञ्चापि ग्रन्था "विद्या-रत्नाकर"-नामक-संस्कृतमासिकपत्रे प्रकाशिताः। किन्तु हिन्दी-संस्कृतभाष्यसंयोजितास्ते पृथक् पृथगपि प्रकाशमेष्यन्ति।

सप्तानां दर्शनानां पञ्चानां योगग्रन्थानां च संस्कृत-हिन्दीभाष्यपूर्वकप्रकाशनेन दार्शनिकस्य जगतो सुमहती समुन्नतिः संसाधिता स्यादित्यत्र नाणीयानपि संशीतिलव इति।

योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

भाष्यकाराः पूज्यपादाः

महर्षि-स्वामि-श्रीज्ञानानन्दमहाराजाः



( श्रीभारतधर्म-महामण्डल-संस्थापकाः )

आविर्भाव-कालः १९०२ वैं० ]

[ तिरोभाव-कालः २००७ वैं०

# योगदर्शनं किम्, किं वाऽस्य दर्शनान्तरेभ्यो वैशिष्ट्यम् ?

— श्री ज्ञानानन्दस्वामिनः —

सच्चिदानन्दमयमनाद्यनन्तं ब्रह्म सदैकरूपं ज्ञानस्वरूपं निष्क्रियं सृष्टेरतीतं च। नैव तत् का चित् क्रिया स्पृशति। न च तत्र कस्य चिदपि क्लेशस्य सम्भावना। भूतभविष्यद्वर्तमानकालेषु सदैकरूपं तत्। इच्छानिच्छारूपया तदीयेच्छामय्या शक्त्या सृष्टिस्थितिप्रलयाः सम्पद्यन्ते। सर्ग-स्थितिदशायां सर्वशक्तिसम्पन्नं तद् ब्रह्म यं भावमवलम्ब्य सर्गादिकार्यकलापं विधत्ते, तदवस्थानामैव ईश्वर इति। सर्गाभावदशायां निष्क्रियप्रशान्तावस्थाया ब्रह्मेति नामधेयम्, "अहं ममेतिवत्" अर्थात् अहं ममशक्तिश्चेति व्याह्रीयमाणे यथा शक्ति-शक्तिमतोरभेदः, तथैव ब्रह्मणि तदीयत्रिगुणमयशक्तौ च महर्षिभिरभेदोऽङ्गीकृतः प्रमाणितश्च।

संक्षेपतोऽवधेयमिदं यत् निर्गुणनिष्क्रियब्रह्मभावे ब्रह्मशक्तिः साम्यावस्थां प्राप्ता तिरोधत्ते। सगुणब्रह्मापरनामके ईश्वरभावे सा त्रिगुणरूपं बिभ्राणा प्रकाशमेति। लीलामयस्य सर्वशक्तेर्भगवतः परमेश्वरस्य या शक्तिः संसारमुत्पादयति, सैव महाशक्तिः, महाविद्या, प्रकृतिः, शक्तिश्चेत्युच्यते। सृष्टिप्रारम्भदशायां निष्क्रियरूप-शान्तावस्थायां वा क्रियास्वरूपसर्गे जायमाने यया कारणरूपिण्या शक्त्या कम्पनमाविर्भूतम्, तस्याः स्वतन्त्ररूपं सत्ताद्वयमवधार्यम्। यस्य सृष्टिविधातुः समीहया

सृष्टिरूपा क्रिया समुत्पद्यते, तस्यैव नाम परमेश्वर ईश्वरो वा । तस्य इच्छारूपशक्तेर्नाम प्रकृतिरिति[1] ।

यथा समुद्रे तरङ्गेषु समुत्पद्यमानेषु तरङ्गाणां समुद्रस्य च पृथक् पृथक् सत्ताऽवधार्यते, तथैव समुद्रस्वरूपस्येश्वरस्य तरङ्गस्वरूपजीवानां च सत्ता स्वतन्त्ररूपेण प्रतिभाति । गम्भीरप्रशान्तसमुद्ररूपे परमेश्वरे तरङ्गस्वरूपजीवेषु च न कोऽपि वास्तविको भेदः । परमविद्यया हेतुभूतया प्रत्येकोऽपि तरङ्गरूपो जीवः स्वीयां स्वतन्त्रसत्तामभ्यमन्यत । चैतन्यस्वरूपो जीवोऽविद्यया यद्धि स्वीयां स्वतन्त्रसत्तामन्वभवत्, अहङ्कारवशगोऽसौ यद्धि स्वीयं स्वतन्त्रकेन्द्रं समस्थापयत्, अल्पज्ञरूपं तत् स्वाधीनं केन्द्रमेव जीवस्य जीवत्वमिति । सर्वशक्तिशालिनः श्रीमतो भगवतः परमेश्वरस्याधीनत्वमधिगता विद्यारूपिणी महाशक्तिः किल सृष्टि-स्थिति-लयक्रियां विदधाति । परन्तु जीवदशा तद्भिन्नैव । जीवविमोहयित्र्या अविद्यायाः प्रभाववशगो जीवश्चैतन्यस्वरूपोऽपि सृष्टिपाशे प्रसज्जते, स्वयमात्मानं प्रकृतिवदभिमन्यते च । सत्त्वरजस्तमोरूपेषु त्रिष्वपि गुणेषु निमग्नो जीव आत्मानं त्रिगुणमयं मन्यते । सुतरां जीवबन्धनकारिणी अनादिरविद्यैव । तयैव कारणभूतया जीवोऽल्पज्ञतां प्राप्तोऽहङ्कारवशवर्ती च भूत्वा निजां स्वाधीनसत्तामभिमन्यते । एतदवस्थानामैव जीव इति । फलतो जीवोऽविद्याग्रस्तः, विद्यां च स्ववशे स्थापयिता परमेश्वर ईश्वरो वेति । सुतरां प्रकृतेरधीनो जीवः, यदधीना प्रकृतिः स ईश्वरश्चेति ।

---

१. प्रणवः किलैतत्कार्यसम्बन्धनिबन्धनः । यत्र किमपि कार्यं तत्र नूनं कम्पनेन भवितव्यम् । कम्पने जायमाने शब्दः समुत्पद्यते । सर्गादिकारणरूपकार्यस्य ध्वनिरेव ॐकारः । साम्यावस्थायां प्रकृतौ येन मनो नीयते, स एव योगी प्रणवध्वनिश्रवणाधिकारी भवति ।

सर्वशक्तिसम्पन्नः परमात्मा यदा स्वीयाम् इच्छानिच्छारूपां विद्यारूपिणीं महाशक्तिं द्वारीकृत्य ब्रह्माण्डमसृजत्, तदानीं सर्वतः प्रथममाकाशः सम्भूतः, आकाशाद् वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी च। एतत्समष्टिः पञ्चतत्त्वम्। एतेनैव संसारोत्पत्तिः। आदिकारणरूपिण्याः त्रिगुणमय्या अनादिप्रकृत्या एव पञ्चानां तत्त्वानां जायमानत्वात् तान्यपि त्रिगुणानि स्वतःसिद्धानि च। पञ्चतत्त्वानां सत्त्वांशतोऽन्तःकरणसमुत्पत्तिः। रजोंऽशतः पञ्चप्राणा अजायन्त। अन्तःकरणे चित्तं मनो बुद्धिरहङ्कारश्च अन्तर्भवन्ति। तत्र च चित्ताहङ्कारौ मनोबुद्ध्योरन्तर्विभागौ। अर्थात् मनसोऽन्तर्विभागश्चित्तम्, बुद्धेश्चान्तर्विभागोऽहङ्कारः। सुतरां मनोबुद्धिचित्ताहङ्काराणां समष्टिस्वरूपमन्तःकरणमुच्यते। अन्तःकरणस्यापि त्रिगुणात्मकत्वात् सूक्ष्मदर्शिनो योगिनस्तस्यापि चातुर्विध्यमाकलयन्ति। सत्त्वाद् बुद्धिः, रजसो मनः, तमसश्च चित्ताहङ्कारौ।

योगदर्शनं किल चित्तरूपान्तःकरणस्य मनो बुद्धिरहङ्कारश्चेति विभागत्रयमङ्गीकुरुते। पञ्चभूतानां गुणाः किल तन्मात्राशब्देनोच्यन्ते। अर्थात् आकाशस्य शब्दः, वायोः स्पर्शः, तेजसो रूपम्, जलस्य रसः, पृथिव्या गन्धश्च। इमे पञ्चगुणा एव पञ्चतन्मात्राः प्रोक्ताः। तन्मात्रासाहाय्येन सर्गो विस्तृतिमवाप। शब्द-स्पर्श-रूप-रस-गन्धेभ्यः क्रमशः श्रोत्र-त्वक्-चक्षू-रस-जिह्वा-नामधेयानि पञ्च ज्ञानेन्द्रियाणि समाविर्भूतानि। एतानि ज्ञानेन्द्रियाणि तन्मात्रा सत्त्वांशतः समुदपद्यन्तेति विज्ञेयम्। एतत्तत्त्वानां रजोगुणांशतः पञ्च कर्मेन्द्रियाणां समुत्पत्तिः। अर्थात् आकाशस्य रजोंऽशतो वाक्, वायुरजोंऽशतः पाणी, तेजोरजोंऽशात् पादौ, जलस्य रजोंऽशत उपस्थम्, पृथिव्या रजसः अंशेन पायुरिति। एतत्पञ्चभूतविस्तृत्या समस्तसर्गो-

त्पत्तिः । यदैतानि पञ्चभूतानि सूक्ष्मावस्थायां पृथक् पृथक् तिष्ठन्ति, तदानीं तान्यगोचराणि अपञ्चीकृतानि मन्यन्ते । यदा तानि परस्परं सम्मिलन्ति, तर्हि स्थूलपञ्चभूतानि भूत्वा दृष्टिगोचरीभवन्ति । एकतत्त्व-स्यार्धभागः, अन्येषां च प्रत्येकस्यैकैको भागो मिलित्वा पञ्चीकृत-पञ्च-भूतान्युच्यन्ते । इमानि पञ्चीकृतमहाभूतानि स्थूलतां प्राप्य दृष्टि-गोचरतामापद्यन्ते ।

सगुण-ब्रह्मापरनामकस्य परमात्मनः पुरुषस्य वा त्रिगुणमय्या महामायायाः प्रकृतेर्वा समीहया सङ्गत्या च सर्गः समुत्पद्यत इति वेद-तत्सम्मतशास्त्राणि चैकवाक्यतया स्वीकुर्वन्ति । यद्यपि शास्त्रेषु विभिन्न-रूपाणि वर्णानान्युपलभ्यन्ते, किन्तु सर्वेषामाशय एक एव । सर्वैरेव सर्वशक्तिसम्पन्नं पूर्णब्रह्म पुरुषो वा निष्क्रियः स्वतन्त्रश्च समाम्नातः ; त्रिगुणमयी प्रकृतिरेव सृष्टिकारणभूता व्याख्याता । सांख्यदर्शनेन कारणरूपा प्रकृतिश्चतुर्विंशतिसंख्याकैस्तत्त्वैर्विभक्ता । एषा प्रकृति-विस्तृतिः वेदान्तदर्शनेन पञ्चकोषनाम्ना व्याख्याता । यथा सांख्यदर्श-नेन चतुर्विंशतितत्त्वत उपरतिरेव मुक्तिः स्वीकृता, तथैव वेदान्तदर्शनेन पञ्चकोषेभ्य उपराम एव ब्रह्मसदभावः समाम्नातः । सर्वेषामपि शास्त्राणां लक्ष्यं सिद्धान्तो वा एक एव । केवलं साधनविभागः, अर्थात् मुक्तिपदप्राप्तेरुपायः शास्त्रैर्विभिन्नरूपेणाङ्गीकृतः । सर्वप्रथमं यदा चैतन्यरूपो जीवः अविद्यापाशबद्धो भूत्वा आत्मानं प्रकृतिवदभ्यमन्यत, तदा कारणशरीर-समुत्पत्तिः । अन्तःकरणम् , पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणाश्चेति मिलित्वा सूक्ष्मशरीरसंज्ञामलभन्त। सूक्ष्मपञ्चतत्त्वानां पञ्चीकरणप्रक्रियया समुत्पन्नैः पृथ्वी-जलाग्नि-वाय्वाकाशैः स्थूलपञ्चभूतैः स्थूलं किल शरीरं समुदपद्यत । स्थूलशरीर-मिदं जीवस्य देहपातानन्तरं शवरूपमत्रैव तिष्ठति । सूक्ष्मशरीरविशिष्टो जोवो जन्मान्तरं प्रतिपद्यते । स्थूलं शरीरमेतत् सूक्ष्मशरीरविस्तार-

मात्रमवधेयम्। जीवो यानि कर्माणि करोति, भुङ्क्ते भविष्यद्भोगाय सञ्चिनोति वा, तेषां सर्वेषां कर्मणां हि संस्कारान् स्वीये सूक्ष्मशरीरे संगृह्णाति। ते च संस्कारा जीवान्तःकरणे तिष्ठन्ति। चैतन्यरूपो जीवो यावदात्मानमन्तःकरणस्वरूपं मन्यते, तावच्चान्तःकरणे बद्ध-स्तिष्ठति। यावच्चैष भ्रममूलकः सम्बन्धोऽस्य स्थिरः, न तावदस्य सुख-दुःखरूपकर्मतो विमुक्तिः, नैव तावदस्य गमागमचक्र-भ्रमणविरामः।

जीवो ह्यविद्याग्रस्तः सन् परब्रह्मतः परमात्मनो भिन्नमिवात्मानं मन्यते। एतद्विभिन्नतामपहाय यतो ब्रह्मतो जीवो निर्गतस्तत्रैव तस्य पुनरानयनं योग इत्युच्यते। सुतरां जीवस्य परमात्मनि विलय एव योगः। एवं किल जीवं मुक्तिपदं प्रापयितुं वेदशास्त्रैर्यावन्ति साधनानि समुपवर्णितानि, तानि मन्त्रयोग-हठयोग-लययोग-राजयोगनाम्ना चतुर्धा विभक्तानि। शास्त्रोक्तानां नाममन्त्राणां जपेन भगवद्रूपाणां च ध्यानेन चित्तवृत्तिं निरुद्ध्य मुक्तिपथाग्रेसरणप्रकारो मन्त्रयोगः। शारीरिक-क्रियाकलापैः चित्तवृत्तिनिरोधतो मुक्तिमार्गाश्रयणं हठयोगः। षट्चक्र-भेदपूर्वकं बहिर्मुखीनां शक्तीनां ब्रह्माण्डे पिण्डे वा विलयनमेव लययोगः। केवलबुद्धिसाहाय्येन ब्रह्मविद्याविचारद्वारा चित्तवृत्तेरुपरमं विधाय मुक्तिपदप्राप्तिः किल राजयोग इति[1]।

उक्ताश्चत्वारः साधनमार्गा यत्र भित्तौ प्रतिष्ठितास्तद्विवरणं सप्तापि दर्शनानि पुष्णन्ति। तेषु महर्षिपतञ्जलिप्रणीतेन योगदर्शनेन योगसाधनमार्ग-क्रियासिद्धांशाः सार्वभौमदृष्ट्या सुनिरूपिताः सन्ति। महर्षि-पतञ्जलिना स्वीयं दर्शनं चतुर्भिः प्रकरणैर्विभक्तम्। प्रथमप्रकरणे योगसमाधिवर्णनम्, द्वितीये योगानुकूल-प्रतिकूल-गुण-क्रियाविवृतिः।

१. एतच्चतुर्विधयोगसाधनानां सुविस्तृतज्ञानाधिगमाय चत्वारस्तत्तद्योग-संहिताग्रन्था निभालनीयाः।

तृतीये योग-विभूतीनां चतुर्थे च कैवल्यस्य अर्थात् योगसाधनलक्ष्यस्य वर्णनमास्ते ।

सर्गकार्यतो लयक्रिया विपरीता । अर्थात् अनुलोमतः सृष्टिः, विलोमतश्च लयः । सर्गारम्भकाले ईश्वरतः प्रकृतिः, प्रकृतेर्महत्तत्त्वम् , महत्तत्त्वादहंतत्त्वम् , अहंतत्त्वान्मनः, मनसः आकाशः, आकाशाद् वायुः, वायोस्तेजः, तेजसो जलम् , जलात् पृथ्वी च समजायन्त । किन्तु लयदशायां सर्वमेतद् वैपरीत्यं लभते । अर्थात् संसारे भावान्तरप्राप्ते पृथ्वी जले, जलमग्नौ, अग्निर्वायौ, वायुराकाशे, आकाशो मनसि, मनः अहंतत्त्वे, तत् महत्तत्त्वे, तत् प्रकृतौ, प्रकृतिश्चेश्वरे विलीय ब्रह्मत्वं प्रपद्यन्ते । योगशास्त्रे सृष्टिलयकारणमन्तःकरणमेव समाम्नातम् । यथा किलान्तःकरणवृत्तीनां बहिर्जगत्सम्बन्धसत्त्वात् सृष्टिविस्तारः, तथैव तासामेव वृत्तीनां निरोधतो लयरूपं मुक्तिपदमधिगम्यते ।

सृष्टिदशायामन्तःकरणस्य किं स्वरूपा वृत्तयो भवन्ति, योगशास्त्रोक्तमुक्तिपदमधिगन्तुं च कथमिव परिवर्तनं जायत इति विचारणीयम् । सदसत्स्वरूप-पुण्यपापविचारेण वृत्तीनां क्लिष्टा अक्लिष्टाश्चेति भेदद्वयम् । जीवो याभिः काम-क्रोध-हिंसा-ऽहंकार-द्वेषादीनां पापमूलकानां संग्रहं विधत्ते, ताः क्लिष्टाः । याभिश्च दया-मैत्री-मुदिता-सरलता-क्षमाशीलतादीनां सुखदायक-पुण्यानां सञ्चयं प्रकुरुते, ता अक्लिष्टा योगशास्त्रेऽङ्गीकृताः ।

यथा सदसद्भेदेन अन्तःकरणवृत्तीनां भेदद्वयमास्ते, तथैव गुणभेदेन अन्तःकरणस्य पञ्चावस्था भूमयो वा विद्यन्ते । प्रथमा तमोभूमिः साऽभिमता, यत्र मनसि ज्ञानांशोऽत्यल्पीयान् दृश्यते, मनश्च प्रग्रहहीनोऽश्व इवोन्मत्तीभूय इतस्ततो भ्राम्यति । तदवस्थं मनो मूढसंज्ञामवाप्नोति । द्वितीया रजोभूमिः, यत्र लक्ष्यविशेषावलम्बनेन मनो बुद्धियुक्तं सत्

सदसद्‌विचारे प्रवर्तमानमेकस्मिन्नेव कर्मणि संलग्नं तिष्ठति । तदवस्थं मनः क्षिप्तसंज्ञां प्राप्नोति । तृतीया सत्त्वगुणभूमिः सा निरूपिता, यत्रान्तःकरणं सर्वविधवृत्तिभ्यो विरहितं जायते, अर्थात् न तत्र मनस उन्मत्तता, नापि च बुद्धिविवेक एव जागर्ति । तदवस्थं मनो विक्षिप्तमित्युच्यते । विक्षिप्तभूमिरियं जीवे कदा कदा चिदाविर्भवति । मूढ-क्षिप्त-विक्षिप्तनामधेया अन्तःकरणस्य तिस्रो दशा भवन्ति । अर्थात् अन्तःकरणगुणानुरूपेण त्रिविधभूमीनां समुदयो बोभवीति । तामसिकेषु आलस्ययुक्तेषु पुरुषेषु मूढता, राजसिकेषु कर्मठपुरुषेषु क्षिप्तता, सात्त्विकेषु साधुपुरुषेषु च विक्षिप्तता मनसो दृश्यन्ते । क्लिष्टाभिः अक्लिष्टाभिश्च वृत्तिभिः साकं मूढ-क्षिप्त-विक्षिप्तभूमीनां सम्बन्धः । सद्‌रूपमसद्‌रूपं च सत्त्वं तमश्चेति गुणद्वयमेव प्रधानम् । रजस्तूभयोः सहायकमात्रम् । रजो यदा तमोऽभिमुखतां प्रपद्यते, तदानीमन्तःकरणे क्लिष्टनामधेयाः पापजनकवृत्तयः समुदयन्ति । यदा च रजोगुणः सत्त्वगुणाभिमुखतां प्रपद्यते, तदा अन्तःकरणेऽक्लिष्टा वृत्तयः समुत्पद्यन्ते । यदा चान्तःकरणे मूढ-क्षिप्त-विक्षिप्तभूमिषु काश्चिदपि पुण्यपापजनकवृत्तयोऽन्तःकरणेषु नोत्पद्येरन्, वृत्तिशून्यं तदवस्थं मनो निरुद्धसंज्ञामवाप्नोति । निरुद्धावस्थया मुक्तिरधिगम्यते ।

एवं किल मुक्तिपदसाधनीभूत-निरुद्धदशाधिगमाय योगशास्त्रेण चैका मनस एकाग्रदशाऽपि स्वीकृता । इयं दशा पञ्चमी । इयमवस्था साधकेष्वेव जागर्ति । अन्तःकरणे यदा ध्यातृ-ध्येय-ध्यानव्यतिरिक्तं न किञ्चिदप्यनुभूयते, अन्तःकरणस्य सुस्थिराऽवस्थेयम् एकाग्रनाम्ना प्रणिगद्यते । एकाग्रभूम्यां दृढतां प्राप्तायां शनैःशनैरन्तःकरणे ध्यातृ-ध्येय-ध्यानरूपत्रिपुटीनाशेन निरुद्धावस्था प्राप्यते । निरुद्धावस्थायामन्तःकरणस्य वृत्तिशून्यत्वात् निर्मलत्वाच्च जीवो भगवत्साक्षा-

त्कृत्या मुक्तिमधिगच्छति । एवं हि स्वाभाविक-त्रिगुणमयवृत्तीरेकाग्रता-रूपयोगसाधनेन प्रणश्य निरुद्धावस्थामधिगम्य योगक्रियया जीवो मुक्तिं लभते । यह्यर्न्तःकरणं बहिर्मुखं सत् तन्मात्रेन्द्रियसाहाय्येन विषयेष्वासज्यते, तर्हि विषयाकारतां प्रतिपद्यमानं तत् विषयपाशेषु निपतितं बोभोति । परन्तु यदैकाग्रतासाधनेन चाञ्चल्यरहितमन्तःकरणं बहिर्मुखं न भवितुमर्हति, ततोऽन्तःकरणे स्थैर्यमापन्ने निरुद्धभावोदयेन आत्मसाक्षात्कारः सिद्ध्यति । एकाग्रभूमौ समागत्य निरुद्धभूमिरधिगम एव योगः प्रोक्तः ।

यथा पक्षी पक्षद्वयसद्भावेनैव उड्डयने प्रभुस्तथैव साधकः साधन-वैराग्याभ्यामेव मुक्तिमार्गेऽग्रे सर्तुं प्रभवति । प्रकृतेः परिवर्तनशीलत्वात् तन्निर्मितसंसारोऽपि क्षणभङ्गुर एव । इहलोक-परलोकादयस्तत्रत्यभोग-पदार्था अपि प्राकृतिकत्वात् त्रैगुण्याच्चानित्याः सन्तीति विभाव्य ऐहिकपारलौकिकानि सुखानि मिथ्याभूतान्यवधार्य साधकान्तःकरणं तेभ्यो विरमति । अन्तःकरणस्य विषयरागरहितदशेयं वैराग्यनाम्ना समाख्याता ।

शास्त्रकारैः वैराग्यस्य चातुर्विध्यं प्रोक्तम् । वैराग्यस्य प्रथमदशायां विवेकरूपसात्त्विकबुद्धेः समुदयेन साधको ह्येतदवधारयति यत् सर्वमिदं मायाक्रीडनं मिथ्याभूतम्, अतो मुक्तिपदमेव आश्रयणीयम् । द्वितीया-वस्थायां विवेकी साधको विषय-क्षणभङ्गुरतादिदोषं विचारयन् तद-पास्तौ यत्नमनुतिष्ठति । तृतीयावस्थायां साधकोऽसौ वैराग्यबुद्धे-र्दार्ढ्येन निखिलानेव पदार्थान् दुःखमयानवधारयति । यथा जीवो बलाद् विषपानेन क्लेशमनुभवति, तथैव सर्वविधमेव सुखं दुःखमयं विषतुल्य-मनुभवति । अवस्थायामस्यां विषयसेवाया अत्यन्तनाशेऽपि विषयाणां संस्काराः शिष्यन्ते । चतुर्थ्यां दशायां सर्वश्रेष्ठवैराग्यावस्थामधिगम्य

साधको वैराग्यसाधनेन पूर्णतां प्राप्य संसारतः स्वीयं सुखं नितरां संहरते। यदा परवैराग्योदयेन अन्तःकरणं पूर्णरूपेण इच्छाशून्यं जायते, तदानीमसौ संसारमुपेक्षते। योगपथाभिमुखमग्रेसरद्भिः बहुविधाः दिव्याः सिद्धयः प्राप्यन्ते, याभिर्योगिभिः सर्वमेव समनुष्ठातुं शक्यते। परन्तु परवैराग्यशक्त्यैव तैः पुनः सिद्धिस्वरूपविषयेषु न निमज्ज्यते। सुतरां वैराग्यपूर्णावस्थापरनामक-परवैराग्यम्, साधनपूर्णदशानामकम् अन्तः-करणस्य निरुद्धत्वं चोभयोरेकमेव लक्षणम्। एवं किल क्लिष्टरूप-पाप-जनकवृत्तयः शनैः शनैरक्लिष्टरूप-पुण्यजनकवृत्तिभिः प्रणाश्याः। पुनश्च परवैराग्याभ्यासतोऽक्लिष्टवृत्तीनामपि समूलं हानं विधाय मुक्ति-पदं प्राप्तुं शक्यते।

योगशास्त्रेण साधन-वैराग्ययुक्तपुरुषार्थस्य अष्टौ भेदाः प्रकीर्तिताः। त एव योगस्य अष्टावङ्गानि प्रोक्तानि। तानि यथा—१. यमः, २. नियमः, ३. आसनम्, ४. प्राणायामः, ५. प्रत्याहारः, ६. धारणा, ७. ध्यानम्, ८. समाधिश्चेति।

अहिंसासत्यास्तेयापरिग्रहा यमाः। शौचसन्तोषतपःस्वाध्यायेश्वर-प्रणिधानानि नियमाः। यमनियमपालनेन अन्तःकरणवृत्तिशुद्धौ सत्यां योगमार्गेऽग्रेसर्तुं शक्यते। स्थिरसुखमासनम्, अर्थात् ययोपवेशनक्रियया शरीरं मनश्च नैवोद्विग्नतां प्रपद्येते, सैवासनशब्दवाच्या। सुतरां यया सुगमरीत्या उपवेशनतो योगसाधनं समीचीनं भवेत्, तदेवासनमित्यर्थः। रेचक-पूरक-कुम्भकैः शनैःशनैः प्राणवायौ आधिपत्यस्थापनं प्राणायामः। मनसा वायोः साक्षात्सम्बन्धः। अतः प्राणवायौ वशीभूते मनः स्वय-मेव वशीभवति। कूर्मो निजाङ्गानामिव विषयेभ्य इन्द्रियाणां सङ्कोच एव प्रत्याहारः। पञ्चतत्त्वादिसूक्ष्मविषयेषु ( हृत्पुण्डरीके वा ) मनस-श्चिरकालस्थापनं धारणा। धारणाभ्यासकालेऽन्तर्जगति योगिनो

भ्रमन्ति। भगवत्स्वरूपस्य मनसा चिन्तनमेव ध्यानम्। ध्यानदशायां ध्यातुर्ध्येयस्य च भानं तिष्ठति। इयमेव ध्यानस्य द्वैतावस्था। यदा धारणा-ध्यान-समाधिरूपाभिस्तिसृभिः साधनक्रियाभिः साधक एकस्मिन्नेव पदार्थविशेषेषु युक्तो जायते तदा साधकस्यावस्थेयं संयमः प्रोच्यते, "त्रयमेकत्र संयमः" इति योगसूत्राभिधानात्। सविकल्पे समाधौ संयमो जायते। संयमसाधनशक्त्यैव महर्षयस्त्रिकालदर्शिनो बभूवुः। विनैव बहिश्चेष्टया महर्षयः केवलं संयमेनैव नानाविधानि शारीरज्ञानानि ज्योतिरायुर्वेदादि-बहिर्ज्ञानानि आविश्चक्रुः। संयमसम्बन्धिसाधनवर्णनं योगदर्शनस्यास्य विभूतिपादे द्रष्टव्यम्। ध्यातृ-ध्यान-ध्येयस्वरूपत्रिपुट्याः स्वतन्त्रसत्तानाशपूर्वकम् एकरूपताप्राप्तिरेव समाधिः। अत्र परमात्मानमन्तरेण नान्यभावसत्ता। एवं हि यम-नियमा-ऽऽसन-प्राणायामाश्चेति चत्वारो बहिर्जगतः साधनानि, प्रत्याहार-धारणा-ध्यान-समाधयोऽन्तर्जगत्साधनान्यवधेयानि। सुतरां योगस्य अष्टानामङ्गानां साधनेन निजान्तःकरणं निरुद्धावस्थां प्रापय्य साधकेन कैवल्यरूपं मुक्तिपदमासाद्यते।

पूज्यपादेन महर्षिपतञ्जलिना कृतं योगदर्शनं किल सकलसाधनानां सार्वभौमभित्तिः। मन्त्रयोगस्य, हठयोगस्य, लयलोगस्य राजयोगस्य वा पृथक् पृथगधिकारिणः भक्ताः त्यागिनो वा ज्ञानिनो वा भवेयुः। सर्वेषामेव कृते दर्शनमिदं कल्याणमार्गं दर्शयति। चतुर्विध-योगसाधनप्रकाराः, अनेके साम्प्रदायिक-साधनमार्गाः, भक्तिसाधनपद्धतयश्च एतद्योगशास्त्रप्रदर्शितभित्तौ प्रतिष्ठिताः सन्ति। अष्टाङ्गयोगातिरिक्तानां विविधयोगमार्गाणां वर्णनमपि एतद्योगसूत्रेषु समुपलभ्यते। जीवहितैषिणा महर्षिणा प्रमाणितमिदं यद् अष्टाङ्गयोगः सरलः साधारणश्च पन्थाः। तदतिरिक्ते असाधारणे मार्गे ईश्वरभक्तेरभ्यासः, प्रणवादि-

मन्त्राणां जपः, प्राणायाम-साधनम्, पञ्चतन्मात्रास्वरूप-दिव्यविषयेषु मनसो लयः, भगवद्रूप-ध्यानम्, मनसः शून्यताभ्यासः, स्वीयसमीहानुसारेण शास्त्रीयमूर्तिषु मनोयोगपूर्वकं ध्यानम्——इत्यादिभिरेकाग्रतां प्राप्तमन्तःकरणं निरुद्धावस्थां प्राप्य जीवो मुक्तिपदमधिगच्छति। योगशास्त्रनिर्दिष्टैकाग्रभूमितो निरुद्धभूमिप्राप्तिरेव साधनं नाम।

समाधिर्द्विविधः——सविकल्पो निर्विकल्पश्चेति। सविकल्पे समाधौ निरुद्धं साधकान्तःकरणं भगवन्तं साक्षात्करोति, किन्तु द्वैतभेदस्तिष्ठत्येव। निर्विकल्पे समाधौ प्रकृतेः पूर्णरूपेण विलयत्वात् जीवब्रह्मणोरैक्यमभेदो वा जायते। एकमद्वितीयं सच्चिदानन्दमयं परमात्मानं व्यतिरिच्य न किमपि भासते। एतदेव योगमार्गस्य कैवल्यरूपं निर्वाणपदम्। अत्र सर्वेषामेव वेदोक्तमतानामैकमत्यम्। इयमेव दशा वेदान्तस्य ब्रह्मसद्भावः, भक्तिमार्गस्य परा भक्तिः, इयमेव सांख्यानामत्यन्तदुःखनिवृत्तिः, वेदोक्त आत्मसाक्षात्कारश्चेति। अस्यामवस्थायां जीवस्य जीवत्वनाशः, स च यतः समागतस्तत्र विलीयते। जीवः शिवत्वमेति। अनादिकालतः समुत्पन्ना, अनन्तकालपर्यन्तं स्थायिनी च सृष्टिक्रिया यद्यपि तदानीमपि तिष्ठति, किन्तु योगसाधनपुरुषार्थमाचरन् जीवो मोक्षं लभते। मुक्तौ लब्धायां जीवप्रकृतिर्महाप्रकृतौ लीनतां प्रपद्यते। समुद्रे वारिबिन्दुरिव जीवः परमात्मनि विलयमेति। मनोवागगोचरा मुक्तावस्थेयं योगसाधनलक्ष्यभूता वेदितव्या।

ज्ञानभूमीनां सप्तभेदानुसारेण वैदिकदर्शनान्यपि सप्तधा विभक्तानि। यद्यपि महर्षिपतञ्जलिकृतं योगदर्शनं स्वकीयां ज्ञानभूमिं सम्यक् प्रकाशयति, किन्त्वेतस्य वैशिष्ट्यमिदं यत् कस्यापि दर्शनस्य ज्ञानभूम्या इहास्य नास्ति विरोधः। प्रायेण दर्शनमेकं स्वकीयज्ञानभूमिदृढता-

सम्पादनाय अन्यदर्शनज्ञानभूमिमाक्षिपति । यद्यपि चैवंप्रकारेण परकीयपक्षनिरसनपूर्वकं स्वकीयपक्षमण्डनेन ज्ञानभूमितारतम्यानुसारेण दार्शनिकबोधशैली परिपोषमेति, तथापि योगदर्शनेऽत्र तादृशखण्डनमण्डनप्रणाली लेशतोऽपि नास्ति । एतदेव परमोपयोगिनो दर्शनस्यैतस्य समदर्शितायाः सर्वहितकारितायाश्च सर्वाभिग्रहितं निदर्शनम् ।

योगदर्शनस्य सांख्यदर्शनविज्ञानेन साकं घनिष्ठः सम्बन्धः । योगदर्शनविज्ञानं वैदिककाण्डत्रयप्रतिपादक-मीमांसात्रयस्य परमं सहायकम्, यौगिकक्रियाकलापस्य मौलिक आधारश्च । एतेन सर्वविधोपासनापरिपाटीषु विशिष्टं साहाय्यं लभ्यते ।

अन्यदर्शनापेक्षया योगदर्शनस्येदमप्येकं वैशिष्टयं यदत्र दृष्टजन्मवेदनीयम्, अदृष्टजन्म-वेदनीयमिति द्विविधमेव कर्म समाम्नातम्, येन पुरुषार्थवादिनां कृतेऽस्य परमोपकारिता । एतद्दर्शनमतमनुसृत्य स्वीयपुरुषार्थप्रभावतो योगी सर्वमपि विधेयं सुविधातुमर्हति । अन्यदर्शनेषु मुमुक्षवः साधकाः शनैः शनैः स्वाधिकारानुरूपे समुन्नतिमार्गेऽग्रेसरति । परन्तु योगदर्शनमेतत् स्वकीयालौकिकयोगशक्तिद्वारा सर्वेभ्यः सर्वविधमधिकारं प्रयच्छति । कुत्र चिद् दर्शने ईश्वरो नोपलभ्यते, अन्यत्र अनुमानद्वारा ईश्वरसत्तासद्भावो दृश्यते; परन्तु योगदर्शनस्यैतत् परमं महत्त्वं यत् एतद्द्वारीकृत्य ईश्वरराज्यस्य अणिमादिविभूतिपर्यन्तमधिगन्तुं शक्यते । अन्यदर्शनेषु विचारसाहाय्येन अध्यात्मपथे मुमुक्षवः क्रमशोऽग्रे सरन्ति । परन्तु योगदर्शने तत्तदवलम्बनातिरिक्तं पुरुषार्थप्रधानसाधनप्रयोगैः सह साधनक्रियासमुत्पन्नप्रत्यक्षफलोपलब्धिरपि दृश्यते । येन योगदर्शनपथविचरणशील-मुमुक्षुजनहृदयेषु श्रद्धा-विश्वासदृढता सदैव विराजते । योगदर्शनज्ञानभूमिं प्रति साधकान्तःकरणेषु सर्वदैव परमा

प्रीतिः सञ्चरति । यया अध्यात्मज्ञानोन्नतिपुरस्सरं स्वरूपस्थिति-रनायासेन सम्पद्यते। सर्वमिदं योगदर्शनस्य अन्यदर्शनेभ्यो वैशिष्टच-मवधेयम् ।

योगदर्शने चित्तान्तःकरणशव्दौ पर्यायवाचकौ । स्मर्यतेऽत्र——

"मनो महान् मतिर्ब्रह्मा अन्तःकरणमेव च ।
प्रज्ञा संविच्चितिर्मेधा पूर्वद्धिस्मृतिचञ्चलाः ।
पर्यायवाचकाः शव्दा मनसः परिकीर्तिताः ॥" इति ।

चित्तं वाऽन्तःकरणं वा यम-नियमादिभिः ईश्वरप्रणिधानादिभिः ध्यानाद्यसाधारणोपायैर्वा निरुद्ध्य पुरुषः प्रकृतिवन्धनान्मुक्तः स्वस्वरूपं प्राप्नोति । अयमेव दर्शनस्यास्य चरमो राद्धान्तः ।

न्याय-वैशेषिकदर्शनभूमिद्वयमतिक्रम्य योगदर्शनभूमिरासाद्यते । योग-दर्शनस्य सांख्यदर्शनस्य च भूमिः प्रायेणैकप्रकारैव । उभयोरेतावानेव भेदो यत् सांख्यं पंचविंशतितत्त्वानि स्वीकरोति, योगदर्शनं तु तेभ्योऽति-रिक्तमीश्वरमपि स्वीकरोति । नैतेन एतदभ्युपगन्तव्यं यत् सांख्य-मीश्वरं नाङ्गीकरोतीति । तेन "ईश्वरासिद्धेः" इति सूत्रेणेश्वरसिद्धिः संसाधिता । यतो लौकिकपुरुषार्थद्वारा ईश्वरस्य असिद्धिः, किन्तु योग-रूपेण अलौकिकेन पुरुषार्थेन तु ईश्वरस्य सिद्धिर्भवत्येवेति तन्मतम् । सांख्यदर्शनभूमौ अलौकिकपुरुषार्थप्रयोजनाभावः । अतस्तत्र ईश्वर-स्वीकारस्य नास्ति प्रयोजनम्। तथापि सांख्यमीश्वरं मन्यते। योगदर्शन-स्यालौकिकयोगशक्त्या सम्बन्धः । अतो योगदर्शने ईश्वरोऽङ्गीकृतः । एष एवोभयोर्भेदः । यदि सांख्यदर्शने ईश्वरोऽङ्गीकृतो न भवेत् , तर्हि "ईश्वरासिद्धेः" इति सूत्रस्थाने "ईश्वराभावात्" इति सूत्रं स्यात् ।

अतः सांख्यदर्शनं योगदर्शनं चेति द्वयमेव आस्तिकदर्शनमित्यत्र न मनागपि सन्देहलेशः ।

भाष्येऽत्र भगवद्व्यासकृतयोगदर्शनभाष्य-व्याख्यापद्धतिरेव अवलम्बिता । व्यासकृतं भाष्यमतिसंक्षिप्तं दुर्बोधं च । अतस्तदत्र सविस्तरं विवेचितम् । व्यासभाष्यानुकूला अन्यान्य-टीका-वृत्तिकार-सिद्धान्ता अप्यत्र सन्निवेशिताः । एतद्भाष्याध्ययनेन अध्यापनेन च जिज्ञासवः परितृप्तिमेष्यन्तीत्याशास्महे ।

— श्री ज्ञानानन्दस्वामी

ॐ नमः परमात्मने

# योग-दर्शनम्

## १. समाधिपादः

### अथ योगानुशासनम् ॥ १ ॥

इदानीं योगस्य अनुशासनमुच्यते। अथ शब्दो माङ्गलिको विघ्न-विनाशनश्च। निर्विघ्नपरिसमाप्तिरूपमङ्गलार्थम् 'अथ'शब्दप्रयोगः। स्मृतावुक्तं च—

'ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।
कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ ॥' इति।

अथशब्दप्रयोगोऽधिकारार्थकोऽपि। तत्त्वज्ञानं प्रकाशयितुमधिकार-निर्णयोऽप्यावश्यकः। अतोऽधिकारार्थकोऽप्यथशब्दप्रयोगः।

आनन्तर्यार्थे चाप्यथशब्दः प्रयुज्यते। अर्थात् राजानुशासनशब्दा-नुशासनानन्तरमेव योगानुशासनस्याऽऽरम्भः। प्रकृतेस्त्रैगुण्यात् मानव-बुद्धेरपि त्रैविध्यमुक्तम्। तथा हि भगवद्गीतायाम्—

'प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये।
बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ सात्त्विकी ॥
यया धर्ममधर्मं च कार्यं चाकार्यमेव च।
अयथावत् प्रजानाति बुद्धिः सा पार्थ राजसी ॥
अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता।
सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ तामसी ॥' इति।

आवरणाधिक्यात् राजदण्डेन समाजदण्डेन वा तामसिकबुद्धिर्न्याय-पथे प्रवर्तयितुं शक्यते। राजसबुद्धेः संशययुक्तत्वाद् वेदशास्त्राचार्योपदेशा-त्तत्सन्देहं निराकुर्वते। तामसिक-राजसिकबुद्धियुक्तानां कृते राजानु-

शासनं शब्दानुशासनं च हिताधायके। सात्त्विकबुद्धेर्मालिन्यमुक्तत्वात् स्वच्छत्वाच्च योगानुशासनमेव हितसाधकम्। सात्त्विकबुद्धिसम्पन्नः साधको गुरूपदिष्टेन अष्टाङ्गयोगसाधनेन चित्तवृत्तिं निरुद्ध्य अनायासेन स्वरूपं साक्षात्कर्तुं प्रभवति। अतोऽथशब्दस्य अधिकारानुसारेण आनन्तर्यार्थे प्रयोगो युक्तियुक्त एव।

युज्-धातुनिष्पन्नत्वात् योगशब्दः समाधिवाचकः। समाधिर्द्विविधः—सम्प्रज्ञातः, असम्प्रज्ञातश्च। तटस्थभूमितः स्वरूपभूमिपर्यन्तं सर्वोऽपि चित्तपरिणामो योगशब्दवाच्यः।

अनुशासनशब्द आज्ञासूचकः। अर्थात् अधिकारिनिर्णयानन्तरं योगसाधनाय आज्ञा प्रदीयते। दर्शनशास्त्राणि वेदार्थावबोधाय नेत्ररूपाणि। प्रत्येकमपि दर्शनं वेदाशयविभिन्नस्वरूपप्रकाशकम्। एतन्नियमानुसारेण महर्षि-पतञ्जलिकृतं योगदर्शनं योगपथानां निदर्शकम्। पूज्यपादः पतञ्जलिर्नैतद्योगदर्शनसृष्टिकर्ता। स हि वैदिकयोगांशानां प्रकाशकः। अतस्तेन अनुशासनशब्दः प्रयुक्तः।

अन्यच्च, योगशास्त्रं सार्वभौममतसंवलितम्; अतोऽप्यनुशासनशब्दप्रयोगः। सुतरां तामसबुद्धि-राजसबुद्धिहितसाधनाय क्रमशः राजानुशासनं शब्दानुशासनं च विहिते। केवलं सात्त्विकबुद्धिसम्पन्न-समुन्नतमानवहितायैव योगानुशासनविज्ञानमुपदिष्टम्। एतदेव प्रथमसूत्रस्य तात्पर्यम्॥ १॥

अनुशिष्यमाणो योगः किं स्वरूप इत्युच्यते—

**योगश्चित्तवृत्तिनिरोधः॥ २॥**

अन्तःकरणापरनामक-चित्तवृत्तीनां निरोधः प्रतिलोमविधिना स्वकारणे विलयः किल योगः। अन्तःकरणभूमिमनुसृत्य लयो द्विविधः—आद्यस्त्रिपुटीसूक्ष्मास्तित्वरूपः सम्प्रज्ञाते समाधौ जायते। द्वितीयस्तु असम्प्रज्ञातसमाधौ त्रिपुट्याः पूर्णविलयस्वरूपः।

योगाचार्यैरन्तःकरणस्य मूढ-क्षिप्त-विक्षिप्तैकाग्र-निरुद्धनामधेयाः पञ्च भूमयः समाम्नाताः—(१) यदाऽन्तःकरणं सदसद्विचारहीनमालस्यविस्मृतिवशगं सत् प्रग्रहहीनघोटकवद् उन्मत्तमितस्ततो धावति चञ्चलमनु-

चित्तं नृत्यति च, तदा तदवस्थं तत् 'मूढमि'त्युच्यते। मूढभूमिस्तमोगुण-सम्बन्धनिबन्धना। (२) यदा च चित्तं कुत्रापि कार्ये सँलग्नं प्रग्रहयुक्तोऽश्व इव बुद्धिसाहाय्येन विचारशीलं कस्य चिल्लक्ष्यस्य साधने प्रवर्तते, तदा तदवस्थं तत् 'क्षिप्त'संज्ञां लभते। क्षिप्तभूमिः राजसिकी। (३) एतदतिरिक्ता 'विक्षिप्ता'भिधा सात्त्विकभूमिः। अस्यामन्तःकरणं सुख-दुःख-विचाराऽऽलस्यादितमोरजोवृत्तीर्विरहय्य शून्यावस्थां प्रतिपद्यते। मानवेषु दशेयं स्वल्पकालकृते यदा कदा चित् समुत्पद्यते। अन्तःकरणस्य अवस्थात्रयमिदं गुणभेदमनुसृत्य न्यूनाधिकरूपेण सर्वेष्वपि मानवेषु समुपलभ्यते। (४) एतत्त्रितयातिरिक्ता निरुद्धभूमिर्विज्ञेया, यत्र मानवहृदयं स्थिरतां प्रपद्यमानं सर्वविधवृत्तिशून्यं जायते। एतदेव योगशास्त्रलक्ष्यभूतम्। इमामेव निरुद्धभूमिमधिगन्तुं श्रीगुरूपदेशद्वारा साधनविशेषानुष्ठानेन शास्त्रोक्तोपायं समाश्रयन् साधक एकाग्रभूमेरधिकारं लभते। (५) यदा चित्ते ध्यातृ-ध्यान-ध्येयव्यतिरिक्तं न किञ्चिदन्यद् भासते, ध्यानद्वारा ध्येय-पदार्थे एव ध्यातुर्मनो निविशते, तदैव एकाग्रभूमेरुदयः। एवं हि मूढक्षिप्त-विक्षिप्तनामधेयास्तिस्रः साधारणवृत्तयः, एकाग्र-निरुद्धनामधेये असाधारणे द्वे भूमी च मिलित्वा अन्तःकरणस्य पञ्चभूमयः संवृत्ताः।

प्रथमोक्तास्तिस्रो भूमयः सर्वमानवेषु प्रादुर्भवन्ति। किन्तु अग्रिमे द्वे भूमी योगानुशासनाधिकारिषु साधकेष्वेव प्रादुर्भवतः। एकाग्रभूमौ साधनानि कुर्वन् ध्याता साधको यदा सिद्धावस्थां प्रपद्यते तदानीं ध्यातृ-ध्यान-ध्येयस्वरूपास्तिस्रो दशा एकीभवन्ति। एकाग्रभूमिसाधनाभ्यासं कुर्वन् योगी क्रमशः तटस्थाधिकारतः स्वरूपाधिकारमधिगच्छति। एकाग्र-दशायां त्रिपुटी तिष्ठति, परन्तु क्रमेण साधनसमुन्नत्या निरुद्धभूमिमासादयतः साधकस्य त्रिपुटी तटस्थज्ञानं च विलीयेते। एतस्यामन्तिमायां निरुद्धभूमौ समाधिपूर्णता लभ्यते।

इयमेव निरुद्धावस्था योगलक्ष्यभूताऽवगन्तव्या। निरुद्धभूमेरुदयेन योगी प्रथमतः सम्प्रज्ञातसमाधिं लभते। तत्र सत्यपि त्रिपुटीलये त्रिपुट्याः अतिसूक्ष्मावस्था तिष्ठत्येव।

अनन्तरं च तस्याः अतिसूक्ष्मसत्ताया अपि नाशेन विकल्परहिता स्वरूपावस्था समुदेति। इयमवस्था असम्प्रज्ञातसमाधिनाम्ना प्रोक्ता। अत्र संस्कारलेशस्याप्यभावात् दशेयं 'निर्बीज'-संज्ञामपि लभते। अस्यां पूर्णरूपविवेकोदयात् तस्याः 'धर्ममेघ'-संज्ञाऽपि। इदमेव चित्तवृत्तिनिरोधरूपयोगलक्षणमवधेयम्॥ २॥

चित्तवृत्तिनिरोधतो जायमाना दशा प्रोच्यते—

**तदा द्रष्टुः स्वरूपेऽवस्थानम्॥ ३॥**

चित्तवृत्तिनिरोधे सति द्रष्टुः पुरुषस्य स्वरूपे स्थितिर्जायते। अन्तःकरणेन साकं पुरुषस्वरूपचैतन्यस्य सम्बन्धसत्त्वात्पुरुषः स्व-स्वरूपमन्तःकरणञ्च अभिन्नमभिमन्यते। एतदेव अज्ञानबन्धनहेतुभूतमवधेयम्। मनो बुद्धिरहङ्कारश्चेति अन्तःकरणं त्रिधा विभक्तम्। स्वकीयं लक्ष्यं न स्थिरीकृत्य विषयाद् विषयान्तरं धावमानमन्तःकरणं 'मनः' इत्युच्यते। सदसद्विचारे संलग्नमेकत्र पदार्थे स्थिरीभूतं च तत् 'बुद्धि'शब्देन व्यपदिश्यते। निजां स्वतन्त्रसत्तामभ्युपगम्यमानं स्वस्वरूपानुरूप-सृष्टिक्रियाविस्तार-कारणीभूतं स्वकीयोत्पत्त्या च चैतन्यमविद्यापाशे निपातयत् तदेव 'अहङ्कार'शब्दवाच्यं जायते। एतत्त्रितयरूपान्तःकरणस्य[1] चाञ्चल्यप्रभावादेव पूर्णज्ञानरूपमपि चैतन्यं नानुभवति नैजं स्वरूपम्।

वस्तुतस्तु पुरुषो नित्यशुद्धमुक्तस्वभावः। बन्धनं यदि तस्य स्वाभाविको धर्मश्चेत् तर्हि यावद्द्रव्यभावित्वसम्बन्धहेतुत्वान्नैव स्यात् तन्मुक्तिः। प्रकृतिसम्बन्धात् पुरुषस्य केवलमौपचारिको बन्धः। जवाकुसुमसंसर्गात् स्फटिकमणौ लौहित्यसञ्चार इव पुरुषे प्रकृतिसंसर्गजन्यमाभिमानिकबन्धनमवधेयम्।

---

१. मतान्तरेण मनो बुद्धिश्चित्तमहङ्कारश्चेत्यन्तःकरणस्य चत्वारो भेदाः समाम्नाताः। चित्तं हि संस्काराश्रयीभूतम्। तद्गतसंस्कार एव स्मृतिमुत्पाद्य जीवं कर्मचक्रे ह्यावर्तयतीत्येत् तन्मतसिद्धान्तः। किन्तु दर्शनेऽत्र चित्तस्य मनसोऽन्तर्गतत्वान्न तस्य पृथङ्निर्देशः।

योगसाधनेन अन्तःकरणवृत्तौ निरुद्धायां द्रष्टृरूपसाक्षिभूतं चैतन्यं स्वरूपमनुभवति। ज्ञानस्वरूपचैतन्यप्रभावादेव अन्तःकरणं कर्मसु प्रवर्तते, यतश्चैतन्यशक्त्यैव तत् चेतनतां प्राप्तं सत् पूर्वोक्त-सत्त्वरजस्तमसां वृत्तिभिर्नानाविधं कर्मकलापमनुतिष्ठति। योगसाधनेन अन्तःकरणे निरुद्धे तद्गत-वृत्तिषु निरुद्धासु चैतन्यरूपपुरुषस्य पाशबन्धनकारकं न किमपि सम्भवेत्। तदानीं चैतन्यस्वरूपः पुरुषः स्वीयं स्वरूपं प्रतिपद्यते।

अन्तःकरणं दर्पणवत् विद्यते। नानावर्णसान्निध्यात् दर्पणोऽपि यथा नानावर्णस्वरूपतां धारयति, तथैव अन्तकरणमप्यवधेयम्। यथा तरङ्गिते जलाशये न मुखाकृतिः सुस्पष्टं परिलक्ष्यते, तथैव नानावृत्तिसंकुले अन्तः-करणे नैव द्रष्टृरूपचैतन्यं यथावत् प्रतिभासते। चैतन्यस्य पूर्णरूपेण प्रतिभानमेव योगसाधनलक्ष्यमास्ते। अतः सच्चिदानन्दरूपचैतन्यस्य स्वस्वरूपोपलब्धिरेव मोक्ष इति॥ ३॥

अस्वरूपावस्थायां पुरुषदशा निरूप्यते—

## वृत्तिसारूप्यमितरत्र॥ ४॥

इतरत्र स्वरूपावस्थाऽभावे वृत्तिसारूप्यं वृत्तिनां सरूपतां धारयति पुरुष इति। यदि योगसाधनेन चैतन्यस्य स्वीयस्वरूपोपलब्धिर्न स्यात् तर्हि तत् चैतन्यम् अन्तःकरणवृत्तिस्वरूपं भजति। सुतरां वृत्तिचाञ्चल्यदशायां जीवो वृत्तितन्मयतां प्राप्नोति। इयमेव जीवबन्धनावस्था। सर्वेष्वपि जीवेषु दशेयं संतिष्ठते। विज्ञानविदो योगिनो निखिलानपि जीवान् वृत्तिसमष्टि-पुत्तलिकावत् परिपश्यन्ति।

चैतन्यं किल वृत्तिभिः कथं सङ्गच्छते इति प्रश्नः समाधीयते। तथा हि—अविद्यया हेतुभूतया मोहयुक्तं चैतन्यं प्रथममन्तःकरणमेव निज-स्वरूपमवधारयति। तन्मात्राभिरिन्द्रियैश्च अन्तःकरणस्य सम्बन्धे जाते तत्प्रतिबिम्बितः पुरुषस्तत्सुख-दुःखस्वरूपवृत्तिषु पतितः सन् कर्तृत्व-भोक्तृत्व-भावं प्राप्नोति। यथा कस्य चित् पुरुषस्य दृष्टिपथे अतिमनोहरपदार्थः समापतति, तदा तत्पदार्थचित्रं तन्मात्रा इन्द्रियाणि च द्वारीकृत्य तदन्तः-

करणे चित्रितं वोभोति । तदानीमन्तःकरणं प्रफुल्लितं जायते। अस्यामवस्थायां शरीरस्थचैतन्यम् अन्तःकरणस्थ-सुखदुःखान् आत्मनि मन्यते । अस्यामेव भ्रान्तिदशायां चैतन्यमयो जीवः सदैव पापत्यते ।

एतादृशाभिः शान्त-घोर-मूढस्वभाववृत्तिभिः साकं संयोगः पुरुषस्य कुतः समयादभूदिति प्रश्न-समाहितिः भगवता श्रीवेदव्यासेन स्वरचितयोग-दर्शनभाष्ये एवं कृता—बीजाङ्कुरवद् अविद्यावासनासम्बन्धस्य अनादित्वात् नित्य-शुद्ध-बुद्ध-मुक्तस्वभावस्य पुरुषस्य बन्धनकारिण्या प्रकृत्या सहानादिसम्बन्धः । एतस्या एवानादेरविद्यायाः संयोगतो मुक्तस्वभावोऽपि पुरुषः प्रकृतिगतं सुखदुःखादिकमात्मनि आरोपितं विधाय व्युत्थानदशायां वृत्तिरूपतां प्रपद्यते । एतदेव पुरुषस्य औपचारिकं बन्धनमवधेयम् ॥ ४ ॥

इदानीं जीवबन्धनकारि-वृत्तिभेदानाचष्टे—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाश्च ॥ ५ ॥**

पञ्चतय्यः पञ्चावयवा वृत्तयः क्लिष्टरूपा अक्लिष्टस्वरूपाश्च द्विप्रकाराः । अन्तःकरणचाञ्चल्यमूलकः परिणामविशेषो वृत्तिशब्दवाच्यः । त्रिगुण-भेदाद् अन्तःकरणवृत्तीनामानन्त्येऽपि सर्वास्ताः सूक्ष्मदृशा पञ्चावयवेषु विभक्ताः कर्तुं शक्यन्ते ।

प्रमाण-विपर्यय-विकल्पादयः पञ्चावयवा अग्रे वक्ष्यन्ते । हिंसा-द्वेष-क्रोधादयः क्लिष्टवृत्तयः पापजानन्योऽन्तःकरणे दुःखमुत्पादयन्ति । वैराग्य-दया-सरलतादयः पुण्योत्पादिका अक्लिष्टवृत्तयः अन्तःकरणसुखदायिन्यः सन्ति । क्लिष्टवृत्तीनामुदयेऽक्लिष्टवृत्तीनां तिरोभावो जायते । अक्लिष्टवृत्तीनां च समुत्पत्तौ क्लिष्टवृत्तयः तिरोभवन्तीत्यवधेयम् । अतः क्लिष्टवृत्त्याधिक्यः पुमान् पापीयान् सम्भवति ।

ज्ञानाज्ञान-दिनरात्रि-रागद्वेष-सुखदुःखादिद्वन्द्वमूलकः संसारो वर्तते । एतेनैव स्वाभाविकेन हेतुनाऽन्तःकरणे सत्त्वप्रधानस्तमःप्रधानश्चेति द्वौ भावावुत्पद्येते । अन्तकरणरूप-जलाशयस्य तरङ्गायितवृत्तयो यदा सत्त्वाभि-मुखं धावन्ति, तदा ता अक्लिष्टसंज्ञां बिभ्रति । यदा च तमोऽभिमुखं प्रयान्ति,

तदा क्लिष्टाः कथ्यन्ते। अक्लिष्टाभिः पुण्यं क्लिष्टाभिश्च पापमुत्पद्यते। एतद्द्वयपरिणामः स्वर्ग-नरकाधिगमः। स्वर्गे सुखं नरके च दुखमनुभूयते। एतद्द्वितयविभिन्नो योगलक्ष्यभूतो मोक्षः। अतो मोक्षमार्गेऽग्रे सरता साधकेन पूर्वमक्लिष्टवृत्तिभिः क्लिष्टवृत्तयो निरोद्धव्याः, अन्ते च परवैराग्येण क्लिष्टाक्लिष्टरूपाणां सर्वासामपि वृत्तीनां विनाशो विधातव्य इति वक्ष्यते॥ ५॥

वृत्तीनां पञ्चावयवा निरुच्यन्ते—

## प्रमाणविपर्ययविकल्पनिद्रास्मृतयः॥ ६॥

अन्तःकरणानन्तवृत्तीनां सूक्ष्मदृशा विभागे क्रियमाणे ताः प्रमाण-विपर्यय-विकल्प-निद्रा-स्मृतयश्चेति पञ्चधा विभक्तुं शक्यन्ते। अन्तःकरण-समुदीयमानागणित-क्लिष्टाक्लिष्टजातीयवृत्तीनां संक्षेपतः अयमेव पञ्चावयवविभागः। संसारस्य द्वन्द्वमूलकत्वात् सृष्टेरादिकारणे पुरुष-प्रकृतिरूपद्वैतस्य विद्यमानतया चेतन-जडात्मिकां ज्ञानाज्ञानभावमूलिकां दशामवलम्ब्यैव अन्तःकरणस्वरूपजलाशये तरङ्गरूपाश्चित्तवृत्तय उद्यन्ति।

एतासां दशाद्वयम्—कारणरूपा कार्यरूपा च। कार्यावस्थायां वृत्तयोऽनन्तरूपतां बिभ्रति। अतः शास्त्रोक्ता अन्तःकरणवृत्तयो बह्व्यः सन्ति। हिंसाद्वेषादयो ह्यनन्ताः पापजनकवृत्तयः। प्रेमदयाप्रभृतयः पुण्यजनकवृत्तयोऽप्यनन्ता एव समाख्याताः। कारणावस्थायां पाञ्चभौतिकमन्तःकरणं पञ्चैव कारणवृत्तीरुत्पादयति। एतद्वर्णनमग्रिमसूत्रेषु विधास्यते॥ ६॥

पञ्चावयवेषु प्रथमं प्रमाणं निरूप्यते—

## प्रत्यक्षानुमानागमाः प्रमाणानि॥ ७॥

यथार्थज्ञानं प्रमा, तत्करणं प्रमाणम्। अर्थात् यथार्थज्ञानसिद्धिसाधनरूपं प्रमाणशब्दवाच्यम्। तच्च प्रत्यक्षानुमानागमरूपेण त्रिविधम्। मीमांसादर्शने प्रत्यक्षानुमानागमोपमानानुपलब्ध्यर्थापत्तिभेदात् प्रमाणस्य षड्विधत्वमुक्तम्। न्यायदर्शने प्रत्यक्षानुमानागमोपमानसंज्ञया प्रमाणस्य चातुर्विध्यमुक्तम्। सांख्य-योगदर्शनाभ्यामेतत्सूत्रोक्तं प्रमाणत्रैविध्यमेव स्वीक्रियते। सूक्ष्मेक्षिकया विचार्यमाणे दर्शनान्तरप्रोक्तानि षड्विधप्रमा-

णानि एतत्त्रितयविस्तारमात्राणि। वेदार्थप्रमाणायैव सप्तानां दर्शनानामाविर्भावः। तानि वेदार्थप्रमाणार्थं तिस्रो गतीरवलम्बन्ते। उत्तरमीमांसा-दैवीमीमांसा-पूर्वमीमांसानां गतिरेकरूपा, न्याय-वैशेषिकयोश्च गतिः समाना, सांख्य-पातञ्जलयोश्चैकप्रकाराऽऽस्ते। प्रत्येकविभागदर्शनानि एकस्मिन्नेव पथि प्रचलन्ति।

प्रत्यक्षं किमित्युच्यते—'इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्। ज्ञानेन्द्रियैः सह वस्तूनां व्यवधानरहितसम्बन्धो हि प्रत्यक्षप्रमाणवाच्यो भवति। अर्थात् प्रत्यक्षे इन्द्रियाणि वस्तूनां साक्षादनुभवं कुर्वन्ति। यथा नेत्रसंन्निधाने दीपशिखा। अनुमानादीनां प्रत्यक्षमूलकत्वात् प्रमाणान्तराभ्यर्हितं प्रत्यक्षम्। अत एवैतत् सर्वप्रथमं निर्दिष्टम्।

अनुमान-प्रमाणलक्षणं यथा—कस्य चिद् वस्तुनः पूर्वत एव ज्ञाने विद्यमाने सति च तल्लक्षणज्ञाने वस्तुदर्शनराहित्येऽपि तल्लक्षणज्ञानादेव तद्वस्तुसत्ता-परिज्ञानमनुमानमुच्यते। यथा दूरवर्तिनि पर्वते धूमदर्शनेनैव अग्नेर्ज्ञानमनुमानत एव जायते।

आप्तप्रमाणं हि आगमप्रमाणशब्देनाख्यायते। भ्रमरहितः सत्पदार्थज्ञाता महापुरुष एव आप्त आख्यातः। तदुपदिष्टसिद्धान्तः प्रमाणकोटीमाटीकते। आगमनिगमशब्दौ सर्वत्रैव महर्षिभिः प्रोक्तौ। तत्रागमः शास्त्राणि, निगमो वेदः। शास्त्रप्रमाणं वेदप्रमाणं च आगमप्रमाणशब्देनात्र प्रोक्तमवधेयम्। ईश्वरनिःश्वसितरूपो वेदः, ऋतम्भरया प्रज्ञया ऋषिभिः समुपलब्धानि शास्त्राणि चाभ्रान्तानि सन्ति।

उपर्युक्तैस्त्रिविधैः प्रमाणैरेव सर्वपदार्थज्ञानाधिगम इति योगदर्शनसिद्धान्तः। पञ्चावयववृत्तिषु प्रमाणवृत्तिमहत्त्वसिद्धावपि प्रमेयसम्बन्धेनैव प्रत्यक्षप्रमाणज्ञानसत्त्वादेतत्प्रमाणं हि तटस्थज्ञानकोटीप्रविष्टमवगन्तव्यम्। अतस्तटस्थदशाऽतीते स्वस्वरूपे पुरुषप्रतिष्ठालाभाय प्रमाणवृत्तेर्निरोध अत्यावश्यक इत्यत्र नास्ति संशीतिलवः॥ ७॥

द्वितीयावयवरूपा विपर्ययवृत्तिर्लक्ष्यते—

**विपर्ययो मिथ्याज्ञानमद्रूपप्रतिष्ठितम्॥ ८॥**

यथा रज्जौ सर्पभ्रान्तिः, मृगस्य मरीचिकायां भ्रमः, शुक्तौ च रजत-भ्रमोत्पत्तिस्तथैव भ्रमपूर्णज्ञानं विपर्ययशब्देन प्रणिगद्यते। सन्देहपरिपूर्ण-ज्ञानं विपर्ययनाम्ना समाम्नातम्। प्रमाणज्ञानेन विपर्ययज्ञानं खण्ड्यते। यस्य वस्तुनो यद्धि वास्तविकं स्वरूपं तद्विरुद्ध-सन्देहाभावे तदनुभव एव अतद्रूपप्रतिष्ठितशब्दार्थः। यथैकस्मिन् चन्द्रमसि द्विचन्द्रदर्शनम्, आत्मनि अनात्मनि वा सुखे दुःखे च संशयः।

श्रीमता भगवता व्यासेनेदं मिथ्याज्ञानं पञ्चावयवैर्विभक्तम्। तथा हि—

'तमो मोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।
अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः॥' इति।

समस्तक्लेशमूलस्वरूपेषु अनित्याशुचिदुःखादिषु विपरीतज्ञानमूलिका अविद्यैव तम उच्यते। बुद्धिप्रतिबिम्बितस्य चैतन्यस्य प्रकृतिसङ्गवशात् स्वस्य प्रकृत्यभिन्नतास्वीकृतिरूपा अस्मितैव मोहः। संयमादिशून्यपुरुषस्य 'सर्वं मम सुखकरं स्यात्' इति राग एव महामोहः। दुःखानेककारण-विद्यमानतायामपि 'मम दुःखं न स्यात्' इति द्वेषमूलको विपर्ययभाव एव तामिस्रशब्दवाच्यः। जीवशरीरस्यानित्यत्वेऽपि 'मम मृत्युर्न भवेत्' इति मरणत्रासरूपोऽभिनिवेश एव अन्धतामिस्रनाम्ना प्रोक्तः। एवं किल पञ्च-पर्वविभक्तविपर्ययज्ञानेन अनेकानि मिथ्याज्ञानान्युत्पद्य जीवं संसारचक्रे भ्रामयन्ति। अतो हि पुरुषस्य स्वरूपप्रतिष्ठाधिगमाय विपर्ययज्ञाननिरोधो ऽत्यावश्यकः॥ ८॥

तृतीयावयवरूपां विकल्पवृत्तिं निर्णयति—

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः॥ ९॥**

यथार्थभावशून्या केवलशब्दज्ञानमात्रेण निश्चयकारिका परा वृत्ति-र्विकल्पशब्देन आख्यायते। कमपि पदार्थं श्रुत्वैव तदीयसत्यताऽसत्यता-विषये बुद्धिज्ञानमन्तरेण यथाश्रुतं स्वीकरणमेव विकल्पसंज्ञकम्। 'प्रातः-काले सूर्यो निःसरति, सन्ध्याकाले चास्तमेति' इति लोकोक्तिमाकर्ण्यैव भगवतः सूर्यस्य निःसरणास्तगमनस्वीकृतिरेव विकल्पज्ञानम्। यतो वस्तुतः

सूर्यदेवो न निःसरति, नैव चास्तमेति। पृथिवीगतिवशादेवं प्रतिभाति।

ननु विकल्पवृत्त्या साकं शब्दज्ञानसम्बन्धसत्त्वात् विकल्पवृत्तिः प्रमाणवृत्तावेव कथं नान्तर्भवति ? किं वा यथार्थसत्ताशून्यत्वाद् विपर्ययवृत्तितोऽस्याः कथं पृथक् सत्ता स्वीक्रियेत ?

अत्र समाधानम्—विकल्पवृत्त्या सह शब्दज्ञानसम्बन्धेऽपि शशशृङ्गवद् यथार्थभावशून्यस्य विकल्पस्य यथार्थज्ञानमूलके प्रमाणकोटौ नान्तर्भावो भवितुमर्हति। अन्यच्च—विकल्पवृत्तेर्मिथ्याज्ञानरूपत्वात् शब्दज्ञानेन सह तत्सम्बन्धाच्च शब्दज्ञानसम्पर्कशून्यविपर्ययवृत्तितः विकल्पवृत्तेः पार्थक्यं सिद्धमेव। अत उल्लिखितलक्षणयुक्ता विकल्पवृत्तिः प्रमाणविपर्ययाभ्यां वृत्तिभ्यां भिन्ना तृतीया वृत्तिः।

एतद्विकल्पज्ञानमपि प्रमाणज्ञानतो विनश्यति। तदनन्तरं च समस्तवृत्तीनां निरोधेन पुरुषस्य स्वस्वरूपप्रतिष्ठा जायते ॥ ९ ॥

चतुर्थावयवरूपा निद्रावृत्तिर्निरूप्यते—

**अभावप्रत्ययावलम्बना वृत्तिर्निद्रा ॥ १० ॥**

अन्तःकरणस्य प्रमाणविपर्ययादिवृत्तयस्तावदेव जागर्ति प्रपद्यन्ते, यावद्धि मनसो विषयरूपावलम्बनं तिष्ठति। परन्तु यदाऽन्तःकरणे तमोगुणाधिक्यं प्रपद्यमाने पूर्वोक्ता वृत्तयो नैजमवलम्बनं विरहन्ति, तदानीं तदभावप्रत्ययीभूतकारणस्वरूपतमोगुणाश्रयेण यस्याः समुदयः सैव वृत्तिर्निद्रानाम।

ननु निद्रावस्थायां विषयसम्बन्धाभावात् कथं निद्राया वृत्तीनामन्तर्गतत्वम् ? उच्यतेऽत्र भगवता श्रीवेदव्यासेन—'निद्रान्ते सुखमहमस्वाप्सम्, प्रसन्नं मे मनः; दुःखमहमस्वाप्सम्, स्त्यानं मे मनः; मूढोऽहमस्वाप्सम् क्लान्तं मे मनः' इति त्रिगुणतारतम्यानुसारेण निद्रावस्थायां त्रिविधाः स्मृतयोऽनुभूयन्ते। अतो निद्रावस्थायामनुभवसत्त्वाद् वृत्तिरेव निद्रा बोद्धव्या।

परन्तु निद्रायां स्वप्नदशाया जायमानत्वेन नासौ वास्तविकी निद्रा स्वप्नावस्था जाग्रत्सुषुप्तिमध्यवर्तिनी। यतः जाग्रद्दशायां प्रमाण-विपर्यय-

विकल्पाख्यवृत्तयो गुणभेदेन अन्तःकरणेऽनुभूयन्ते, अतः स्वप्नोऽपि त्रिविधः, सात्त्विको राजसिकस्तामसिकश्चेति । सत्फलाधायकः सात्त्विकः, अतोऽसौ उत्तमः । तद्वर्णनं शकुनादिशास्त्रेषु उपलभ्यते । राजसिकस्वप्ने जाग्रद्दशायां दृष्टिगोचरीभूताः पदार्थाः परिदृश्यन्ते । स्वप्नोऽयं मध्यमः । तमःप्रधाने स्वप्ने दृश्यविचित्रता निभाल्यते । प्रायो विषयवासनाग्रस्ताः जीवास्तामसिकं स्वप्नं परिपश्यन्ति । स्वप्नोऽयमधमः समाम्नातः । योगदर्शनकर्तुर्महर्षिणो मतमिदं यत् स्वप्नावस्था प्रमाण-विपर्यय-विकल्पवृत्तितो विरहिता नास्ति । परन्तु निद्रैका स्वतन्त्रा वृत्तिः, नात्र पूर्वोक्ता वृत्तयो जाग्रति ।

ननु निद्रारूपवृत्तेरुदयेन प्रमाण-विपर्ययादिवृत्तीनामभावात् अन्तःकरणं विषयभावरहितं सद् यद्येकाग्रतां प्राप्नोति, 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्येतं ब्रह्मलोकम्' यद्येतत् श्रुत्याऽपि प्रतिपाद्यते, तर्हि निद्रावृत्तिः समाधिबाधिका कथमिति ? प्रश्नस्यैतदुत्तरं यत् निद्रावस्थायां विषयज्ञानरहितमन्तःकरणं स्वकारणे विलीयते । अविद्याबहुलतमोगुणद्वारा लयोऽन्तःकरणस्य सम्पद्यते । अविद्यासहितलयेनैतेन विवेकपरिपाकरूप-समाधिजनितस्वरूपस्थितिर्नैव भवितुमर्हति । अत एव सुषुप्तिदशायां नित्यं ब्रह्मलोके प्रस्थितोऽपि जीवस्ततो निवर्तते, विषयेषु निमज्जति च । श्रुत्याऽप्युक्तम्—

'सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखमेति रूपम्' इति । सुतरां निद्रावृत्तेरुदयेन एकाग्रतां प्राप्तस्यापि अन्तःकरणस्य ऐकान्तिकी एकाग्रता आत्यन्तिकदुःखनाशश्च नैव सम्पद्यते । अतः पुरुषेण स्वरूपप्रतिष्ठामधिगन्तुं निद्रावृत्तिनिरोधः करणीय एवेति ॥ १० ॥

इदानीं पञ्चमावयवरूपा स्मृतिर्लक्ष्यते—

**अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥**

अनुभूतानां विषयाणामन्तःकरणादविलोप एव स्मृतिरुच्यते । जाग्रदवस्थाकालीनाः प्रमाण-विपर्यय-विकल्पवृत्तयोऽन्तःकरणे यदा नोत्पद्यन्ते तदवस्थानाम निद्रेति । किन्तु तदवस्थाचतुष्क-स्मृतिकर्त्री वृत्तिः स्मृतिरभिधीयते । अर्थात् चतसृष्ववस्थासु सम्प्राप्तस्वतन्त्ररूपानुभवानामन्तः-

करणे स्थापनम , तेषामन्तःकरणाद्विलोपो वा स्मृतिरिति। किञ्च अन्तःकरणेऽनुभूयमानसंस्काराणां स्मरणं स्मृतिः।

अभावितस्मर्तव्या, भावितस्मर्तव्या चेति भेदेन सा स्मृतिर्द्विविधा। प्रमाण-विपर्यय-विकल्पवृत्तिभिः समुत्पन्नविषयसंस्काराणां जाग्रद्दशागता स्मृतिः अभावितस्मर्तव्येति कथ्यते। जाग्रद्दशागतविषयाणां स्वप्ने स्मृतिर्भावितस्मर्तव्येति निरुच्यते। सुषुप्तिकाले प्रमाण-विपर्यय-विकल्प-वृत्तीनामभावेऽपि निद्रायां सुखपूर्वकशयनस्य यो ह्यनुभवोऽन्तःकरणे स्थितो जाग्रद्दशायामुद्बुध्यते तन्नामैव निद्रावृत्तिकृता स्मृतिरिति। अनुभवात् स्मृतिर्भिन्ना। यतोऽनुभवोऽज्ञातविषयाणां जायते, परन्तु स्मृतिस्तु ज्ञातविषयाणामेव भवति।

सूत्रेऽत्र असम्प्रमोषशब्दः प्रयुक्तः, प्रमाण-विपर्ययादयो निखिला वृत्तयः सुख-दुःखमोहोत्पादकत्वात् क्लेशान्तर्गता एव। अतः स्वरूपप्रतिष्ठाप्राप्त्यै तन्निरोध आवश्यक इति ॥ ११ ॥

वृत्तिनिरोधप्रकारं वर्णयित्वा तन्निरोधोपायो वर्ण्यते—

## अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥

अभ्यासेन वैराग्येण च वृत्तीनां निरोधो भवितुमर्हतीत्यर्थः। पूर्वसूत्रेषु महर्षिणा सूत्रकृता अन्तःकरणस्था अनन्तवृत्तयः पञ्चधा विभक्ताः। इदानीं तन्निरोधोपायः प्रदर्श्यते।

अन्तःकरणे उदीयमाना अखिला वृत्तयः सत्त्व-रज-स्तमोभेदेन राग-द्वेष-मोहभेदेन वा समुत्पद्यन्ते। अतो वृत्तीनामनुत्पत्तिरेव योगस्य मोक्षस्य वा लक्ष्यभूता। अवस्थेयं साधनवैराग्याभ्यामुपलभ्यते। साधनवैराग्याभ्याससमये तमोजनितो मोहो विनश्यति, किन्तु रजोमिश्रितः सत्त्वगुणस्तिष्ठत्येव। यावत् साधनवैराग्याभ्यासः पूर्णावस्थां न प्राप्नुयात्, तावत् अन्तःकरणवृत्तीनां निरोधेन कैवल्याधिगमो न भवेत्।

अन्तःकरणरूपस्य जलाशयस्य प्रवाहद्वयमवधेयम्—एकः प्रवाहः कैवल्य-रूप-समुन्नतपर्वतात् निर्गत्य विवेकभूमौ प्रवहन् परमकल्याणरूपसागरं

सङ्गच्छते। अन्यश्च संसाररूपाद्रेर्निर्गत्य अज्ञानभूमौ धावन् अधर्मसमुद्रे सम्मिलति। जलाशये जलमेकमेव, किन्तु धाराद्वयं तस्य विद्यते। यावत् सांसारिकपर्वत-जलप्रवाहः प्रवहति, तावत् कैवल्यरूपपर्वत-जलप्रवाहः शुष्कतामेति। किन्तु वैराग्यरूपवन्धेन संसाररूपपर्वत-जलप्रवाहो यथा यथा निरुद्धः स्यात्, साधनैश्चायं प्रवाहो यथा यथा कैवल्यपर्वत-जल-प्रवाहाभिमुखं प्रवहेत्, तथा तथा कैवल्यपर्वत-जलप्रवाहोऽतिवेगात् विवेकभूमौ धावमानः कल्याणसागरे मिलित्वा जीवस्य परमं कल्याणं साधयेत्।

रूपकेनैतेन एतदवधेयं यत् चित्तवृत्तिप्रवाहस्तमोभिमुखं प्रवहन् क्रमशो जडत्वरूपामधोगतिं प्रापयति। यदि च सत्त्वाभिमुखं प्रवहेत् तर्हि स एव परमज्ञानरूपं कैवल्यपदमधिगमयति। वेदसम्मतोऽयं सिद्धान्तो यत् यथा चैकेन पक्षेण पक्षिणो गतिर्नास्ति, तदुड्डयने पक्षद्वयस्यापेक्षा, तथैव केवलेन साधनाभ्यासेन वैराग्याभ्यासेन वा नार्हति जीवो मुक्तिमधिगन्तुम्। वैराग्यं किल संसारवन्धनं शिथिलयति। साधनं च साधकं मुक्तिमार्गेऽग्रे सारयति। यावद् वहिर्वन्धनं शिथिलं न स्यात्, न तावदसौ साधकः अन्तरात्माभिमुखं गन्तुं शक्नुयात्। वन्धने शैथिल्यमापन्नेऽपि गमनशक्तेरभावान्नासौ अन्तरात्मनोऽभिमुखं गन्तुं प्रभवति। अतश्चित्त-वृत्तिनिरोधरूपमोक्षमधिगन्तुं साधनवैराग्ययोरुभयोरप्यपेक्षा। उक्तं च गीतोपनिषदि—

"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।" इति।

उभयत्र वैराग्यस्य पूर्वमावश्यकत्वम्। यतो यावद् विषयदोषदर्शनरूप-वैराग्यद्वारा चित्तवहिर्मुखतायाः प्रणाशो न भवति, न तावच्चित्तान्त-र्मुखताभ्यासः सम्भवति। अतो वैराग्येण विषयेभ्योऽपहृत्य अभ्यासेन निरोधभूमौ अन्तःकरणस्य प्रापणमेव योगसाधनलक्ष्यमवधेयम्॥ १२॥

अभ्यासः किंस्वरूप इत्युच्यते—

**तत्र स्थितौ यत्नोऽभ्यासः॥ १३॥**

तत्र स्थितौ स्वरूपोपलब्धौ, यत्नः प्रयत्न एव अभ्यासः प्रोक्तः । चञ्चलमन्तःकरणं सच्चिदानन्दरूपपरमात्मनो निश्चलभावं नैव ग्रहीतुं शक्नोति । शनैः शनैरभ्यासद्वारा निर्वातदीपवत् प्रशान्तेऽन्तःकरणे परमतत्त्वं प्रकाशमेति । क्रमशस्तदभ्यासस्यैव नाम साधनम् , येनान्तःकरणं बलोत्साहयत्नपूर्वकं तत्रैव परमाराध्ये परमात्मनि संलगति । ग्रन्थिकरणं ग्रन्थिविमोचनमुभयमपि कर्मैव । उभयत्रापि हस्तसञ्चालनं क्रियते । किन्तु आद्येन पदार्थो बन्धनमेति, अपरेण च बद्धपदार्थो विमुच्यते । तथैव जीवस्य स्वाभाविकं कर्म साधनकर्मापि समानमेव कर्मशब्दवाच्यम् । परन्तु जीवस्त्रिगुणकारिते स्वाभाविके कर्मणि ग्रस्यमानो गमागमरूपाद् भ्रमान्न निःसरति । किन्तु वेदविहितसाधनकर्मणा स मुक्तिभूमावग्रे सरन् मोक्षमधिगच्छति ।

योगलक्ष्यभूतमुक्तिपदाधिगमाय क्रियमाणं यत् किमपि सुकौशलपूर्णं कर्म 'अभ्यास'पदेन व्यपदिश्यते । अभ्यासः साधनं वाऽधिकारभेदेन अनेकविधम् । सोपानद्वारा सौधपृष्ठमारोढुकामः पुरुषः किमपि सोपानम् आरोहति । किन्त्वसौ सौधपृष्ठमारोहतीत्येव मन्यते, सोपानपरम्पराभेदस्तु तिष्ठत्येव । तथैव साधनसुकौशलपूर्णकर्मसु परम्पराभूमिभेदोऽधिकारभेदश्च आवश्यकः । परन्तु स्वरूपोपलब्धिभूमौ अग्रे सारयितुं सर्वोऽपि कर्मकलापः साधनशब्देन निरुच्यते । एतद्विज्ञानमाश्रित्यैव सनातने कर्मण्यनेकेऽधिकारभेदाः साधनभेदाश्च निर्णीताः ।। १३ ।।

अभ्यासदार्ढ्योपाय उपदिश्यते—

**स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः ।। १४ ।।**

सोऽभ्यासो दीर्घकालपर्यन्तं निरन्तरतया सत्कारेण श्रद्धाब्रह्मचर्यादिना सेवितः सन् दृढभूमित्वं प्रपद्यते । नियमितोऽभ्यासः स्वभावे परिणमति अतो दृढताविरहितं साधनं फलदायकं न भवति । दृढतापूर्वकसाधनेन सम्पद्यमानो नियमोऽभ्यासेन स्वाभाविको जायते ।

शास्त्रैर्निर्दिश्यते यत् प्रथमं किल सदाचारसाधनेन मनुष्यो मनुष्यत्वं लभते । पुनर्वर्णाश्रमधर्माभ्यासेन समुन्नतां ज्ञानभूमिमधिगच्छति

ज्ञानाधिगमेन च सदसदोर्ब्रह्मसर्गयोर्विज्ञानात् संसारबन्धनाद् विमुच्यते। ततश्च श्रीमद्गुरुदेवदयया अष्टाङ्गयोगमूलकानां मन्त्र-हठ-लय-राजाख्यानां चतुर्णां योगानां साधनैश्चित्तवृत्तिं निरुद्ध्य मुक्तिपदमधिकर्तुं शक्नोति। अतः साधने दीर्घकालस्य आवश्यकत्वम्। नियमिताभ्यासेनैव जीवप्रकृतिः परिवर्तते। ततश्च बहिर्दृष्टिर्विलीयते, अन्तर्दृष्टिश्चोत्पद्यते। यदि नियमितोऽभ्यासो न स्यात्, अर्थात् मध्ये मध्येऽभ्यासः खण्डितो भवेत् तर्हि तादृशाभ्यासेन तत्प्रकृतिर्न परिवर्तितुं शक्नुयात्। यतः साधकदृष्टिर्यदाऽन्तर्मुखतो बहिर्मुखतां प्रपद्येत चेत्तदानीं पूर्ववदसौ विषयपाशे पतति। अतोऽखण्डितरूपं क्रियमाणं साधनं फलाय कल्पते।

यावच्च शास्त्र-गुरुवाक्ययोः साधनेषु च साधकस्य श्रद्धा न स्यात्, तावन्नासौ नियमितं साधनं कर्तुं प्रभवेत्। अतः श्रद्धाया अत्यावश्यकता। शास्त्रेषु श्रद्धा त्रेधा विभक्ता। तथा हि--

"त्रिविधा भवति श्रद्धा देहिप्रकृतिभेदतः।
सात्त्विकी राजसी चैव तामसीति बुभुत्सवः॥
तासां तु लक्षणं विप्राः शृणुध्वं भक्तिभावतः।
श्रद्धा सा सात्त्विकी ज्ञेया विशुद्धज्ञानमूलिका॥
प्रवृत्तिमूलिका चैव जिज्ञासामूलिकाऽपरा।
विचारहीनसंस्कारमूलिका त्वन्तिमा मता॥" इति।

सात्त्विकश्रद्धायाः श्रेष्ठत्वमुक्तम्। अतश्चित्तवृत्तिनिरोधाय अभ्यासदृढतासम्पादनाय च श्रद्धया साकं दीर्घकालपर्य्यन्तं निरन्तरं साधनस्य परमावश्यकत्वमवगन्तव्यम्॥ १४॥

सम्प्रति वैराग्यलक्षणमाचष्टे--

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥ १५॥**

दृष्टम् = ऐहलौकिकं सुखम्, यद् ज्ञानेन्द्रियैरनुभवन् तन्निमग्नः सन् जीवस्तदधिगन्तुं समीहते। पुत्र-कलत्र-धनैश्वर्यादिसुखमत्र अन्तर्भवति।

तत्र स्थितौ स्वरूपोपलब्धौ, यत्नः प्रयत्न एव अभ्यासः प्रोक्तः। चञ्चलमन्तःकरणं सच्चिदानन्दरूपपरमात्मनो निश्चलभावं नैव ग्रहीतुं शक्नोति। शनैः शनैरभ्यासद्वारा निर्वातदीपवत् प्रशान्तेऽन्तःकरणे परमतत्त्वं प्रकाशमेति। क्रमशस्तदभ्यासस्यैव नाम साधनम् , येनान्तःकरणं बलोत्साहयत्नपूर्वकं तत्रैव परमाराध्ये परमात्मनि संलगति। ग्रन्थिकरणं ग्रन्थिविमोचनमुभयमपि कर्मैव। उभयत्रापि हस्तसञ्चालनं क्रियते। किन्तु आद्येन पदार्थो बन्धनमेति, अपरेण च बद्धपदार्थो विमुच्यते। तथैव जीवस्य स्वाभाविकं कर्म साधनकर्मापि समानमेव कर्मशब्दवाच्यम्। परन्तु जीवस्त्रिगुणकारिते स्वाभाविके कर्मणि ग्रस्यमानो गमागमरूपाद् भ्रमान्न निःसरति। किन्तु वेदविहितसाधनकर्मणा स मुक्तिभूमावग्रे सरन् मोक्षमधिगच्छति।

योगलक्ष्यभूतमुक्तिपदाधिगमाय क्रियमाणं यत् किमपि सुकौशलपूर्णं कर्म 'अभ्यास'पदेन व्यपदिश्यते। अभ्यासः साधनं वाऽधिकारभेदेन अनेकविधम्। सोपानद्वारा सौधपृष्ठमारोढुकामः पुरुषः किमपि सोपानम् आरोहति। किन्त्वसौ सौधपृष्ठमारोहतीत्येव मन्यते, सोपानपरम्पराभेदस्तु तिष्ठत्येव। तथैव साधनसुकौशलपूर्णकर्मसु परम्पराभूमिभेदोऽधिकारभेदश्च आवश्यकः। परन्तु स्वरूपोपलब्धिभूमौ अग्रे सारयितुं सर्वोऽपि कर्मकलापः साधनशब्देन निरुच्यते। एतद्विज्ञानमाश्रित्यैव सनातने कर्मण्यनेकेऽधिकारभेदाः साधनभेदाश्च निर्णीताः॥ १३॥

अभ्यासदार्ढ्योपाय उपदिश्यते—

**स तु दीर्घकालनैरन्तर्यसत्कारसेवितो दृढभूमिः॥ १४॥**

सोऽभ्यासो दीर्घकालपर्यन्तं निरन्तरतया सत्कारेण श्रद्धाब्रह्मचर्यादिना सेवितः सन् दृढभूमित्वं प्रपद्यते। नियमितोऽभ्यासः स्वभावे परिणमति। अतो दृढताविरहितं साधनं फलदायकं न भवति। दृढतापूर्वकसाधनेन सम्पद्यमानो नियमोऽभ्यासेन स्वाभाविको जायते।

शास्त्रैर्निर्दिश्यते यत् प्रथमं किल सदाचारसाधनेन मनुष्यो मनुष्यत्वं लभते। पुनर्वर्णाश्रमधर्माभ्यासेन समुन्नतां ज्ञानभूमिमधिगच्छति।

ज्ञानाधिगमेन च सदसदोर्ब्रह्मसर्गयोर्विज्ञानात् संसारबन्धनाद् विमुच्यते। ततश्च श्रीमद्गुरुदेवदयया अष्टाङ्गयोगमूलकानां मन्त्र-हठ-लय-राजाख्यानां चतुर्णां योगानां साधनैश्चित्तवृत्तिं निरुद्ध्य मुक्तिपदमधिकर्तुं शक्नोति। अतः साधने दीर्घकालस्य आवश्यकत्वम्। नियमिताभ्यासेनैव जीवप्रकृतिः परिवर्तते। ततश्च बहिर्दृष्टिर्विलीयते, अन्तर्दृष्टिश्चोत्पद्यते। यदि नियमितोऽभ्यासो न स्यात्, अर्थात् मध्ये मध्येऽभ्यासः खण्डितो भवेत् तर्हि तादृशाभ्यासेन तत्प्रकृतिर्न परिवर्तितुं शक्नुयात्। यतः साधकदृष्टिर्यदाऽन्तर्मुखतो बहिर्मुखतां प्रपद्येत चेत्तदानीं पूर्ववदसौ विषयपाशे पतति। अतोऽखण्डितरूपं क्रियमाणं साधनं फलाय कल्पते।

यावच्च शास्त्र-गुरुवाक्ययोः साधनेषु च साधकस्य श्रद्धा न स्यात्, तावन्नासौ नियमितं साधनं कर्तुं प्रभवेत्। अतः श्रद्धाया अत्यावश्यकता। शास्त्रेषु श्रद्धा त्रेधा विभक्ता। तथा हि--

"त्रिविधा भवति श्रद्धा देहिप्रकृतिभेदतः।
सात्त्विकी राजसी चैव तामसीति बुभुत्सवः॥
तासां तु लक्षणं विप्राः शृणुध्वं भक्तिभावतः।
श्रद्धा सा सात्त्विकी ज्ञेया विशुद्धज्ञानमूलिका॥
प्रवृत्तिमूलिका चैव जिज्ञासामूलिकाऽपरा।
विचारहीनसंस्कारमूलिका त्वन्तिमा मता॥" इति।

सात्त्विकश्रद्धायाः श्रेष्ठत्वमुक्तम्। अतश्चित्तवृत्तिनिरोधाय अभ्यासदृढतासम्पादनाय च श्रद्धया साकं दीर्घकालपर्य्यन्तं निरन्तरं साधनस्य परमावश्यकत्वमवगन्तव्यम्॥ १४॥

सम्प्रति वैराग्यलक्षणमाचष्टे--

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥ १५॥**

दृष्टम् = ऐहलौकिकं सुखम्, यद् ज्ञानेन्द्रियैरनुभवन् तन्निमग्नः सन् जीवस्तदधिगन्तुं समीहते। पुत्र-कलत्र-धनैश्वर्यादिसुखमत्र अन्तर्भवति।

आनुश्रविकं पारलौकिकसुखम् , यद्वर्णनं शास्त्रेषु समुपलभ्यते, शरीरत्यागानन्तरं यदधिगतिश्च। अत्रैव स्वर्गादिदिव्यानि सुखानि अन्तर्भवन्ति। इहलोकस्य परलोकस्य वा सर्वाण्यपि सुखानि मायारचितानि विद्यन्ते। तानि च क्षणभङ्गराणि सन्ति। अतः सुविचारदृष्टेरुदयेन चैद्‌द्विप्रकारकसुखस्य समीहाभावः प्रसज्यते। अन्तःकरणं च ततो विरक्तिमनुभवति। तदानीमेव मुमुक्षुचित्ते वशीकारसंज्ञा समुत्पद्यते। अर्थात् 'विषया मदधीनाः, नाहं विषयाधीनः' इति भावः समुदयति। एतदेव वैराग्यम्।

योगाचार्यैर्वैराग्यभूमौ क्रमोन्नतिमनुष्ठातुं चतस्रो दशा वर्णिताः। तथा हि—यतमानसंज्ञा, व्यतिरेक-संज्ञा, एकेन्द्रिय-संज्ञा, वशीकारसंज्ञा चेति। गुरु-शास्त्र-वाक्यसाहाय्येन जगति सारासारविचारे यत्न एव चित्तस्य यतमानावस्था। 'मानसिका एते दोषा विनष्टाः, एते चावशिष्यन्ते' इति विवेचनं हि व्यतिरेकावस्था। विषरूपविषयेषु दुःखज्ञानद्वारा इन्द्रियाणामप्रवृत्त्यां सत्यामपि स्वान्तःकरणे विषयतृष्णास्थितिरेव एकेन्द्रियावस्था प्रोच्यते। अन्ते चान्तःकरणस्य विषयतृष्णायाः समूलनाशेन चित्तस्य याऽवस्था, सैव वशीकारसंज्ञां लभते।

एतदवस्थाचतुष्क-विचारानुसारेण वैराग्यस्यापि योगशास्त्रे चत्वारो भेदाः प्रोक्ताः। तथा हि—१. मृदुवैराग्यम् , २. मध्यवैराग्यम् , ३. अधिमात्रवैराग्यम् , ४. परवैराग्यं चेति। यदा च विवेकवतो मानवस्य विवेकयुक्तान्तःकरणेन ऐहलौकिकविषयेषु दोषोऽनुभूयते, तदेतद् मृदुवैराग्यमित्युच्यते। ततश्च विवेकभूमावग्रे सरतः साधकस्य अन्तःकरणे ऐहलौकिक-पारलौकिकविषयान् प्रत्यरुचिरुत्पद्यते। तदानीं तदुन्नततरदशानाम मध्यवैराग्यम्। यदा च विवेकवता पुरुषेण विषयभोगेषु प्रत्यक्षतो दुःखमनुभूयते, तदानीं दुःखदायिषु पदार्थेषु चित्तासक्तेरसम्भवेन विषयान् प्रति दुःखदायको भावः साधकस्यान्तःकरणे प्रतिष्ठितो जायते, येन विषयसम्बन्धः स्वत एव निरस्यते। वैराग्यस्यास्य उन्नततमावस्थाया नाम अधिमात्रवैराग्यमिति। दशायामत्र स्थूलेन्द्रियाणां विषयेष्वनासक्तावपि तदन्तःकरणे विषयसुखस्य सूक्ष्मसंस्कारस्तिष्ठत्येव। यदा चैहलौकिक-

पारलौकिकविषयेभ्यो योगयुक्तसाधकस्य अन्तःकरणं विषयसंस्कारात्यन्त-शून्यतां भजति, ततश्च साधकचित्तं नितरां विरक्तं भवति, तदा एतद-वस्थाया नाम परवैराग्यमिति ।

पूर्वोक्ताभिरन्तःकरणस्य चतसृभिर्भूमिभिः चतुर्विधवैराग्यसमन्वयेन सिद्धान्तोऽयं स्थिरीक्रियते यत् यतमानावस्थया मृदुवैराग्यस्य, व्यतिरेका-वस्थया मध्यवैराग्यस्य एकेन्द्रियावस्थया अधिमात्रवैराग्यस्य वशीकारा-वस्थया च परवैराग्यस्य सम्बन्धः । इदमेव चतुर्विधवैराग्यलक्षण-मवधेयमिति ॥ १५ ॥

परवैराग्यस्य विशिष्टं कारणमभिधत्ते—

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

तद् वैराग्यं परं परमोत्कृष्टमवगन्तव्यं यत्र स्वरूपप्रकाशशालित्वात् पुरुषस्य प्राकृतिकगुणेषु पूर्णरूपेण अरुचिरुत्पद्यते । सत्त्वं रजस्तमश्चेति प्रकृतेर्गुणत्रयम् , पुरुषश्च त्रिगुणातीतः । यदा चान्तःकरणं बाह्यजगतः पराङ्मुखतां प्राप्य अन्तर्मुखीनं जायते, तदानीं तत्र पुरुषस्य प्रकाशः प्रादुर्भवति । तदा च नैव तद्बाह्यरूपं प्रकृतिगुणं द्रष्टुमिच्छति । ज्ञानो-दयेन यदा तेन प्रत्यक्षमिदमनुभूयते यत् प्रकृतिरेव दुःखरूपसृष्टिहेतुः, शुद्धबुद्धमुक्तस्वभावः पुरुषस्तद्भिन्नः, यथार्थं सुखं तु तत्रैवाऽऽस्ते, तदा-ऽन्तःकरणं पुनः कथं प्रकृतिगुणमुपभोक्तुमर्हेत् ?

यावदेतादृशं ज्ञानं नैव परिपूर्णतां भजति, अर्थात् यदाऽन्तःकरणं बाह्यतोऽभ्यन्तराभिमुखं प्रपन्नमपि पूर्वाभ्यासतो यदा कदा बाह्यविषयेषु आसज्जते, तदानीमेतादृशावस्थाया नाम अपरवैराग्यमिति । परन्तु यदा ज्ञानस्वरूपावस्था पूर्णतां प्राप्ता सती, परिपूर्णज्ञाननिर्विघ्नस्थितेर्नैव विचा-ल्यते, तदा तन्नाम परवैराग्यम् । वैराग्यस्येयं चरमावस्था ॥ १६ ॥

अभ्यासवैराग्याभ्यां चित्तवृत्तिनिरोधानन्तरं योगिना समधिगतदशाया वर्णनमातनोति—

## वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७ ॥

वितर्कस्य विचारस्य आनन्दस्य अस्मितायाश्च स्वरूपानुभवात् सम्प्रज्ञातः समाधिरुत्पद्यते। समाधिर्द्विविधः—१. सम्प्रज्ञातः, २. असम्प्रज्ञातश्च, सविकल्पो निर्विकल्पो वेति। प्रशस्तो निर्विकल्पः असम्प्रज्ञातो वा अग्रे वक्ष्यते। सविकल्पे समाधौ ज्ञातृ-ज्ञान-ज्ञेयरूपा त्रिपुटी भासते। अत्रावस्थायां वितर्के सति वितर्कानुगता, विचारे विद्यमाने विचारानुगता, आनन्देऽनुभूयमाने आनन्दानुगता, अस्मितायां सत्यामस्मितानुगता अवस्थाऽभिधीयते।

उक्तं च योगशास्त्रे—

"समाधिभूमौ प्रथमं वितर्कः किल जायते।<br>
ततो विचार आनन्दानुगता तत्परा मता।<br>
अस्मितानुगता नाम ततोऽवस्था प्रजायते॥" इति।

सम्प्रज्ञातसमाधौ यद्यप्यन्तःकरणवृत्तयो निरुद्धतामापद्यन्ते, तथापि तद्धि नैव वृत्तिनिर्बीजत्वमधिगच्छति। अन्तःकरणं सूक्ष्मरूपेण भासते। अत एव ज्ञातृज्ञेयज्ञानानां स्वतन्त्रसत्ता तिष्ठति। वेदान्तदर्शनोक्त्या मायया सांख्यदर्शनोक्त्या प्रकृत्या वा दृश्यमानमिदं जगत् सृष्टम्। येषां वेदान्ते पञ्चकोषनाम्ना सांख्ये पञ्चविंशतितत्त्वनामतो वा वर्णनमुपक्रान्तम्, तेषां सर्वेषां सिद्धान्तोऽयं यत् स्थूलजगत्-सृष्टिकर्त्री प्रकृतिः, पुरुषः परमात्मा वा ततो भिन्नः। स्थूलसृष्टिसम्बन्धिनि विचारे क्रियमाणे तद्भिन्नस्य परमात्मनोऽनुभवो जायते। अर्थात् समाधिस्थितौ सत्यां सर्गस्य उत्पत्ति-स्थित्योः बुद्धिं गमयित्वा तद्भिन्नपरमात्मविचारप्रवृत्तिरेव वितर्कानुगता अवस्था विज्ञेया।

किं वा कारणान्वेषणपुरस्सरं स्थूलात् सूक्ष्मे प्रवेश एव वितर्क उच्यते। अर्थात् दशायामत्र वितर्कः, विचार, आनन्दः, अस्मिता चेति चतस्रो दशास्तिष्ठन्ति। केवलं सूक्ष्मविचार एव विचारानुगतावस्था कथ्यते। दशायामत्र बहिर्विषयस्य स्थूलविषयस्य वा धारणा न तिष्ठति। सूक्ष्मरूपेण

केवलं ज्ञातुर्जीवस्य ज्ञानस्य ज्ञानशक्तेर्ज्ञेयस्य परमात्मनश्चेति त्रयाणां विचार एव तिष्ठति। अस्यां दशायां विचारः, आनन्दः, अस्मिता चेति-त्रितयस्य सद्भावः। इयं हि विचारानुगता दशा। आनन्दरूपायामस्यां तृतीयादशायां विचाररहित आनन्दोऽनुभूयते। अर्थादवस्थायामत्र आनन्दः अस्मिता च केवलं तिष्ठतः। इयमवस्था उपर्युक्तावस्थाद्वयतः समुन्नता। इयमानन्दानुगता अवस्थोच्यते। चतुर्थदशायां केवलमस्मिता-ज्ञानमेव तिष्ठति। केवलं स्वसत्ताभानातिरिक्तं नान्यत् किञ्चन अवबुद्ध्यते। इयमवस्था पूर्वोक्तदशात्रयादुन्नता। एषा किल अस्मितानुगतावस्था प्रतिपाद्यते।

आनन्दास्मितानुगतावस्थयोः सम्यक् परिज्ञानार्थम् अध्यात्मतत्त्वस्य किञ्चिद् रहस्यमवश्यमेवावगन्तव्यम्। अन्यथा एतयोः सम्यक् ज्ञानं न भवितुमर्हति। सत् चित् आनन्दश्चेति त्रिभावपरिपूर्णमात्मस्वरूपम्। अतो ब्रह्मपदमपि सच्चिदानन्दमयमस्ति। एषु त्रिष्वपि सत् चित् चेत्युभौ स्वप्रकाशकौ। अत एव जगत्यत्र जडचेतनौ द्वौ भावौ प्राकट्यं गच्छतः। परमानन्दभाव उभयत्र व्यापकत्वात् उभयसाहाय्येन व्यक्तिं गच्छति। अतो वेदस्य उपासनाकाण्डम् आनन्दविकासमेव जगत्सृष्टिकारणं मनुते। चिद्भावसाहाय्येन सद्भावे, सद्भावसाहाय्येन च चिद्भावे आनन्दः प्राकट्यमेति। अतो विषयानन्द आत्मानन्दश्चेत्युभावेव आत्मन आनन्द-रूपौ। एष च दर्शनशास्त्रसिद्धः सिद्धान्तः। अत आनन्दानुगतावस्थायां अस्मितानुगतावस्थातश्चित्तवृत्तेः सूक्ष्मता किञ्चिन्न्यूना भवति।

वस्तुतस्तु सविकल्पसमाधौ केवलमानन्दस्यैवानुभवात् सच्चित्पार्थक्यं समधिकमनुभूयते। अस्मितानुगतावस्थायामुभयोः पार्थक्यं न तथा प्रतीयत इति।

कदाचिदस्मितानुगतावस्थायां विचारे क्रियमाणे जिज्ञासुजनमानसे सन्देहोऽयमुत्पत्स्यते यद् यद्यवस्थायामस्यां केवलमस्मिताया एव सत्ता चेत्तर्हि ज्ञातृ-ज्ञान-ज्ञेयत्रयसम्भावना कथम्? समाधत्ते—यद्यपि कार्यतः

ज्ञातृ-ज्ञान-ज्ञेयत्रयस्वरूपं न परिदृश्यते, किन्तु बीजे वृक्ष इव कारणरूपेण तेषां त्रयाणां स्थितिस्तिष्ठत्येव। सूक्ष्मेक्षिकया विचारे क्रियमाणे तत्त्रयानुभवोऽपि जायते।

इमाश्चतस्रो दशाः सम्प्रज्ञातसमाधौ अन्तर्भवन्ति। तदनन्तरं हि असम्प्रज्ञातसमाधिदशा प्रादुर्भवति। दशेयमग्रे वक्ष्यते ॥ १७ ॥

चित्तवृत्तिनिरोधानन्तरं प्राप्तव्यद्वितीयावस्थालक्षणमुपवर्ण्यते—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

पूर्ववर्णिते सम्प्रज्ञातसमाधौ ज्ञातृ-ज्ञान-ज्ञेयरूपत्रिपुटयाः सूक्ष्मास्तित्वं तिष्ठति। परन्तु एतत्सूत्रोक्ते असम्प्रज्ञातसमाधौ तत्त्रितयविनाशात् केवलं पूर्णज्ञानरूपं चैतन्यमेवावशिष्यते, अभ्यासवैराग्यस्वरूपं वर्णयता महर्षिणा सूत्रकृता प्रकाशितमेतद् यद् अभ्यासपरिपूर्णतया परवैराग्येण च अन्तःकरणं पूर्णरूपेण सृष्टेर्बहिर्जगतो निवृत्तं जायते। बहिर्जगत्सम्बद्धा इन्द्रियविषया एवान्तःकरणे वृत्तिरूपां चञ्चलतामुद्भावयन्ति स्म। अन्तःकरणे बहिर्जगतः पूर्णरूपेण निवृत्ते सति वृत्तयो नाविर्भवन्ति। वृत्तिरूपतरङ्गाणां पूर्णतया विनाशे अभ्यास-परवैराग्ययोः पूर्णावस्थया च असम्प्रज्ञातसमाधिरुदेति।

अस्यामवस्थायां वृत्तीनां लेशतोऽपि सद्भावो न स्यात्। सर्वतः पृथग्भूतं चैतन्यं स्वरूपमधिगच्छति। इयं दशा निर्बीजसंज्ञामधिगच्छति। इयं योगस्य परिपूर्णावस्था। अयमेव निर्विकल्पः समाधिः। एष एव वेदान्तस्य ब्रह्मसद्भावः। इयमेव भक्तिमार्गस्य परा भक्तिः। एतदेव कैवल्यमिति वर्णितम्। स्मर्यते चात्र—

"परं ज्ञानं परं सांख्यं परं कर्मविरागता।
परा भक्तिः समाधिश्च योगपर्यायवाचकाः॥
भक्तेस्तु या परा काष्ठा सैव ज्ञानं प्रकीर्तितम्।
वैराग्यस्य च सीमा सा ज्ञाने तदुभयं यतः॥" इति।

असम्प्रज्ञातसमाधेरपि भेदद्वयं शास्त्रे समुपवर्णितम्। अवस्थाद्वयमिदमतिसूक्ष्मम्, साधारणबुद्धेरगम्यं चापि। तद्भावभाविता योगिन एवावस्थाद्वयमनुभवन्ति। अवस्थाद्वयस्यैतस्य बाह्यलक्षणैरपि किञ्चित्परिज्ञानं कर्तुं शक्यते। यदा योगस्य परां काष्ठां प्राप्य असम्प्रज्ञातसमाधिमधिरुह्य च महात्मान आत्मारामा भवन्तो बहिर्जगतः सर्वविधमपि स्वसम्बन्धं विरहय्य उन्मत्ताः स्तब्धाः निष्क्रियाश्च भवन्ति, तदा तेषामवस्था 'ब्रह्मकोटि'नाम्ना व्यवह्रियते। यदा च ते योगस्य परिपूर्णदशामवाप्य, असम्प्रज्ञातसमाधिमारुह्य च सर्वशक्तिमतो जगदीश्वरस्य समीहया लोकोपकारिकार्यकलापेषु, निष्कामव्रतधारि - संसारोपकारपरायण - पूर्वकालीनमहर्षिवत् प्रवर्तमानास्तिष्ठन्ति, तदा महापुरुषदशेयम् 'ईशकोटि'नाम्ना समाख्यायते।

प्रचलन् स्थिरश्च वायुर्द्विविधः, तथैव निष्क्रियः संसारोपकारी चेत्युभावपि महापुरुषौ सिद्धौ स्तः। केवलमुभयोर्बाह्यलक्षणो भेदः। निष्कर्षोऽयं यत् ब्रह्मकोटिजीवन्मुक्तयोगिभिः संसारोपकारसम्भावना नास्ति। जागतिकोपकारा यावन्तोऽभवन्, भवन्ति, भविष्यन्ति च, सर्वे ते ईशकोटिजीवन्मुक्तैरेवेति निश्चप्रचम्। यथा चोक्तं स्मृतौ—

"परहंसस्य प्रारब्धकर्मवैचित्र्यदर्शनात्।
ईशकोटिर्ब्रह्मकोटिरिति द्वे नामनी श्रुते॥
परहंसो ब्रह्मकोटेर्मूकस्तब्धो जडस्तथा।
उन्मत्तो बालचेष्टश्च न जगत्तेन लाभवत्॥
परहंसस्त्वीशकोटेः परां काष्ठां गतोऽनिशम्।
निष्कामस्य व्रतस्यात्र जगज्जन्मादिशक्तिमत्॥
जगदीशप्रतिनिधिर्भूत्वा तत्कर्मसंरतः।
जगद्धितार्थं विप्रर्षे! एवं विद्धीशरूपिणम्॥" इति।

एतत्सूत्रोक्तस्य वृत्तिनाशरूपसंस्कारावशेषस्य असम्प्रज्ञातसंज्ञकनिर्विकल्पसमाधेरिदमेव तात्पर्यं यत् सुवर्णमिश्रितः सीसकोऽग्नौ प्रक्षिप्तो सुवर्णमलं ज्वालयित्वा स्वयमपि ज्वलितो भवति, तथैव निरोधसंस्कारः पूर्णरूपेण

चित्तवृत्तीः प्रणाश्य स्वयमपि प्रणश्यति। अनन्तरं कोऽपि संस्कारो नैव तिष्ठति। केवलमन्ते स एव निर्लिप्तः सच्चिदानन्दस्वरूपः परमात्मैव अवशिष्यते। समाधिस्थो महात्मा स्वविग्रहेण यत् किमप्यनुतिष्ठति, तदीयक्रियमाण-कर्मणां संस्कारो निर्वासनं तदन्तःकरणं न स्पृशति। व्युत्थानदशायाः तदीयाः सर्वेऽपि संस्कारा वह्निभृष्टबीजवत् व्यर्थतां प्रयान्ति। अस्यां दशायां तस्य कार्याकार्यं शरीरस्य स्थितिरस्थितिर्वा समानतां प्रयाति। अयमसंप्र-ज्ञातसमाधिर्योगस्य चरमसीमा, साधनस्य चान्तिमं लक्ष्यमवधेयम् ॥ १८ ॥

इदानीमसंप्रज्ञातसमाधिं निर्विघ्नमनुष्ठातुं सम्प्रज्ञातसमाधिविघ्नं निराकर्तुमुच्यते—

## भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

देहाध्यासशून्यतया महत्तत्त्वादिविकारेषु अव्यक्तप्रकृतौ च विलयेन संस्कारकारणरूपो भवप्रत्ययो नाम समाधिविघ्नः समुदेति। महर्षिणा सूत्रकारेण समाधेर्भेदद्वयमुपवर्ण्य तं च निर्विघ्नमनुष्ठातुं विघ्नवर्णनमनु-ष्ठीयते। अर्थात् कैवल्यमार्गेऽग्रेसतुं पुरुषार्थभेदेन समाधिस्थः साधको यान् विघ्नान् अधिगच्छति, ते साम्प्रतं सविस्तरमुपवर्ण्यन्ते।

के चन योगिनो महात्मानो योगलक्ष्यभूतस्य असम्प्रज्ञातसमाधेः पूर्णावस्थाभिमुखं प्रयान्तो मध्य एव तिष्ठन्ति, नान्तं गच्छन्ति। यद्यपि ते विजित्येन्द्रियाणि विषयवैराग्ययुक्ताः सम्पद्यन्ते, तथापि निजान्तःकरण-निरोधरूप-संस्कारसाहाय्येन देहाध्यासशून्याः सन्तो महत्तत्त्वादिप्रकृति-विकारेषु विलीयन्ते, किं वा स्वकीयनिर्मलान्तःकरणेन मोक्षानन्दवत् स्वान्तःकरणप्रतिबिम्बितचैतन्याभाससुखं भुञ्जते। अर्थात् प्रकृतौ लीना अपि प्रकृतिद्वारा कैवल्यसुखानुरूपसुखे निमग्नास्तिष्ठन्ति। द्विप्रकाराऽपि लयावस्थेयं 'भवप्रत्यया'ख्या संसारकारणरूपयोगविघ्नकारिणी दशा मन्यते। द्विविधदशायामपि प्रकृतेः सूक्ष्मावस्थान्तर्गतस्थितित्वात् तस्याः पुन-र्विस्तारः सम्भवति। अर्थात् स्वपूर्वावस्थां तदन्तःकरणमधिगच्छति। अतो-ऽवस्थेयं योगसाधनविघ्नस्वरूपा अवगन्तव्या। सा च मुमुक्षूणां नैव हिता-धायिका। उपर्युक्तो द्विविधोऽपि विघ्नो भवप्रत्ययदशायामुत्पद्यते।

विज्ञानमिदं सुस्पष्टमवधारयितुमिदमुच्यते यद् योगिनो योगस्य सप्तभूमीरतिक्रामन्तो यदाऽष्टमीं समाधिभूमिमाश्रयन्ति, तदानीं यदि साधनवेगस्य वैराग्यस्य च परिपूर्णता न स्यात्, तर्हि ते देहाध्यासरहिता अपि महत्तत्त्वादिसूक्ष्मविचारेषु निमज्जन्ति, किं वा कारणप्रकृतौ विलीनाः सन्तो निजान्तःकरणप्रतिबिम्बितचैतन्यमेव आत्मस्वरूपं मन्यमानास्तृप्तिमापद्यन्ते। सुतरां तादृशविघ्ने समुपस्थिते साधनतीव्रतायाः परवैराग्यस्य चाभावेन समुन्नतसमाधिभूमिमासादयन्तोऽपि निरुद्धास्ते नाग्रेसरन्ति। तदानीं तेषां कैवल्यमार्गाग्रेसरणं निरुद्ध्यते।

योगस्य चतुर्विध-क्रियासिद्धांशानां मन्त्रयोग-हठयोग-लययोग-राजयोगानां साधनप्रणालीपर्यालोचनया योगाचार्यैरिदं निश्चीयते यत् आत्मानुसन्धानपूर्णं राजयोगं विरहय्य त्रिविधास्वन्यासु साधनप्रणालीषु तादृशविघ्नसम्भावना तिष्ठति। राजयोगे तत्त्वज्ञानस्य वासनाक्षयस्य मनोनाशस्य च सहैव जायमानत्वात् तद्विघ्नसम्भावना न तिष्ठति। मन्त्र-हठ-लयनामकेषु योगेषु बहिःसाधनानां समधिकसम्बन्धसत्त्वात् योगत्रितयसमधिगतायां सम्प्रज्ञातसमाधिदशायां तादृशविघ्नप्राप्तेः समधिकसम्भावना। मन्त्रयोगे रूपमन्त्रयोरद्वैततया समाधिः समवाप्यते। अतोऽत्र महत्तत्त्वादिविकारेषु विलयः समधिकः सम्भाव्यते। हठयोगसमाधेर्वायुनिरोधद्वारा सम्पद्यमानत्वात् लययोगसमाधेश्च नादबिन्दोरद्वैततया समधिगतत्वाच्च उभयत्रापि सूक्ष्मप्रकृतिसाहाय्येन प्रतिबिम्बित आत्मस्वरूपे विलयनात् समुन्नतिनिरोधः सम्भाव्यते। अत एव हठयोगे जडसमाधिरूपा नानाविधा योगविघ्नाः समुद्यन्ति। कैवल्याभिलाषिणो योगिनः स्वसाधनदृढतायां परवैराग्यपूर्णतायां च परिपूर्णं नैजं ध्यानं ददतो भवप्रत्ययदशायामेव न निरुद्धा भवेयुरित्येतत्सूत्रतात्पर्यम्। अतोऽसम्प्रज्ञातसमाधेः पूर्णावस्थारूपं कैवल्यपदमधिगन्तुमीहमानैः एतदवस्थापरित्यागो नूनमनुष्ठातव्यः। अन्यथा तैर्मध्य एव निरुद्धैर्भवितुं शक्यते॥ १९॥

विघ्नरहितां द्वितीयामवस्थां वर्णयति —

**श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥**

उपर्युक्तविघ्नविरहितयोगिभिरसम्प्रज्ञातसमाधिः श्रद्धा-वीर्य-स्मृतिसमाधि-प्रज्ञापूर्वकोऽधिगम्यते ।

पूर्वसूत्रे भवप्रत्ययदशां वर्णयित्वा महर्षिणा सूत्रकृता उपायप्रत्ययावस्था इदानीं वर्ण्यते । दृढविश्वासेन कुत्र चित् पदार्थे प्रीतिविशेष एव 'श्रद्धा' । इयं प्रागपि निरूपिता । श्रद्धायां द्रढीभूतायां तत्प्राप्तये योगिनो दृढोत्साह एव 'वीर्य'मभिधीयते । उत्साहयुक्तसाधनानि समनुतिष्ठता साधकेन यदा ब्रह्मानन्दपथेऽग्रेसरेण भूयते, तदा उत्तरोत्तरमानन्दोऽभिवर्धते । तस्य स्मरणमेव 'स्मृति'रभिधीयते । एतस्याः स्मृतेः स्थिरतायां सत्यां यदन्तःकरणमानन्दमयं जायते, तन्नामैवात्र सूत्रे प्रोक्तः 'समाधि'-रवधेयः । एवं किल श्रद्धोत्साहस्मृतिसमाधिसाहाय्येन अन्तःकरणं परिपूर्णानन्दमयं प्रकाशं यदधिगच्छति, तत्परिपूर्णावस्थैव योगशास्त्रे 'प्रज्ञा'-ऽभिधीयते । अस्यां प्रज्ञायां स्थिरीभूतायाम् 'असम्प्रज्ञातसमाधि'रुत्पद्यते । तं च 'निर्विकल्पा'परनामकं समाधिमधिगच्छन् योगिराजो 'जीवन्मुक्त'-संज्ञां लभते ।

दशायामस्यां योगिराजस्यान्तःकरणं कदापि प्रज्ञां न विरहति । तस्याद्वैतस्थितिः सदैव तिष्ठति । अतः पूर्वसूत्रविघ्ननिराकरणेन साधनतीव्रतायाः परवैराग्यस्य चावलम्बनेन योगिराजः श्रद्धावीर्यस्मृतिसमाधिप्रज्ञा-साहाय्येन स्वमार्गं विघ्नविरहितमनुतिष्ठन् कृतकृत्यतां प्रपद्यते । इयमेव द्वितीया श्रेष्ठदशा । एतदनवरोधसंज्ञकमार्गस्य नाम 'उपायप्रत्ययावस्थे'ति । अत्र प्रथमत एव वैराग्यसम्बन्धः । शेषे वैराग्यपूर्णावस्थारूप-परवैराग्य-साहाय्येन साधकः प्रज्ञामधिगत्य कैवल्यपदमधिकरोति ॥ २० ॥

विघ्नरहितसरलमार्गे प्रस्थितस्य समाधिसिद्धिलाभायोपाय उपदिश्यते—

**तीव्रसंवेगानामासन्नः ॥ २१ ॥**

तीव्रः संवेगो येषां तेषां समाधिरासन्न इत्यर्थः । पूर्वसूत्रोक्तसाधनक्रमेण

असम्प्रज्ञातसमाधिदशाऽधिगम्यते। किन्तु अनुष्ठीयमानोपायवेगो यावान् अधिकः साधके दृश्यते, तावत्सत्वरमसौ समाधिपदमधिकुरुते। वैराग्येण यथा विषयबन्धनं शिथिलायते, तथैव साधनोपायसंवेगलक्ष्यस्य समाधेरभिमुखमाकर्षणं साधके प्रवर्धते।

साधके संवेगस्रोतसस्तीव्रताऽवश्यम्भाविनी। तदैवासौ विविधविघ्नान् निरस्यन् साधनपरमलक्ष्यम् असम्प्रज्ञातसमाधिमधिकरोति। आरम्भत एव यदि परवैराग्यं लक्ष्यभूतं भवेत्, तथैव साधनसहायकानां श्रद्धावीर्यादीनां संवेगोऽपि तीव्रतमो भवेत्, तर्हि भवप्रत्ययसम्बन्धीयविघ्नानां नास्ति सम्भावना। नासौ योगिराजः सिद्धिविघ्नग्रस्तो मध्येमार्गं निरुद्ध्यते। तदानीं तदीयः पन्था निष्कण्टकतां भजति॥ २१॥

संवेगभेदमाचष्टे—

**मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः॥ २२॥**

साधनोपायसंवेग-स्रोतोवेगविचारतः संवेगोऽसौ त्रिधा विभक्तः—मृदुपायः, मध्योपायः अधिमात्रोपायश्चेति भेदात्। यदा पूर्वोक्तानां चतुर्णामुपायानां वेगो मृदुः स्यात्, तदाऽसौ मृदूपायसंवेगः प्रोक्तः। यदि मध्यस्तदाऽसौ मृदुतः समधिको मध्योपायसंवेग उक्तः। यदि चोपायानां संवेगोऽतितीव्रस्तदाऽसौ अधिमात्रोपायसंवेगोऽभिधीयते।

त्रयोऽप्येते मृदूपायप्रभृतयः संवेगा नवधा विभक्ताः। तथा हि—१. मृदुमृदूपायः, २. मृदुमध्योपायः, ३. मृदुतीव्रोपायः, ४. मध्यमृदूपायः, ५. मध्यमध्योपायः, ६. मध्यतीव्रोपायः, ७. अधिमात्रमृदूपायः, ८. अधिमात्रमध्योपायः, ९. अधिमात्रतीव्रोपायश्चेति।

नवस्वप्येतेषु अधिमात्रतीव्रोपायसंवेग एव सर्वाभ्यर्हितः। तस्यैवोदयेन साधकस्त्वरितमेव स्वकीयं लक्ष्यभूतं कैवल्यमासादयितुमर्हः। सूत्रमिदमभ्यासवैराग्याभ्यां समाधिप्राप्तेरन्तिमं समवधेयम्। सुतरां योगिनो महात्मानो मृदु-मध्यसंवेगौ अपहाय केवलमधिमात्रसंवेगमाश्रयन्तः स्वीयं योगमार्गं निष्कण्टकं सरलं च विदध्युः॥ २२॥

समाधिसाधनाय पूर्वोक्तोपायव्यतिरिक्तान् सरलोपायान् वर्णयति —

**ईश्वरप्रणिधानाद् वा ॥ २३ ॥**

सूत्रकारो महर्षिः प्रथमं किल चित्तवृत्तिनिरोधरूपयौगिकसाधारणोपायेन मुक्तिपदाधिगमोपायान् वर्णयित्वा निःश्रेयसलाभाय उपायान्तरमपि व्याहरति। महर्षेरिदमेव तात्पर्यं यत् अष्टाङ्गयोगरूपसाधारणसाधनेन चित्तवृत्तिनिरोधे सति मुक्तिस्तु लभ्यत एव। किन्तु वक्ष्यमाणप्रकारया ईश्वरभक्त्या बहुविधोपायतत्याऽपि समाधिसिद्धिरूपं कैवल्यमधिगन्तुं पार्यते।

सूत्रेऽत्र केवलमीश्वरप्रणिधानेनैव समाधिप्राप्तिरुपवर्णिता। परमगुरौ ईश्वरे सर्वकर्मसमर्पणपूर्वकं भक्तिरेव प्रणिधानशब्दार्थः। भक्तिमार्गप्रधानाचार्यैः देवर्षिनारदेन महर्षिभ्यां शाण्डिल्याङ्गिरोभ्याञ्च ईश्वरे परमानुराग एव भक्तिशब्दार्थः प्रोक्तः। यदा साधकचित्ते तादृशो विश्वासो भवेत् यत् सर्गेऽत्र सर्वविधकार्यकलापविधायकः सर्वशक्तिः केवलं परमेश्वर एव। 'यदपि किञ्चिद् भवति, भवतु' इति विमृश्य भक्तिमान् साधकः परमपितुर्ध्याने निमग्नः सृष्टितो मुखं परावर्तयन् परमात्माभिमुखमेव निरीक्षमाणः सर्वशक्तिमय-गुणातीतगुणानेव संस्मरन् केवलमीश्वरे एव प्रेममग्नस्तिष्ठति, तदानीं तद्भक्तिरेव परमेश्वरभक्तिनाम्ना प्रोच्यते।

अहङ्कार एव जीवं कर्मणि निबध्नाति। यतो जीवः स्वीययोग्यतायां विश्वसन् निजपुरुषार्थेनैव दुःखनिवृत्तिं सुखोपलब्धिं च मनुते। एतादृशाहङ्कारेणैवासौ त्रितापदुःखरूपं बन्धनमधिगतः। परन्तु भक्तौ उदीयमानायां यदा साधकः केवलमीश्वरमेव अवलम्बमानः सदसद्विषयेभ्य निवर्तमानः परमेश्वरप्रणिधान एव निमग्नस्तिष्ठति, तदानीं स्वत एव तदन्तःकरणात् तमोरूपाहङ्कारस्तिरोदधाति। तदीयानि च विषयवासनारूपाणि बन्धनानि शैथिल्यं प्राप्नुवन्ति। ईश्वरप्रणिधानेन चित्तवृत्ति निरोधयन् परमेश्वरध्यानं कुर्वन् साधकः समाधिमधिगच्छति।

सूत्रेणैतेन महर्षिः सूत्रकारो योगेन भक्त्या सम्बन्धं प्रदर्शयन् प्रमाणितवान् यत् साधकाः भक्तिसाधनेन कैवल्यरूपं परमानन्दपदमधिगन्तुमर्हन्तीति। वेदकाण्डत्रयमध्यस्थमुपासनाकाण्डीयं दैवीमीमांसादर्शनं यद्धि कैवल्यप्राप्तिप्रधानसहायकमस्ति, योगदर्शनेन सह तस्य समन्वयोऽप्यनेन सूत्रेण सम्यग् बोभवीति। उपासनायाः कृते भगवद्भक्तिः प्राणरूपा, योगश्चाङ्गस्वरूपोऽवधेयः। अत एव भगवद्भक्तिसम्बन्ध ईदृग् द्रढीयान् दर्शनसिद्धान्तेऽत्र सुनिरूपितः।

अधिकारभेदमनुसृत्य भगवद्भक्तिर्द्विविधा—१. गौणी, २. परा चेति। पराभक्तिमधिगन्तुं शरीरेण मनसा च प्रथमतः साध्यमाना भक्तिर्गौणीति कथ्यते। गौण्या अपि भेदद्वयम्—वैधी रागात्मिका चेति। गुरोराज्ञामधिगत्य विधिना साध्यमाना भक्तिर्वैधीत्युच्यते। भक्तिभावप्रधान-रसास्वादनपुरस्सरं स्वकीयप्रकृतिप्रवृत्त्यनुसारेण भक्तिरसेषु चैकस्मिन् भावे निमग्नो भक्तो रागात्मिकाया भक्तेरधिकारं प्रपद्यते। सुतरां भक्तिरससागरे भक्तं निमज्जयन्ती उन्मज्जयन्ती च भक्तिरेव रागात्मिकेत्युच्यते। उपासनासम्बन्धीयदर्शनशास्त्रे समस्ता अपि भक्तिभेदाः सम्यगुपवर्णिताः सन्ति। एवं किल गौण्या भक्तेः साधनेन साधकः समुन्नतां भूमिमधिगच्छन् भगवत्प्रीतौ तन्मयो भूत्वा यथास्वरूपं साक्षात्कुरुते सैव पराभक्तेरवस्था। पराभक्तिर्निर्विकल्पसमाधिश्चेत्युभयम् एकमेव वस्तु॥ २३॥

इदानीमीश्वरो लक्ष्यते—

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥ २४॥**

यत्र क्लेशाः, कर्माणि, कर्मफलानि, संस्काराश्च न विद्यन्ते, तादृशः पुरुषविशेष एवेश्वरशब्दवाच्यः। अविद्यासमुत्पन्न-विषयबन्धनेन राग-द्वेषसाहाय्यतश्चित्तवैक्लव्यमेव क्लेशः। क्लेशा अग्रिमसूत्रे वक्ष्यन्ते। यानि वेदविहितनिषिद्धकर्माणि मनोवचनशरीरकृतानि शुभाशुभानि पुण्यपापजनकानि, तानि कर्माण्यभिधीयन्ते। एतैरेव कर्मभिर्यदा फलान्यु-

त्पद्यन्ते, अर्थात् शुभकर्मभिः समुत्पद्यमानं सुखमशुभकर्मजनितं दुःखं च यज्जीवोऽनुभवति, तन्नामैव कर्मफलरूपो विपाकः। अन्तःकरणविद्यमान-कर्मसंस्कारत एव वासना समुत्पद्यते। तद्वासनामूलभूतः संस्काराख्य आशयः। सुतरां क्लेश-कर्म-विपाकाख्य-कर्मफलसंस्कारापरनामा-ऽऽशयै-रसंस्पृष्ट ईश्वर इत्युच्यते। जीवे चैते चत्वारः संलग्नाः सन्ति, परन्तु सर्व-शक्तिः परमेश्वरस्तदसंस्पृष्ट इत्यर्थः।

अविद्यावशगो जीव आत्मानं कर्तारं मन्यते। लोहितवर्णप्रतिविम्बितः स्फटिकमणिर्यथा लोहितायते, तथैव प्रकृतिक्रियमाणकर्माणि निर्लिप्तः पुरुषः स्वकीयानि मन्यते। एतदविद्यारूपभ्रमवशीभूतो जीवः प्रकृतिजनित-नानाकर्मज-सुखदुःखेषु ग्रस्तो जायते। अतोऽविद्यैव जीवस्य जीवत्वहेतुः।

पूर्णप्रकाशः परिपूर्णज्ञानः पूर्णशक्तिर्निर्लिप्त ईश्वरोऽविद्यान्धकारविरहित-त्वात् क्लेश-कर्म-विपाका-ऽऽशयरूप-बन्धनव्यतिरिक्तः। ईश्वरः सर्वत्र व्याप्नोति। विराड्रूपपरमेश्वरे समस्तसंसारो विराजते। अर्थात् पर-मात्मा सर्वत्र विद्यते, परमात्मनि च सर्वाणि जगन्ति विराजन्ते, किन्तु स सर्वतो निर्लिप्तः। तदीयशक्त्यैव विविधानि संसारकार्याणि प्रचलन्ति। परमाणुरपि तदाज्ञा-नियमनिबद्ध एव। पूर्णशक्तित्वात् पूर्णज्ञानरूप-विद्याधिपतित्वाच्चासौ निर्लिप्तः। संख्यातीताः श्रेष्ठपुरुषाः जीवावस्थायां विद्यमाना अपि साधनद्वारा परिपूर्णज्ञानमधिगच्छन्तो मुक्तिमासादयन्ति। परन्तु न तथेश्वरो मन्तव्यः। अर्थादीश्वरे बन्धनमल्पज्ञानं वा लेशतोऽपि नास्ति। स हि त्रिष्वपि कालेष्वेकरूपः परिपूर्णैश्वर्यशाली। तदीयैश्व-र्याणां न्यूनाधिक्याभावः। अतोऽसौ जीवस्वरूपभिन्नः संसारोत्पत्ति-स्थिति-लयविधाता जेगीयते।

सांख्यप्रतिपादितः पुरुषस्तु स्वरूपतो नित्यशुद्धबुद्धमुक्तस्वभावो वर्तते, किन्तु प्रकृतिसम्पर्कतः कर्तृत्व-भोक्तृत्वाभिमानेन तत्रौपचारिको बन्धन-सम्बन्धस्तिष्ठत्येव। परं परमेश्वरे प्राकृतिको बन्धनाभासोऽपि नास्ति। अत ईश्वरः सदैव क्लेशकर्मादिसम्बन्धशून्यः। 'अतः सांख्यीयपुरुष-

वैशिष्ट्यद्योतनार्थम् ईश्वरः 'पुरुषविशेषः' प्रतिपादितः। सांख्यशास्त्रीय-बहुपुरुषवादः प्रत्येकशरीरानुमेयः, पुरुषभावसिद्धश्च। परन्तु योगशास्त्रस्य एकोऽद्वितीयश्च पुरुषविशेषस्तद्भावभिन्नत्वात् पुरुषविशेषशब्दवाच्यतायाः सर्वथा योग्य एव। जीवपिण्डेषु कूटस्थचैतन्यरूप-बहुपुरुषदर्शनं लौकिक-प्रत्यक्षगम्यम्। किन्तु सर्वत्रैवानुस्यूतस्य एकस्याद्वितीयस्य व्यापक-पुरुषविशेषस्यानुभवो यौगिकालौकिक-प्रत्यक्षगम्य इति पूज्यपादमहर्षिणा पुरुषविशेषशब्दो व्यवहृत इति ॥ २४ ॥

तस्य द्वितीयलक्षणमुच्यते—

**तत्र निरतिशयं सर्वज्ञबीजम् ॥ २५ ॥**

तत्र ईश्वरे समस्तज्ञानबीजं निभाल्यते। पदार्थो यो ह्रसति वर्धते च, लघुर्गुरुर्वा वोभवीति, तदवधिरवश्यम्भावी। जीवे प्रतीयमानो ज्ञानांशस्तदन्तःकरणचञ्चलता - तारतम्यतो न्यूनोऽधिकश्च जायते। विषय-सम्बन्धेनान्तःकरणं विषयस्वरूपतां प्रपद्यमानं चाञ्चल्यमावहति। यत्रान्तःकरणे यावान् विषयसम्बन्धस्तत्र चाञ्चल्यमपि तावदेव। अतश्चञ्चलतानुसारत एव ज्ञानप्रकाशो न्यूनोऽधिको वा सम्भवी। अन्तःकरणे च विषय-सम्बन्धह्रासेन चञ्चलत्वन्यूनत्वेन ज्ञानरूपप्रकाशोऽधिकायते। सुतरां जीवान्तःकरणचञ्चलता-तारतम्यत एव ज्ञानन्यूनाधिक्यं प्रतिपद्यते।

पूर्वोक्तसिद्धान्तेन सिद्धमिदं यत् जीवे ज्ञानस्य न्यूनाधिक्यं तिष्ठति। अविद्यावशवर्तित्वात् जीवान्तःकरणमेकदेशदर्शि। अर्थादविद्यया हेतु-भूतया जीवः सुखदुःखस्वरूपमात्मानमनुभवति। अतस्तदन्तःकरणं देश-कालपरिच्छिन्नम्। सुतरां जीवे ज्ञानपूर्णताऽभावः। अविद्याशक्तिवशगो जीवः। त्रिगुणस्वरूपा विद्यारूपिणी महाशक्तिः सदैवेश्वराधीना। अत एवेश्वरो निर्लिप्तः। प्रकृतिगुणग्रस्तो जीवोऽल्पज्ञतां प्राप्नोति। तदीयं ज्ञानं विकासमेति ह्रसति च। किन्तु विद्यारूपिण्याः प्रकृतेरीश्वराधीनत्वात् तत्र परिवर्तनाभावात् ज्ञानस्य पराकाष्ठा। अतोऽसौ सदैव परिपूर्ण-ज्ञानस्वरूपः। स्वीयान्तःकरणेन अल्पज्ञजीवो ज्ञानमधिकमपि समुपार्जयितु-

मर्हति। किन्तु तदीयमन्तःकरणं देशकालपरिच्छिन्नत्वादसम्पूर्णमेव तिष्ठति। परमीश्वरो न तथाविधः। अतोऽसौ निर्लिप्तः। तं हि देशकालौ नैव कदापि स्पृशतः।

सर्वव्यापकः सर्वशक्तिः परिपूर्णज्ञानस्वरूपः परमेश्वरो जीवनमनोभावं सर्वं विजानाति। सम्पूर्णमपि ज्ञेयं वस्तु नैव तदीयज्ञानतो व्यतिरिच्यते। कालत्रयेऽप्येकरूपस्य ईश्वरस्य ज्ञानपरिपूर्णत्वमेव ईश्वरीयसर्वज्ञत्वमवधेयम्॥ २५॥

तस्य तृतीयलक्षणं व्यनक्ति—

**स एष पूर्वेषामपि गुरुः कालेनानवच्छेदात्॥ २६॥**

कालकृतसीमराहित्यादसौ एव पूर्वेषां प्राचीनानामपि गुरुस्थानीयः। अनन्तकालत आरभ्य इदानीं यावद् ये किल ज्ञानप्रकाशका महापुरुषा जन्मानि लेभिरे, ते सर्व एव परमात्मविभूतयः। ये महर्षय आचार्यचरणाश्च शास्त्राणि द्वारीकृत्य जगति ज्ञानज्योतिर्विस्तरयामासुस्ते सर्व एव तदंशरूपत्वाद् भगवद्विभूतय एव मन्तव्याः।

महात्मानो महर्षयः समुन्नत-ज्ञान-विज्ञानशालिनोऽपि ईश्वरीयविभूतय एव विज्ञायन्ते। ते च परमेश्वरशिष्यस्वरूपा एव। महर्षिसमूहजनितप्रकाशः किल पूर्णज्योतिर्मयस्य अनन्तकिरणधारिणः सूर्यस्वरूपस्य परमपितुरेकैकं किरणमात्रमेवावधेयम्। ते हि परमेश्वराधिगतमेव ज्ञानं संसारे प्रकटयाञ्चक्रिरे। पूर्वजमहर्षीणां पूर्वापरसम्बन्धस्तिष्ठति। तेषां गुरवः परम्परया श्रूयन्ते। अतस्ते सर्वेऽपि कालावच्छिन्नाः। परमीश्वरो न कालावच्छिन्नः, यतः सर्वशक्तिः सर्वज्ञाता त्रिकालव्यापी परमेश्वरः सर्वेषामप्यादिगुरुः। स च त्रिष्वपि कालेषु चैकरूपेण वर्तमानः सर्वविधज्ञानाधारः सर्वोपदेष्टा ज्ञानगुरुराम्नायते॥ २६॥

लक्षणवर्णनानन्तरं साधननिर्देशाय ईश्वरस्य वाचकं व्याचष्टे—

**तस्य वाचकः प्रणवः॥ २७॥**

प्रणवः ॐकारस्तस्य परमेश्वरस्य वाचको मन्यते। येन पदार्थो विज्ञायते अर्थात् यः पदार्थं वक्ति, स वाचकः प्रोच्यते। ज्ञातुं वक्तुं वा योग्यो हि 'वाच्य'शब्देनाभिधीयते। सुतराम् ईश्वरो वाच्यः, प्रणवो वाचकश्च। अर्थात् प्रणवद्वारा परमात्मा विज्ञायत इत्यर्थः।

एकस्थानस्थितयोः पितृपुत्रयोरेकतरो यदि द्वितीयं पितरमभिदधाति चेत्तर्हि अभिधायकः पुत्रोऽभिधेयश्च पिता विज्ञायते। पुत्रोच्चारितपितृ-शब्दो वाचको व्यक्तिविशेषं पितरं वाच्यमवबोधयति। पितृपुत्रसम्बन्धः स्वाभाविकः साङ्केतिकश्च। परन्तु प्रणवेश्वरसम्बन्धस्तथा साङ्केतिकः काल्प-निको वा नास्ति। अत्र वाच्यवाचकयोरनादिसम्बन्धो विज्ञेयः। शास्त्रेषु यदि चाप्येतद्वर्णनं बहुत्र समुपलभ्यते यत् स्थिरीकृतया चित्तवृत्त्यैव प्रणव-ध्वनिः श्रोतुं योग्यः, मुखतस्तद्यथार्थोच्चारणमसम्भवम् ; तथापि गौण-रूपेण प्रोच्चरितः प्रणवमन्त्रः, अ, उ, म् , इति त्र्यक्षरमयो रजःसत्त्वतमो-गुणाधिष्ठाता ब्रह्म-विष्णु-शिववाचकश्च। सर्वशक्तिरीश्वरो यया त्रिगुण-शक्त्या सृष्टि-स्थिति-संहारान् विधत्ते, सा त्रिगुणमयी शक्तिः प्रणवेऽपि वर्तते। अतः किल प्रणव ईश्वरस्वरूपः।

प्रणवस्य वैज्ञानिको हेतुरयं यत् यत्र किमपि कार्यं तत्र कम्पनेनावश्यं भवितव्यम्। यत्र कम्पनं तत्र शब्दोऽप्यवश्यंभावी। परमेश्वरीये विराड्-देहे तदिच्छया सृष्टिस्वरूप-त्रिगुणात्मके कार्ये सूक्ष्मरूपेण समुत्पद्यमाने तत्र समुत्पन्नः शब्दः किल प्रणव एव। यथा हि विराडेव परमेश्वरीयं स्वरूपम्, तथैव ॐकाररूप-वाचकेन परमात्मा विज्ञायते। तत्रोक्तमपि योगाचार्यैः—

"कार्यं यत्र विभाव्यते किमपि तत् स्पन्देन सव्यापकम्,
स्पन्दश्चापि तथा जगत्सु विदितः शब्दान्वयी सर्वदा।
सृष्टिश्चापि तथादिमाकृतिविशेषत्वादभूत् स्पन्दिनी,
शब्दश्चोदभवत् तदा प्रणव इत्योंकाररूपः शिवः॥" इति।

कारणस्वरूप-विराड्पुरुषेण साकं कार्यशब्दरूपप्रणवध्वनेरविमिश्रसम्बन्ध-

सत्त्वात् प्रणवध्वनिरूप-ध्वन्यात्मकशब्दस्य स्वरूपो वर्णात्मकः प्रतिशब्दः। अतः शाब्दिक ॐकारः शब्दातीतः प्रणवो वा उभयमेव पूर्वापरसम्बन्धेन परमेश्वरवाचकत्वात् प्रणवशब्देनैव समाम्नायते।

योगाचार्यैः सिद्धान्तितमिदं यत् प्रणवो ध्वन्यात्मकः। तदीयं किमप्यङ्गं मुखेनोच्चारयितुं न शक्यते। योगी सदा स्वीयमन्तःकरणं भक्तियोग-साहाय्येन साम्यावस्थामधिगतायाः प्रकृतेर्नैकट्यं प्रापयति, तदैव तदन्तःकरणे प्रणवध्वनिः श्रूयते। तद्ध्वन्यात्मकप्रकृतेरादिशब्द ईश्वरवाचक-प्रणवस्य वर्णात्मकः प्रतिशब्दः उपासनाकाण्डसंसिद्ध्यै प्रादुरभूत्। स एव वर्णात्मकः प्रणवप्रतिशब्द ॐकार इत्युच्यते। अ-उ-म् इत्यक्षरत्रयसम्बन्धेन ॐकारापरनामकः वर्णात्मकः प्रणवः स एव समाख्यातः। स एव हि शास्त्रेषु रजः-सत्त्व-तमोरूपत्रिगुणात्मक-ब्रह्म-विष्णु-महेशरूपत्रिदेवात्मकः शब्दो ब्रह्मरूपेण पूज्यते। अत एव ईश्वरप्रणवयोरभेदसम्बन्धः। वाच्ये जगदीश्वरे वाचके च प्रणवे पारस्परिकोऽनादिरविमिश्रश्च सम्बन्धः स्वीकृत आस्ते॥ २७॥

प्रणवसाधनविधिरुच्यते—

## तज्जपस्तदर्थभावनम् ॥ २८॥

तस्य प्रणवस्य जपस्तदर्थभावनमपि समाधिहेतुरुच्यते। सम्प्रति प्रणव-जपविधिस्तदीयं फलं च निरुच्यते। ईश्वरे प्रणवे चाविमिश्रोऽनादि-सम्बन्ध इति पूर्वसूत्रे प्रमाणितम्। अतः प्रणवजपेन नूनमेव अन्तःकरण-मीश्वरं साक्षात्कर्तुं शक्नोति।

वाचनिकः उपांशुर्मानसश्चेति जपस्त्रिविधः। यस्य मन्त्रस्य जपध्वनिः स्वस्यान्यस्य च कर्णकुहरे प्रविशन् समुच्चारितशब्देन चित्तं स्थिरीकुर्यात्, स हि वाचनिकः स्मृतः। यस्य मन्त्रस्य सूक्ष्मध्वनिः केवलं स्वस्यैव कर्णरन्ध्रे प्रविशन् मनः स्थिरीकुर्यात्, जपोऽसौ उपांशुः प्रोच्यते। यस्य च मन्त्रस्य सूक्ष्मध्वनिः केवलं मनसैव समुत्पद्यमानश्चित्तं स्थिरी-कुर्याद्, असौ जपो मानसिकः प्रोक्तः। त्रिविधजपस्य शक्तिप्रभावो यादृशो

मनसि निपतति, तत्तारतम्यमनुसृत्य मानसिक उत्तमः, उपांशुर्मध्यमः, वाचनिकश्चाधम इति व्याहर्तुं शक्यते। यद्यपि प्रणवौंकारौ एकार्थ-वाचकौ, तथापि पूर्वापरावस्थाभेदेन कारणप्रकृतेर्ध्वन्यात्मकः शब्दः प्रणवः, वर्णात्मकः प्रतिशब्दश्च ॐकार इत्यभिधीयते। अतो ध्वन्यात्मक-प्रणवजपः केवलं साम्यावस्थामधिगतेन मनसा कर्तुं शक्यते। पूर्वोक्त-स्त्रिविधो जपः किल वर्णात्मकस्य ॐकारस्यैव कर्तुं शक्यते।

ध्वन्यात्मको वर्णात्मकश्चेति प्रणवद्वयमपि एकभावमयमेव; तथापि पूर्वापरावस्थाभेदेन एको मुख्योऽपरो गौणः। उभावपि परमात्मवाचकौ। यदि योगी स्वकीयप्राथमिकक्रियायां योग्यतां लभमानो मनश्च साम्या-वस्थायाः प्रकृतेः सन्निधौ प्रापयितुं शक्तिमधिगच्छन् प्रणवध्वनौ मनसो विलयं कुर्यात्, तदाऽसौ स्वत एव साम्यावस्थायां प्रकृतौ निलीयमानो द्रष्टारं भगवन्तं परमात्मानं साक्षात्कर्तुं शक्नोति। यतः पूर्वमेवेदं सिद्धा-न्तितं यत् शान्ततरङ्गे जलाशये यथा सूर्यप्रतिविम्बं सुस्पष्टं दरीदृश्यते, तथैव प्रशान्तवृत्तिसमूहे अन्तःकरणे द्रष्टा स्वयमेव प्रकाशते। अतः प्रणवसाहाय्येन अन्तःकरणवृत्तौ प्रशान्तायां योगी निर्विकल्पसमाधि-मधिगच्छन् स्वस्वरूपमुपलभते। एतदेव आदिशब्दस्वरूप-ध्वन्यात्मकस्य ईश्वरवाचकस्य प्रणवस्यावलम्बनेन वाच्यरूपस्वरूपोपलब्धेर्वैज्ञानिकं रहस्य-मवगन्तव्यम्। वर्णात्मकप्रणवसाहाय्येनापि परम्परया क्रमश इदमेव फलमवसीयते।

भावेन सह शब्दस्येव शब्देन साकमक्षरस्यापि सम्बन्धः। यतो ध्वन्या-त्मकशब्दस्य प्रतिशब्द एव वर्णात्मकः शब्दः। उभयत्र इयानेव भेदो यत् ध्वन्यात्मकः शब्दो वागिन्द्रियातीतः, वर्णात्मकस्तु वागिन्द्रियसाहाय्येन कार्यकारितां प्रपद्यते। अतः प्रथमावस्थायां योगी वर्णात्मकप्रणवसाहा-य्येन वाचनिकमुपांशुं च जपमनुतिष्ठन् प्रत्याहारभूमितो धारणाभूमौ अग्रेसरन् ततश्च मानसिकजपाधिकारमासाद्य ध्यानभूमिं समाधिभूमिं च क्रमशोऽधिगच्छन् ध्वन्यात्मकप्रणवजपस्य अधिकारमधिकुर्वन् स्वरूपोप-

लब्धिं कुरुते। प्रणवसाहाय्येन एतेऽधिकाराः स्वत एवोपलभ्यन्ते। यदि प्रणवेन साकमीश्वरस्य अनादिरविमिश्रश्च सम्बन्धः प्रमाणितस्तदानीं किल वाचकस्वरूपमोङ्कारं जपतः उत्तमावस्थामधिगत्य वाचकरूपप्रणवध्वनौ नैजान्तःकरणविलयं विदधतः साधकस्यान्तःकरणं वाच्यरूपिणमीश्वरमधिगच्छत्येव। यथा भयविमोहितस्तैलपायी कीटस्तस्य कञ्चुकिनः कीटस्य रूपं ध्यायन् अन्ते कञ्चुकी कीटो जायते, तथैव यदि जीवो भगवद्गुणस्मरणद्वारा परमेश्वरध्यानमनुतिष्ठेत्, तर्हि तस्य स्वत एव स्वाभाविकचञ्चलवृत्तीनां विनाशो भवेत्। स च भगवन्तं ध्यायन् मुक्तिमधिगच्छेत्, नात्र संशीतिलेशोऽपि।

अत एव योगाचार्यैः प्रणवत एव विविधवीजमन्त्राणां सृष्टिरुक्ता। तथा हि—

"साम्यस्थप्रकृतेर्यथैव विदितः शब्दो महानोमिति,
ब्रह्मादित्रितयात्मकस्य परमं रूपं शिवं ब्रह्मणः।
वैषम्ये प्रकृतेस्तथैव वहुधा शब्दाः श्रुताः कालतः,
ते मन्त्राः समुपासनार्थमभवन् वीजानि नाम्ना तथा॥"

"मन्त्राणां प्रणवः सेतुः।"

"माङ्गल्यं पावनं धर्म्यं सर्वकामप्रसाधनम्।
ॐकारः परमं ब्रह्म सर्वमन्त्रेषु नायकम्॥" इत्यादि।

प्रणवातिरिक्ता यावन्तो वीजमन्त्राः सन्ति, ते सर्वेऽपि वैषम्यावस्थायाः प्रकृतेर्विशेषविभागैः सह सम्वध्नन्ति, तद्भिन्नाः (वीजमन्त्रभिन्नाः) शाखापल्लवयुक्तमन्त्रा भावप्रधाना वैषम्यावस्थाप्रकृतिसमुत्पन्ना भावराज्यप्रकाशका वेद्याः। अतस्तेषु देशकालभावपरिच्छिन्नता विलोक्यते। यत्र देशकालभाव-परिच्छिन्नता, तत्र पूर्णशक्तेः सर्वव्यापकतायाश्चाभाव इत्यत्र कः सन्देहः? सेतुसाहाय्येन यथा पन्था वाधाविरहितः सरलश्च विधीयते, तथैव देशकालापरिच्छिन्नस्य परिपूर्णशक्तेर्भगवतः परमेशितुर्वाचकः पूर्णशक्तिशाली प्रणवोऽपि सर्वविधवीजमन्त्राणां शाखापल्लवयुक्तमन्त्राणां

मार्गं बाधारहितं सरलं च विदधत् तत्तच्छक्तीर्लक्ष्यस्थलं प्रापयति। अत आत्मसाक्षात्कारपरायणानामधिकारिणां कृते प्रणवसाहाय्यमतिहिता-धायकमास्ते। अतः किल महर्षिसूत्रकारस्य एतत्सूत्रेणेदमेव तात्पर्यं यत् वाचकरूपप्रणवस्य जपं भगवद्गुणवर्णनं स्मरणं च कुर्वन् साधकः समाधिस्थो भवन् आत्मदर्शनं विधत्ते ॥ २८ ॥

प्रणवसाधनाफलं निर्वक्ति—

**ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥**

तदानीं प्रत्यगात्मस्वरूपपुरुषस्य परिज्ञानं विघ्ननाशश्च वोभोति। अर्थात् प्रणवसाधनेन स्वचित्तवृत्तिषु समुपरतासु जीवान्तःकरणं समाधि-मधिगच्छति। अन्तःकरणेऽसमाधिस्थे सति तद्गतवृत्तयो वहिर्मुख्यो विषयसम्बद्धाः स्वान्तःकरणं चञ्चलीकुर्वन्ति। चञ्चलतेयं समाधिविघ्नकारिणी। यदा च प्रणवसाधनेन चित्तवृत्तौ निरुद्धायामेकाग्रमन्तःकरणं भगवद्भावे निलीयते तदानीं स्वत एव विघ्नानां विनाशो जायते। एतदवस्थमन्तःकरणं निर्मलं वोभूयमानं प्रज्ञारूपयथार्थज्ञानोदयस्य हेतुतां प्रपद्यते। ततः परिपूर्णज्ञानमधिगच्छन् साधक आत्मसाक्षात्कारं लभमानो वन्धनाद् विमुच्यते। वक्ष्यमाणसूत्रोक्तेभ्यः समस्तान्तरायेभ्यो विनिवर्तते।

सूत्रमिदं प्रणवजपपूर्वकस्य ईश्वरप्रणिधानस्य परिपूर्णमहत्त्वप्रकाशकं निष्कण्टकपथप्रदर्शकं च। अन्यविधजपसाधनेषु विघ्नसम्भावनायास्तदीय-मार्गे च विघ्नवाधासमुत्पत्तेरवसरस्तिष्ठति। किन्तु प्रणवजपपूर्वकेश्वरप्रणि-धानरूपसाधनेषु नास्त्येव सम्भावना विघ्नादीनाम्। ईश्वरेण सह प्रण-वस्य साक्षात्सम्वन्धः। अतः केवलप्रणवसाहाय्येनैव योगिनोऽन्तःकरणं निर्वाधं भगवच्चरणकमलयोः समुपढौकते। पूर्ववर्णिताः सविकल्पसमाधि-प्रत्यूहाः समुद्वोभूयमानानां वक्ष्यमाणस्वरूपाणां वृत्तीनामन्तरायाश्च प्रणवजपकारिणो भगवद्भक्तस्य योगिनो नैव कामपि वाधां जनयितुमर्हन्ति। अतोऽत्र एतत्साधनस्य सर्वश्रेष्ठताया आस्तिक्यमूलतायाश्च महत्त्वं प्रतिपादितम् ॥ २९ ॥

पूर्वसूत्रोक्ता अन्तराया वर्ण्यन्ते—

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥**

व्याधिः, स्त्यानम्, संशयः, प्रमादः, आलस्यम्, अविरतिः, भ्रान्तिदर्शनम्, अलब्धभूमिकत्वम्, अनवस्थितत्वं चेति चित्तविक्षेपजनका योगविघ्ना अवगन्तव्याः। इदानीं सूत्रकृन्महर्षिः अन्तःकरणविक्षेपकरान् योगसम्बद्धान् अन्तरायान् वर्णयति। इमे हि अन्तःकरणस्य योगयुक्तायां बाधकाः सन्ति। एत एव साधकस्य योगावस्थाधिगमे विघ्नकारिणः सन्ति। शरीरान्तःकरणयोरन्योन्यम् अविमिश्रसम्बन्ध इति तु स्पष्टमेव।

संसारेऽत्र प्रत्येकस्यापि मौलिकपदार्थस्य त्रयः सप्त च भेदाः सन्ति। प्रकृतिराज्यस्य सूक्ष्मभावेषु सत्त्वं रजस्तम इति त्रयो गुणाः सप्त व्याहृतयश्चेत्यादयः सप्त विभागाः। तथैव पिण्डरूपे जीवशरीरे वात-पित्त-कफात्मिका त्रिविधा प्रकृतिः, रस-रक्त-मांसास्थि-मज्जादयाः सप्त धातवश्च समाम्नाताः। यावच्च त्रिविधप्रकृतिसाम्यम्, धातुषु च विकाराभावस्तावत् किल पिण्डरूप-जीवशरीरं स्वस्थमनुभूयते। नैव तत्र कोऽपि रोगो विकारो वा समुत्पद्यते। किन्तु तेषु वैषम्ये समुपस्थिते विकृतिरामयाश्च समुद्भवोभूयन्ते। एतन्नामैव व्याधिरिति।

अन्तःकरणवृत्तयो यदा तामसिककर्माभिमुखिन्यो भवेयुः, तामसिककार्याण्येव कुर्युः, अन्यथा कर्मरहितप्रवृत्तीः प्रदर्शयेयुः, तदानीमन्तःकरणस्यैतत् तामसिकवृत्तिनाम स्त्यानमिति। जीवमात्रस्य स्वाभाविकी गतिः सत्त्वगुणाभिमुखी दृश्यते। अत एव जीव उद्भिज्जात् स्वेदजम्, ततश्च अण्डजम्, ततोऽपि च जरायुजं शरीरमुपढौकमानः क्रमशः सत्त्वानुगामी भवन् सत्त्वगुणाधिकारस्थानभूतां मानवयोनिं प्रपद्यते। मनुष्ययोनौ च क्रमशः सत्त्वगुणमभिवर्धयन् सत्त्वगुणपरिपूर्णावस्थायां मुक्तिपदमधिगच्छति। सुतरां मनुष्येषु तमोगुणवृद्धिः पतनहेतुः। अतस्तमोगुणवर्धकं स्त्यानं किल योगान्तराय इत्यत्र नास्ति सन्देहलेशः।

द्वयोरपि पदार्थयोरेकत्रापि निश्चयबुद्धेरभावः सन्देह इत्युच्यते। अर्थात् पदार्थद्वये विचार्यमाणे भ्रमग्रहग्रस्ता बुद्धिः कदाप्येकं कदाचित् अपरं च सत्यत्वेन स्वीकरोति। तदा तादृशचलायमाना वृत्तिरेव संशय-शब्देन उच्यते।

समाधिपूर्णावस्थामधिगन्तुं साधकसमाधिस्थतासम्पादका ये ह्युपाया वर्णितास्तेषु अन्तःकरणस्थैर्याभावः किल प्रमाद उच्यते। पूर्वं किल महर्षिणा सूत्रकारेण योगयुक्ततायाः श्रद्धैव प्रथमावलम्बनभूता प्रोक्ता। तादृशश्रद्धाविरोधिनी, यौगिकक्रियासु अन्तःकरणस्थैर्यसम्पादिकायाः श्रद्धाया विरोधिनी अन्तःकरणदृढताविघातकवृत्तिः किल प्रमादशब्देन आख्यायते।

तमोगुणे प्रवर्धमाने शरीरमनसोः कार्यकर्तृताभावः आलस्यमिति। तामसिकगुरुतयाऽन्तःकरणे शरीरे च जडता समुत्पद्यते। स्फूर्तिहीनमन्तः-करणं शरीरं च परिश्रमतो विरमतः। अन्तःकरणशरीरयोः एतादृगवस्थैव आलस्यशब्देन समाम्नायते।

यदा चान्तःकरणं तन्मात्रेन्द्रियसाहाय्येन कुत्रापि विषये संलग्नं तञ्च विषयं स्वस्मिन् आरोपयत् आत्मना संयुनक्ति, तर्हि अवस्थेयम् अविरति-रित्युच्यते। आत्मा किल अविद्यया हेतुभूतया स्वकीयान्तःकरणतो-ऽभिन्नमात्मानमभिमन्यते। अन्तःकरणस्य स्वाभाविक्यो वृत्तयो या विषयैः सह सङ्गत्य स्वं स्वरूपं विषयाभिन्नम् आमनन्त्यः आत्मानं मोहयन्ति प्रलोभयन्ति वा, ता एव अविरतिशब्दवाच्या अवधेयाः।

शुक्तौ रजतावबोधः छायादिषु च प्रेतबुद्धिः, इत्यादिकं विपरीतज्ञानमेव भ्रान्तिः।

समाधिपूर्णावस्थामुपढौकमानम् अन्तःकरणं समाधिपूर्णावस्थातः प्रागेव कुत्र चिन्मध्ये संसक्तं सत् स्वकीयनिर्मलत्वसाहाय्येन आत्माभाससुख-मेव स्वात्मस्वरूपयथार्थसुखमभिमन्य मौनमानन्दाभास एव निमज्जति, यथा जडसमाधौ साधकेनानुभूयते। तादृशकैवल्यविघ्नदायिनी दशैव अलब्धभूमिकत्वशब्दवाच्या।

साधकान्तःकरणं यदा किल यौगिकपरिपूर्णभूमिस्वरूपाऽसम्प्रज्ञात-समाधिदशासीमसान्निध्यमासादयत्, तत्र च स्थैर्यमलभमानं निम्नभूमावतरति, अर्थात् अन्तःकरणदृढताऽसद्भावात् योगप्रधानलक्ष्यभूतस्य असम्प्रज्ञातापरनामकस्य निर्विकल्पसमाधेः सीमानमासादयदपि न तत्र स्थैर्यमासादयति, साधकस्य दौर्बल्यमेतत् अनवस्थितत्वमाख्यायते।

सूत्रोक्ता नवाऽपि विषया अन्तःकरणविक्षेपकराः। समाधिगतिविरोधित्वादन्तःकरणं प्रकृतेराभिमुख्यं प्राप्नोति। तेन च साधकः योगप्रधानलक्ष्यभूतकैवल्यपदमधिगन्तुं नार्हति। इमे नव योगान्तराया वेद्या इति ॥ ३० ॥

इदानीमन्यविधाः योगप्रत्यूहा निरुच्यन्ते—

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥**

दुःखम्, दौर्मनस्यम्, अङ्गमेजयत्वम्, श्वासः, प्रश्वासश्चेति पञ्च चित्तविक्षेपेण सहैवोत्पद्यन्ते। पूर्वसूत्रे योगविघ्नानां केषामपि वर्णनमनुष्ठाय महर्षिः सूत्रकृत् अन्यविधानां योगविघ्नजनकानां वर्णनमुपक्रमते। पूर्वोक्ता अन्तराया विक्षेपकारिणः सन्ति, एतत्सूत्रोक्तास्तु विक्षेपसहायका मन्यन्ते। उभयेऽपि योगान्तरायभूताः समाम्नाताः। परन्तु पूर्वापर-सम्बन्धविचारेण विक्षेपाः पूर्वमुपवर्णिताः, तत्सहायकास्तु परस्तान्निरूप्यन्ते।

आध्यात्मिकम्, आधिदैविकम्, आधिभौतिकं चेति दुःखं त्रिविधम्। अन्तःकरणशरीरसम्बन्धनिबन्धनमाध्यात्मिकम्। दैवात् सहसैव महामारी-वज्रपातादिसमुत्पन्नमाधिदैविकम्। कुटिलमानव-हिंस्रकजन्तुप्रभृतिजीव-समुत्थं चाधिभौतिकमाख्यायते। वासनाया अपूर्णतया समीहाभङ्गतो मनःशरीरयोरवसादरूपः समुदीयमानः क्षोभः किल दौर्मनस्यमाख्यायते। भयप्रभृतिवृत्तिवशीभूतत्वेन मनःशरीरतदङ्गेषु कम्पनम् अङ्गमेजयत्वमभिधीयते। यो हि प्राणवायुर्बहिःस्थितं वायुमभ्यन्तरमाकर्षति, स श्वासः। यश्च अभ्यन्तरस्थं बहिर्विकर्षति, स प्रश्वासो नाम।

दुःखत्रयम्, दौर्मनस्यम्, अङ्गमेजयत्वं चेति त्रितयम् आन्तःकरणिक-विक्षेपसहायकम्। अन्तःकरणस्य चञ्चलतया श्वास-प्रश्वासगतिर्वर्धते,

स्थैर्यमापन्ने चान्तःकरणे तयोर्गतिः स्थिरतामभ्युपैति। अत एतत्सूत्रोक्ताः पञ्चापि वृत्तयः अन्तःकरणविक्षेपसहायकाः समुदीरिताः । ईश्वरप्रणिधानेन साधनस्वरूपे प्रणवजपाभ्यासेन चैतत्सूत्रोक्तान् पञ्चापि विक्षेपवृत्तिसहायकान् अवरुद्ध्य स्वान्तःकरणपरिशोधनं साधकेन नूनमेव समनुष्ठेयमिति ॥ ३१ ॥

अन्तरायनिरसनोपाया निर्दिश्यन्ते—

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥**

तेषां विक्षेपकरयोगविघ्नानां प्रतिषेधार्थं निवृत्तये चैकतत्त्वस्याभ्यासः समुचितः । चित्तवृत्तीर्निरुद्ध्य योगसाधनेन कैवल्याधिगमस्य अभ्यासवैराग्ये प्रधानसाधनभूते समुपवर्ण्य पूज्यपादेन महर्षिणा सूत्रकारेण तद्भिन्नमीश्वरप्रणिधानमप्येकं साधनमुपवर्णितम् ।

वस्तुतो वैराग्यसहिताष्टाङ्गयोगाभ्यासः कैवल्यावाप्तेर्विशिष्टं साधनम्, किन्तु प्रणवजपाद्यङ्गसंवलितमीश्वरप्रणिधानमपि कैवल्यप्राप्तेरुपायान्तरमास्ते। अभ्यासवैराग्याभ्यामीश्वरप्रणिधानेन च कैवल्यं सिद्ध्यतीति पूर्वोक्तसूत्रे सिद्धान्तितम्। कैवल्यभूमावग्रेसर्तुम् उदीयमाना अन्तरायाः प्रधानतः प्रणवजपेन अपास्तुं शक्यन्ते। किन्तु तद्भिन्नैकतत्त्वाभ्यासेनापि विघ्ना निवर्तन्ते इति एतत्सूत्रतात्पर्यमवधेयम्। उभयोरियानेव भेदो यत् प्रणवजप आस्तिकोपायः, किन्तु वक्ष्यमाणस्वरूपैकतत्त्वाभ्यासादयो न तथेश्वरसम्बन्धनिबन्धना उपाया इति व्याहर्तुं शक्यते। एकतत्त्वाभ्यासेन अन्तःकरणविक्षेपकारिण्यो निखिला अपि बाधाः प्रशाम्यन्ति। एकतत्त्वं किमिति प्रश्नेऽन्तःकरणैकाग्र्यमेव तदित्यवधारय।

सन्दिह्यतेऽत्र, तथा हि—विविधविषयेषु बम्भ्रम्यमाणमन्तःकरणमवलोक्य अनुभूयत इदं यत् बहुविधविषयेषु भ्रमणमेव तदीयो गुणः । अतस्तस्य ज्ञाताज्ञातविषयेषु स्थैर्यमसम्भवम्। नानाविषयग्राहिणोऽन्तःकरणस्य प्रवाहः क्षणिक एव। क्षणिके वस्तुन्येकाग्रता कुतः सम्भवेदिति ?

उत्तीर्यते—प्रत्यक्षमिदमनुभूयते यद् रजोगुणेन अन्तःकरणं कार्यकारि। तत्र नियमितरूपेण कार्यासक्तं चेन्नैव तत्र क्षणिकत्वम्। साधनेन बहुकाल-पर्यन्तमपि तदेकाग्रं स्थाप्यते। तदानीं तद् एकस्मिन्नेव पदार्थे स्थिरीभवति, तद्विहाय नान्यत्र कुत्रापि गच्छति। एतेन सिद्धमिदं यत् बहुषु विषयेषु परिभ्रमस्तदीयः स्वाभाविको गुणो नास्ति। अन्यथा तस्यै-काग्रतास्थापनं नैव भवितुमर्हति। अर्हति चेत्तर्हि तदीयैकाग्र्यदशा तदर्थं क्लेशहेतुः सम्भवेत्। प्रत्यक्षे प्रमाणे नास्ति सन्देहसद्भावना। अतः सुसिद्धान्तितमिदं यदन्तःकरणमेकाग्रं भवितुमर्हति। तदेकाग्रतयैव एक-तत्त्वाधिगतिः। "मम शरीरं समीचीनम्" इत्युच्यमाने शरीरद्रष्टा कोऽपि स्वतन्त्रपदार्थः सिद्ध्यति। स हि स्वतन्त्रपदार्थः अन्तःकरणमेव। तदेव शरीरसमीचीनतामनुभवति। "ममान्तःकरणं प्रसन्नमि"त्यभिधीयमाने पुरुषोऽसौ अहंपदवाच्यः अन्तःकरणतो भिन्नं स्वस्वरूपं मन्यमानो 'ममान्तः-करण'मित्यनुभवन् अन्तःकरणभिन्नः स्वतन्त्रः सिद्ध्यति।

विवेचनयाऽनया इदं सिद्ध्यति यत् अहंपदवाच्यः पुरुषोऽन्तःकरणं चेति द्वयोरेव सत्ता विद्यते इति। द्वयोरपि परस्परं सन्निकटः सम्बन्धः। यदा चान्तःकरणं पुरुषतो विमुखीभवद् विषयाननुधावति, तदानीं बहुरूपतां प्रपद्यते। अन्तःकरणस्य दशेयं स्वाभाविकी। अर्थात् बहुरूपेणावभास-मानमन्तःकरणमाख्यायते। यदा च तदेकाग्रतास्थापनपूर्वकं पूर्णरूपेण एकाग्रं बोभवीति, तर्हि तदेव एकतत्त्वमभिधीयते। अर्थात् स्वीयबहिर्मुख-दशातः परिवर्तमानं स्वकीयविषयवतीरनन्तधाराः संनिरुध्य आत्मनो-ऽभिमुखमेकधारया सम्मुखीनं भवेत्, तर्हि सेयमन्तःकरणावस्था एकतत्त्व-शब्देन समाम्नाता। बहिर्मुखीनमन्तःकरणं विविधविषयावलम्बनेन नानात्वं प्रतिपद्यते। किन्तु यदा तत् विषयेभ्यो विमुखीभवत् आत्मराज्याभिमुख-मग्रेसरति तदाऽद्वैतधाराकारतां भजदेकतत्त्वदशामधिगच्छति। परि-शुद्धान्तःकरणदशेयमेकतत्त्वशब्देन आख्यायते। तामेतामेकतत्त्वदशा-मधिगत्य अन्तःकरणं पूर्वोक्तविक्षेपान् परिहृत्यैकाग्रं सत् परमानन्द-मधिगच्छति॥ ३२॥

एकतत्त्वप्राप्तिसहायकसाधनेषु प्रथमसुपवर्ण्यते—

**मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥**

सुखवत्सु प्रीतिम्, दुःखवत्सु दयाम्, पुण्यात्मभिर्मैत्रीम्; पापीयोभिरुदासीनतामुपेक्षामिति यावत्, क्रियमाणानामन्तःकरणं प्रसीदति। पूर्वोक्ते सूत्रे महर्षिणा सूत्रकृता एकतत्त्वाभ्यासमुपवर्ण्य साम्प्रतमेकतत्त्वप्राप्तिसहायकवृत्तयो वर्ण्यन्ते।

क्लिष्टाक्लिष्टवृत्तयः तमःसत्त्वशीला अज्ञानज्ञानप्रकाशनपराः क्लेशानन्ददायिन्य इति तु पूर्वमेव निर्णीतम्। सुखिनं मानवमवलोक्य तमोगुणवत्सु ईर्ष्यारूपा क्लिष्टवृत्तिरुदेति। परन्तु यदि सुखशालिनं प्रति मनुतनुजनुष्षु अभ्याससाधनेनान्तःकरणे प्रीतिः सञ्चरेत्, तदा तदन्तःकरणं विचलितं भवितुं नार्हति। एवं हि सुखिनं मानवं दृष्ट्वा साधकहृदये निष्ठुरतारूपक्लिष्टवृत्तिविनाशपूर्वकं दयोद्रेकः, पुण्यशालिनमवलोक्य दम्भेर्ष्याप्रभृतिक्लिष्टवृत्तिहानपुरस्सरं मैत्री समुदयेत्, पापीयसो विलोक्य तत्पापकर्मानुमोदनं वर्जयित्वा विरोधं परित्यज्य च मानवान्तःकरणमुदासीनतामुपेक्षां च भजेत्। अर्थात् साधको ह्येवं विचारयेत् यत् 'स्वस्वकर्म अनुसृत्य जीवस्य गतिः, गुणमनुसृत्य कर्म समुदयति, यः किल यदिच्छेत् तत्कुर्यात्, ममात्र हस्तक्षेपोऽनुचितः' इति। विचार्यैवं यदि स पापनिन्दामकुर्वाणो द्वेषं च परित्यजन् पापीयोभ्य उदासीनतामवलम्बेत, तदा तदन्तःकरणं विचलितं न भवितुमर्हति, प्रसीदति, एकतत्त्वदशाभिमुखमग्रेसरति च। सुतराम्, एतत्सूत्रतात्पर्यमिदं यत् सुखिसु प्रीत्या, दुःखिषु दयया, पुण्यात्मसु मैत्र्या, पापिषु उदासीनतया अन्तःकरणमविचलितं सत् शनैः शनैरेकाग्रतां भजत् एकतत्त्वस्वरूपपरमात्मभावं प्रपद्यमानं कैवल्यभूमावग्रेसरति॥ ३३॥

द्वितीयं साधनमाचष्टे—

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥**

किं वा प्राणस्य वायोः प्रच्छर्दन-विधारणक्रियाभ्यामपि एकतत्त्वमधिगम्यते। सूत्रेणैतेन सूत्रकृता महर्षिणा एकतत्त्वाधिगतेर्द्वितीय उपाय उपवर्ण्यते।

आभ्यन्तस्य वायोर्नासिकया बहिर्गतिः प्रच्छर्दनमुच्यते। वायोर्धारणं हि विधारणमाख्यायते। एवं किल प्राणवायो रेचनविधारणाभ्यासेन एकाग्रमन्तःकरणं विदधता साधकेन एकतत्त्वमधिगम्यते।

मनो वायुर्वीर्यं चेति त्रितयमेक एव पदार्थः। मनः कारणम्, वायुः सूक्ष्मरूपः, वीर्यं च स्थूलम्। त्रिषु अपि एकं वशीकुर्वतः साधकस्य त्रयोऽप्येते वशतामुपयान्ति। अत एतत्प्रमाणितं यत् साधनेन वशीभूते प्राणवायौ मनः (अन्तःकरणम्) एकतत्त्वम् अधिगच्छति। नासापुटतो गच्छन्नागच्छन् यो हि प्राणवायुः, स कार्यस्वरूपः, प्राणशक्तिश्च कारणरूपा, प्राणचाञ्चल्यहेतुका शरीररक्षाकार्यफलस्वरूपा प्राणवायु-गतागतपद्धतिरेव श्वास-प्रश्वासशब्दवाच्या। स्थूलो वायुः कार्यरूपः, प्राणशक्तिश्च कारणस्वरूपेति प्रागपि निर्णीतम्। यया शक्त्या स्थूलयोः श्वास-प्रश्वासयोः समता समुदीयते, तथैव प्राणशक्तिरपि स्थैर्यमवाप्नोति। कार्यकारणसम्बन्धनिबन्धनत्वात् प्राणशक्तौ स्थिरतामभ्युपेतायां स्थिरीभूतेनान्तःकरणेन एकतत्त्वमधिगम्यते।

स्थूलप्राणवायु-चञ्चलतानिरोधस्य को ह्युपाय इति विचारणीयम्। यावद्धि प्राणवायोर्गमागमरूपा श्वासप्रश्वासप्रक्रिया तिष्ठति, तावत् किल प्राणशक्तेर्मनसश्च चाञ्चल्यमवश्यम्भावि। प्राणवायुनिरोधोपायस्त्रिविधः समाख्यातः—बहिर्गच्छतः प्राणवायोर्निरोधः प्रथमः। अभ्यन्तरं प्रविशतः प्राणवायोर्निरोधो द्वितीयः। केनाप्यन्यकारणविशेषेण श्वास-प्रश्वासस्वाभाविकक्रियायां भेदे समुपस्थिते प्राणवायोर्निरोधस्तृतीय उपायः। सुतरां यदा प्राणवायुरभ्यन्तरतो बहिर्निर्गच्छति, तत्कालसन्धिकृतः प्राणनिरोधः प्रथमः। बाह्यवायोराभ्यन्तराकर्षणक्रियाया यदा समाप्तिः, तत्समय सन्धिकृतः प्राणानिरोधो द्वितीयः। सुषुम्नोदयकाले

स्वभावत एव ईषत्कालकृते श्वासप्रश्वासगतिर्यदा शिथिलायते, तदानीं समनुष्ठीयमानस्तृतीय उपायोऽवगन्तव्यः। विचारशालिभिरिदमनुभूयते यत् यदा इडातः पिङ्गलायां पिङ्गलातश्च इडायाम्, अर्थात् वामनासिकातो दक्षिणनासिकायाम्, दक्षिणनासिकातश्च वामनासिकायाम्, प्राणवायुसञ्चारसन्धौ उपस्थिते श्वासप्रश्वासगतेः स्वाभाविकोऽवरोधः सम्पद्यते।

निष्कर्षोऽयं यत् श्वासस्य बहिर्गमनकालिके सन्धौ, तस्य चाभ्यन्तरप्रवेशकालसन्धौ च स्वमनसः स्थिरीकरणेन साधकान्तःकरणे एकतत्त्वं समुदेति। किन्तु सुषुम्नोदयकाले स्वभावत एव एकतत्त्वमुदयति। तिसृष्वपि उक्तदशासु सुषुम्नादशायामेकतत्त्वाभ्यासो नितरां सुगम इति योगाचार्यैः समाम्नातम्। सुषुम्नायामेकतत्त्वाभ्यासः सर्वोत्तम उपायः। प्राणवायौ बहिर्गते सति साध्यमानप्राणवायुनिरोधो मध्यमोपायः, आभ्यन्तरप्रविष्टे च प्राणवायौ तन्निरोधप्रकारोऽधम उपायो निर्णीतः। सुतरां त्रिष्वप्युपायेषु एकमप्युपायमवलम्ब्य पुरुषार्थमात्ररतेन साधकेन एकतत्त्वमधिगन्तुं शक्यते॥ ३४॥

तृतीयं साधनमुदीरयति—

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी॥ ३५॥**

अथवा समुत्पन्नायां विषयवत्यां प्रवृत्त्याम् अन्तःकरणस्यावस्थित्याऽपि एकतत्त्वाधिगतिर्भवितुमर्हति। पृथिव्यप्तेजोवाय्वाकाशाः पञ्च भूतानि। तद्विषयाश्च गन्ध-रस-रूप-स्पर्श-शब्दाः। स्थूलतः सूक्ष्माभिमुखभाने तु मुक्तपञ्चभूतानां स्वाभाविकदिव्यदेशेषु चैकत्र अन्तःकरणसंस्थापनेनापि एकतत्त्वाधिगमः सम्भवति। नासिकाग्रभागस्वाभाविकदिव्यगन्धे, रसनाग्रदेशे रसस्वरूपविषये चान्तःकरणसंस्थापने न शनैः शनैरेकतत्त्वलाभः सम्पद्यते।

यद्यप्यन्तःकरणस्थिरतायै प्रोक्ताः समग्रा अपि क्रियाकलापाः स्वाभाविकाः, तथापि तादृशक्रियासाधने शास्त्रगुरूपदेशयोरत्यावश्यकत्वम्। यतो हि अप्रत्यक्षं देशमुपलब्धुं प्रत्यक्षसाधनप्रवृत्तिदार्ढ्यं नैव तावत् कदापि

भवितुमर्हति, यावत् तन्निश्चयकारकः कश्चित् प्रत्यक्षोपदेशको वा गुरुर्नासाद्यते। दृढतैव फलप्राप्तेः एकमात्रोपायः। अत उपदेशकाद् ऋते यदि दृढता न सम्भवेत्, तर्हि उपदेष्टारमन्तरेण साधने साफल्यमपि असम्भवमेव मन्तव्यम्।

सूत्रेऽत्र यद्विषयेषु मनःस्थिरीकरणोपायाः उपवर्णिताः, तद्विवेकतयैव विविधसाधनमार्गेषु बहुविधाः क्रियाकलापा विहिताः। एतस्य सूत्रस्याशयोऽयमेव यद् अन्तःकरणं स्थूलतः सूक्ष्मतायामानीय तन्मात्रारूपस्य कस्य चिदेकभूतस्य कुत्र चिद् विषयेऽन्तःकरणलयाभ्यासतः शनैः शनैः एकतत्त्वमधिगन्तुं शक्यते। तेन च साधकः क्रमशः परमकल्याणपदं प्राप्तुमर्हति। एतद्विज्ञानतात्पर्यमिदमेव यत् जीवो यैः कारणकलापैर्विषयविमुग्धो विषयवत् प्रतीयते, ते यदि न स्युस्तदानीमन्तःकरणं स्वकीयां स्वाभाविकीं दशां प्रपद्यमानमेकतत्त्वाधीनतां भजत्येव।

विज्ञानमिदं सुस्पष्टं बोधयितुं जीवस्य विषयपाशपतनप्रकारो विवेचनीयः। तथा हि—कश्चित् पुमान् यदि स्त्रीरूपविषये निमग्नस्तदानीं तदन्तःकरणं रूपतन्मात्रासाहाय्येन दर्शनेन्द्रियान्तर्गतं भवत् स्त्रीरूपे विषये तदाकारितां प्रपद्यते। तस्मिन् काले स्त्रीरूपविषयः चक्षुर्गोलकसाहाय्येन रूपतन्मात्रया निजभावभावितमन्तःकरणं विधत्ते। विषयिणो विषयवत्प्रतीतेरियं साधारणी रीतिः। परन्तु यदि युक्तो योगी गुरुकृपया एतद्विज्ञानरहस्यमवगत्य नैजमन्तःकरणं विषयमगमयित्वा केवलमिन्द्रियाणां शुद्धविषयवत्प्रवृत्तावेव संस्थाप्य विषयदर्शनशून्यं विदध्यात्, तर्हि तस्य योगिनोऽन्तःकरणमन्तर्मुखतां प्राप्नुवद् आत्मनि एकतानतामधिगच्छद् एकतत्त्वाधिकारं लब्धुं शक्नुयात्॥ ३५॥

चतुर्थं साधनमुच्यते—

**विशोका वा ज्योतिष्मती॥ ३६॥**

किं वा विशोका शोकरहिता, ज्योतिष्मती ज्योतिःशीलिनी प्रवृत्तिरेकतत्त्वसाधिका। अर्थात् शोकरहिते प्रकाशे युक्ततया एकतत्त्वमधिगम्यते।

अन्तःकरणं ज्ञानरूपशुद्धसत्त्वगुणे यदा स्थिरतामापद्यते, अर्थात् यदा गुरूपदेशद्वारेण तस्य निश्चयात्मकज्ञानप्रकाशरूपज्योतिषो दर्शनं साधकेन क्रियते, यस्य स्वरूपं शास्त्रेषु सूर्य-चन्द्र-मणिसमानं निरूपितम्, तदाऽपि एकतत्त्वं प्राप्यते। अर्थात् तस्य शोकरहितस्य परमानन्दकरस्य ज्योतिषो दर्शनं कुर्वता साधकेन यदा तत्रैव ज्योतिषि निजान्तःकरणविलयो विधीयेत, तदाऽप्येकतत्त्वाधिगतिः सम्भवेत्।

शास्त्रेषु तज्ज्योतिषो वर्णनमेतादृशमपि लभ्यते। तथा हि—ज्योतिर्मयं हि साम्यावस्थाप्रकृतिस्वरूपम्। वेदसिद्ध-गायत्रीमन्त्रे यद् ध्यानमुपवर्णितं तत् किल तस्या एव ज्योतिर्मय्या महाविद्यारूपिण्यः प्रकृतेः स्वरूपम्। यत्र सदैव सत्त्वरजस्तमसां त्रिगुणानां तरङ्गाः समुदीयमानास्तिष्ठन्ति, तद्धि वैषम्यावस्थायाः प्रकृतेः स्वरूपम्। साम्यावस्थायां प्रकृतौ तु त्रिगुणवीचयः शुद्धे सत्त्वगुणे विलीयन्ते। यत्र त्रिगुणवीचीनामत्यन्ताभावः स्यात्, केवलं प्रकाशरूपः सत्त्वगुण एव भासेत, सैव दशा साम्यावस्थायाः प्रकृतेर्विज्ञेया। सैव 'विद्या'शब्देन 'शोकरहित-प्रकाशावस्था'-शब्देन 'ज्ञानयुक्तावस्था'ख्यया वा प्रणिगद्यते। एतदवस्थाभिमुखमन्तःकरणं यथा यथा प्रवर्धते, तथा तथैव तत्र शुद्धसत्त्वगुणप्रकाशोऽत्यधिकं भासते।

एतत्सूत्रतात्पर्यमिदमेव यत् ज्योतिषि परिदृश्यमाने तत्रैवान्तःकरणमेकाग्रं कुर्वता साधकेन शनैः शनैरेकतत्त्वमधिगन्तुं शक्यते। ज्योतिर्ब्रह्म, महामायालिङ्गितं सगुणं ब्रह्म, परमात्मनो विद्यारूपिणी परा प्रकृतिर्वा वेदोक्तगायत्रीमन्त्रे 'भर्ग'शब्देनाभिधीयते। ब्रह्मप्रकृतेर्द्विविधो भेदः—तदीयं तमोमयं स्वरूपं धारयन्ती अविद्या, शुद्धं च सत्त्वमयं स्वरूपं बिभ्रती विद्या समाम्नाता। अज्ञानरूपया अविद्यया नानारूपं जगत्परिदृश्यते, शुद्धसत्त्वगुणमय्याश्च प्रकृतेः साम्यावस्थायाः विद्याशब्दवाच्यायाः साहाय्येन साधकः अद्वितीयात्मस्वरूपाभिमुखमुपढौकते। यद्यपि विद्यायाः स्वरूपं ज्ञानमयमेव, परन्तु शोकरहिता ज्योतिष्मती प्रकृतिस्तस्या एव सत्त्वगुणमय्याया विद्यायाः स्थूलं स्वरूपम्। योगिनोऽन्तःकरणं यदा साधनद्वारा

तमो रजश्चातिक्रामति, शुद्धे सत्त्वगुणे च स्थितिं लभते तदैव तत्र ज्योतिष्मत्याः प्रकाशः समुपलभ्यते।

प्रथमावस्थायां योगिनोऽन्तःकरणे प्रकाशोऽयं कदा कदाऽपि सहसैव प्राकट्यमभ्युपैति। तं च प्रकाशं शनैः शनैरभ्यासद्वारेण योगी यावदधिकं स्थितिशीलं विदधाति, तावदधिकाधिकमसौ ज्योतिर्मयविन्दुरूपेण स्थायित्वं प्रपद्यते। एवमन्ते तत्प्रकाशसाहाय्येन साधको योगी समाधिप्राप्ति-हेतुभूतमेकतत्त्वमधिगन्तुं सामर्थ्यं लभते॥ ३६॥

पञ्चमं साधनमुदीर्यते—

**वीतरागविषयं वा चित्तम्॥ ३७॥**

वीता अतीताः, रागविषया यतस्तादृशं चित्तमवलम्ब्यापि एकतत्त्वा-धिगम इत्यर्थः। वासनयैव रजस्तमसोरुत्पत्तिः। वीतरागे वैराग्ययुक्ते चान्तः-करणे केवलं सत्त्वमेवाभिवर्धते। परमपवित्रायामत्र भारतावनौ कालत्रये-ऽपि वीतरागमहात्मनामभावो न जायते। पूर्वस्मिन् काले सनक-सनन्दना-दयो देवर्षयः, वेदव्यास-शुकादयो ब्रह्मर्षयः, जनकप्रभृतयो राजर्षयश्च संख्यातीताः समुपलभ्यन्ते किल निदर्शनस्वरूपाः। इमे किल भविष्यतां मुमुक्षूणां कृते स्वीयं सुन्दरं चरित्रं दृष्टान्तस्वरूपेण उदाजह्रुः। तेषामेव महात्मनां विषयरागरहितान्तःकरणे स्वान्तःकरणस्थापनेन नैजमन्तःकरण-मपि क्रमशो विषयवैराग्यसंयुक्तं भवदन्ते ह्येकाग्रतां प्रापद् एकतत्त्व-मधिकरोति।

यद्वा एतदप्यभिधातुं शक्यते यत् साधको योगी यदा क्रमशो विषय-रागरहितदशामधिगच्छन् परिपूर्णवैराग्यभूमौ अवतिष्ठते, तदाऽप्यसौ एक-तत्त्वमधिगन्तुं शक्नोति। मानवान्तःकरणं वृत्तीनामिन्द्रियाणां च साहाय्येन विषयस्वरूपं दधद् विषयेषु पात्यते। इयमेव समाधिविघ्नावस्था। वैराग्यपरिपूर्णावस्थायां विषया नैव योगिनोऽन्तःकरणमात्मसात्कर्तुं प्रभवन्ति। एतादृशविषयरागरहितदशायां विषयेभ्यो विनिवर्तमानस्य योगिनोऽन्तःकरणगतिः स्वभावत एवात्मनोऽभिमुखं प्रवहति।

अन्तःकरणस्य द्वे गती समाम्नाते—एका वृत्तीर्द्वारीकृत्य विषयाभिमुखं धावन्ती, द्वितीया च वृत्तीः परित्यज्य आत्मनोऽभिमुखं प्रवर्तमानेति। यदा वैराग्यप्राप्तिद्वारा विषयवती गतिर्विनश्यति, तदानीं स्वत एवात्माभिमुखगतिरधिगम्यते। ततश्चासौ योगी एकतत्त्वप्राप्तेरधिकारं लभते।

निष्कर्षोऽयं यद् योगी साधकः प्रथितवीतराग-महापुरुषान्तःकरण-संयमेन स्वीयमन्तःकरणं वैराग्यस्योच्चदशां प्रापयेत्, किं वा वैराग्याभ्यासेन स्वयमेव वीतरागो भवेत्, प्रकारद्वयेनाऽप्यसौ एकतत्त्वाधिकारमधिकरोत्यत्र नास्ति सन्देहलेशोऽपीति ॥ ३७ ॥

षष्ठं साधनमुच्यते--

स्वप्ननिद्राज्ञानावलम्बनं वा ॥ ३८ ॥

स्वप्ननिद्रयोर्मध्यस्थं यज्ज्ञानं तस्यावलम्बनेन तत्रान्तःकरणविलयेनेति यावत्, एकतत्त्वमधिगम्यते। यत्रान्तःकरणं तमोगुणमाश्रयद् बहिर्ज्ञानराहित्यं भजदपि किमप्यनुतिष्ठति, सैव स्वप्नावस्था। निद्रावस्थायां त्वन्तःकरणं प्रसुप्तं न किञ्चिदपि विधातुं पारयति। उभयोरपि स्वप्ननिद्रयोः सविस्तरवर्णनं प्रागनुष्ठितम्। जाग्रद्दशायां मानवा इन्द्रियाणां साहाय्येन विषयानवलम्बमानाः सन्तिष्ठन्ते। स्वप्नावस्थायां तु स्थूलविषया लयमुपयान्ति, किन्तु मनःकल्पिता विषयास्तिष्ठन्त्येव। सुषुप्तिनामकनिद्रावस्थायां किल स्थूला मनःकल्पिताश्चापि विषया विलीयन्ते। अतः स्वभावत एव जाग्रत्-स्वप्नसन्धौ स्वप्न-सुषुप्तिसन्धौ च योगिना साधकेन विषयविरहितस्य आत्मोन्मुखस्य अन्तःकरणस्य गतिमासादयितुमवसरो लभ्यते। जाग्रद्दशातः स्वप्नावस्थाग्रहणकाले, स्वप्नावस्थातश्च निद्रादशासादनसमये च उभयोरेव मध्यावस्थायामन्तःकरणं शून्यतामापद्यमानं तिष्ठति।

एतदनुभवितुमिदमपि अभिधातुं शक्यते यत् स्वप्न-जाग्रद्दशान्तर्वर्तिनी यथा तन्द्रावस्था भवति, तथैव स्वप्न-सुषुप्तिसन्धिदशायां सावधानतया तत्रैव ज्ञानयुक्तशून्यावस्थायां निजान्तःकरणविलयेन एकतत्त्वमासाद्यते। सूत्रस्यैतस्य तात्पर्यमिदमेव यत् बाह्यज्ञानरहितायां परमन्तर्ज्ञानसहितायां

स्वप्नावस्थायां, किं वा निद्रायाः शून्यावस्थायां चान्तःकरणविलयेन शनैः शनैरन्तःकरणम् एकतत्त्वपदमधिगन्तुमर्हति ॥ ३८ ॥

सप्तमं साधनमुच्यते—

**यथाभिमतध्यानाद् वा ॥ ३९ ॥**

इच्छानुकूले कुत्र चिदेकस्मिन् रूपेऽन्तःकरणलयेन एकतत्त्वमधिगम्यते। पूर्वोक्तसूत्रैरेकतत्त्वाधिगतेः बहुविधसाधनवर्णनमनुष्ठाय साम्प्रतं सार्वभौमस्वरूपं साधारणं साधनमेकतत्त्वमधिगन्तुमुपवर्ण्यते। स्वतन्त्रप्रकृतयः किल जीवा भवन्ति। अत एकविधं साधनं न सर्वहिताधायकम्। तस्मादेव सूत्रकारेण महर्षिणा विचारदृष्ट्या सप्तममिदं साधनं समुपवर्णितम्।

साधकानां प्रकृति-प्रवृत्ति-रुचीरनुसृत्य श्रीगुरुदेवो यस्य यादृशं साधनं सप्तस्वपि हिताधायकं समुपदेष्टुमावश्यकं च मंस्यते, तेन साधककल्याणमवश्यम्भावि। प्रकृतिगुणानुसारेण साधकस्य मनः कुत्रापि विषये संलग्नं भवत्येव। स्वस्वाभाविकेन गुणेन यत्र पदार्थे मनः संलग्नं जायेत, तत्रैव तन्निरुद्ध्येत चेत्—अर्थात् साधको यद्रूपं बहु मन्येत तस्यैव ध्याने यदि मनो व्यापारयेत्, तत्र च स्थिरीभवेत्—तदानीमपि एकतत्त्वमधिगन्तुं शक्येत। एकाग्रमन्तःकरणं प्रज्ञास्वरूपं परिपूर्णज्ञानमधिगच्छद् योगयुक्ततां प्रपद्यत इति पूर्वमेव प्रपञ्चितम्। एवमभिमतध्यानं द्वारीकृत्यापि योगी साधक एकतत्त्वमधिगच्छन् विमुच्यते। मानवस्य प्रकृतिप्रवृत्तिवैचित्र्यमनुसृत्यैव सनातने धर्मे पञ्चोपासनामाहात्म्यं विविधदेवदेवीनां चानेकानि रूपाणि समुपवर्णितानि। सुतरां साधकेन स्वरुचिमनुसृत्य अभिमतरूपध्यानद्वारा स्वीयं कल्याणं साधयितुं शक्यते।

अभिमतध्यानशब्दस्यैतत् कदापि तात्पर्यं नास्ति यत् मानवः स्वीयविषयसम्भोगप्रवृत्त्यनुसारेण कस्याश्चन कामिन्याः ध्यानेनापि एकतत्त्वमधिगन्तुं शक्यत इति। विषयभोगबुद्ध्या यदि कस्य चन विषयस्य ध्यानमन्तःकरणेन विधास्यते, तदा तदीयमन्तःकरणं विषयभोगजनितं नानाचाञ्चल्यमवाप्स्यति। विषयभोगसङ्कल्पेन चाञ्चल्यं विषयत्यागसङ्कल्पेन च धैर्यमवा-

ष्यते। अतो भोगोत्पत्तिकरविषयध्यानेन एकतत्त्वं कथमपि नैवावाप्तुं शक्यत इति न कदापि विस्मरणीयम्। विषयभोगसमीहा-समुत्पत्तिसहायकः कश्चनापि व्यापारो नैव भवितुमर्हति साधनस्यैतस्य उपयोगी। केवलं शास्त्रीयरूपसमूहा अन्तःकरणशुद्धरतिसमुत्पादकाश्च विषयसमूहा एव महर्षि-सूत्रकारतात्पर्यविषया बोद्धव्याः। येषु च साधकस्य स्वत एव प्रबला समीहा समुत्पद्यते, तेषां परिशुद्धविषयाणां शास्त्रीयरूपाणां च ध्याना-भ्यासेन प्रथमतो जागतिका विषया विनिवर्तन्ते। ततश्च प्रत्याहारवृत्तयः समुत्पद्यन्ते। ततोऽपि च ध्येयरूपिणि विषये मनसो रतिर्दृढायते। तत्पश्चाच्चान्तःकरणतो ध्यानवृत्तयो विलीयन्ते। एवं हि क्रमशः साधकान्तः-करणं शान्तं भवदेकतत्त्वमधिगन्तुं सामर्थ्यं लभते॥ ३९॥

एकतत्त्व-प्राप्तिनिमित्तसाधनस्य द्वितीयं फलं निर्वक्ति—

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः॥ ४०॥**

परमाणुमारभ्य महास्थूलपदार्थं यावत् सर्वत्रैव अन्तःकरणस्थायित्व-सम्पादिका शक्तिरुदेति। पूर्वसूत्रेषु सप्तप्रकारान् साधनोपायान् वर्णयित्वा सूत्रकृन्महर्षिस्तेषां साधनानां द्वितीयं फलमाचष्टे। एकतत्त्वसाधनं द्वारीकृत्य साधको योगी सर्वानपि योगप्रत्यूहान् निरस्य समाधिभूमि-मासादयतीति प्रथमं फलमेकतत्त्वप्राप्तेरवगन्तव्यम्। एतत्सूत्रवर्णनं द्वितीय-फलविषयकमवधेयम्।

स्थूलसूक्ष्मभेदेन पदार्थद्वयमास्ते। स्थूलसूक्ष्मयोर्द्वयोरेव पदार्थयोरव-लम्बनेन अन्तःकरणं चाञ्चल्यमासादयति। यदि चापि साधकेन पूर्वो-क्तानि साधनानि स्थूलपदार्थरूपपरिदृश्यमानानां किं वा सूक्ष्मपदार्थ-स्वरूपतन्मात्रा - परमाणुप्रभृतीनामवलम्बनेन अनुष्ठातुं शक्यन्ते, किन्तु यावदन्तःकरणवृत्तयः सर्वा अपि सहैव निरुद्धतां नाप्नुयुस्तावत् स्थूलेषु सूक्ष्मेषु वा पदार्थेषु निपत्य पतनसम्भावना विद्यते। अतः साधनानुष्ठान-काले कस्य चनापि पदार्थस्य अवलम्बनेन अन्तःकरणमेकाग्रतामधिगन्तुं चेष्टेत। किन्तु स्वकीयं लक्ष्यं तदैवासादयेत्, यदा तदवस्थाद्वयतः समतीतं

भवेत्। अर्थात् एकाग्रतावृत्तिसाधनेन यदा तत्रैकाग्रतायाः पूर्णोदयः स्यात्, तदैव स्थूलेभ्यः सूक्ष्मेभ्यश्च पदार्थेभ्यः स्वतन्त्रं सदन्तःकरणमेकतत्त्वाधिगमेन समाधिभूमिमुपढौकमानं परमात्मानं साक्षात्कर्तुं पारयेत्।

एतत्सूत्रनिर्गलितार्थोऽयमेव यत् एकतत्त्वसमाधिगतो योगी समुन्नतामवस्थां प्राप्तः सूक्ष्मतमेषु स्थूलतमेषु वा वस्तुषु सर्वत्रैव अन्तःकरणं वशीकारयोगं द्वारीकृत्य स्थिरीकर्तुमर्हति। यौगिकेषु महत्तमाधिकारेषु एकतत्त्वाधिगम एकः सुमहानधिकारो वेद्यः। सर्वविधयौगिकप्रत्यूहविनाशकमेतदीयं सर्वोत्तमं फलं पूर्वसूत्रेषु उपवर्णितमेव। अनेन सूत्रेण ततोऽप्युन्नतमेकं फलं निर्दिष्टमास्ते। एकतत्त्वसाधनावस्थायामेव स्वकीययोगविघ्नविनाशकं सामर्थ्यं योगिना साधकेन समधिगम्यते। ततश्चैकतत्त्वसाधने सिद्धौ लब्धायां योगिनोऽन्तःकरणबलमेतावत् प्रवर्धते यदसौ निजान्तःकरणवृत्तिसम्बन्धिनीं चञ्चलतां स्वेच्छयैव निरुद्ध्य प्राकृतिकेषु स्थूलेषु सूक्ष्मेषु च राज्येषु यत्रैव समीहते, तत्रैव स्वीयमन्तःकरणं स्थिरीकर्तुं पारयति। ततश्चासौ विविधा आध्यात्मिकीः शक्तीः समधिगत्य तासु समाधिभूमिषु विचरणशीलो बोभवीति, यासां वर्णनमग्रिमसूत्रेषु वक्ष्यते॥ ४०॥

स्थितिप्राप्ते चेतसि सम्प्रज्ञातसमाधिः कथमुदेतीत्यधो निर्दिश्यते—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः॥ ४१॥**

प्रक्षीणवृत्तेरन्तःकरणस्य 'अभिजाता'ख्या स्वभावनिर्मला स्फटिकमणिसमाना दशा जायते। यथा स्फटिकमणिः स्वभावनिर्मलः समीपस्थपदार्थवर्णं गृह्णाति, तथैव योगिनोऽन्तःकरणं निर्मलं सद् ग्रहीतृरूपस्य आत्मनो ग्रहणरूपस्य इन्द्रियस्य ग्राह्यस्वरूपस्य च विषयस्य सहयोगतस्तदाकारतां प्रपद्यते। एतदवस्थानाम समापत्तिरिति। वृत्तौ परिक्षीणायाम् अर्थाद् एकतत्त्वसाधनेन चाञ्चल्यं परिहरति शुद्धे चान्तःकरणे सति तद्दशा

शुद्धा स्फटिकमणिसदृशी जायते। स्वरूपतः स्वच्छः स्फटिकमणिः स्वसमीपस्थपदार्थवर्णस्वरूपतां धत्ते, तथैव यदि साधकस्यान्तःकरणं कुत्रापि स्थूले सूक्ष्मे वा भूते एकाग्रतां भजति, एतदैकाग्र्यसाधनान्ते समापत्तिदशामधिगत्य स्वीयध्येयरूपं स्थूलं सूक्ष्मं वा स्वकीयं लक्ष्यभूतं वस्तुरूपं समधिगच्छति। अर्थात् तादृशेऽन्तःकरणे तदाकारभानव्यतिरिक्तं न किमपि भानान्तरं भासते। इयं हि तदाकारवृत्तिरूपा 'समापत्ति'वाच्यासविकल्पसमाधिदशैव एकतत्त्वस्वरूप-योगसाधनस्य समुन्नततरं तृतीयं फलमवगन्तव्यम्। एतदवस्थयैव क्रमशः प्रज्ञां लभमानः सविकल्पसमाधिद्वारेण निर्विकल्पसमाधिमासादयन् साधको मुक्तिपदं लभते।

तामेतामवस्थामवगमयितुं साधकेषु एकतत्त्वाधिगमेन स्वभावतो या समापत्तिरुत्पद्यते, सा समुचितरूपेणावश्यमेव वेदनीया। यतस्तदवधारणमन्तरेण योगी साधको जीवस्य साधारणीं दशां योगिनो विशेषावस्थां च परिज्ञाय स्वकीयां क्रमोन्नतिं स्थायिनीं विधातुं न शक्नोति। एकतायामधिगतायां क्रमश एकतत्त्वाधिगमेन साधकेन स्वत एव समाधिभूमिरासाद्यते। साधकस्य समाधिदशेयं सविकल्पा प्रोच्यते, पुष्पादिरमणीयपदार्थदर्शनेन, रागादिमनोहरविषयाणां श्रवणेन, नारीप्रभृतिसङ्गोत्पन्नस्पृश्यविषयानुभवेन, मिष्टान्नादि-रसनेन्द्रियतृप्तिकरपदार्थनिषेवणेन, सुगन्धमय-पुष्पादिपदार्थपरिघ्राणेन चानन्दमधिगच्छत् साधकान्तःकरणं स्वभावत एव तत्तद्वैषयिकीमेकाग्रतामधिगत्य सविकल्पसमाधिं प्राप्नोति।

यद्यपि अविद्यान्धकारग्रहग्रस्तो जीवः स्वकीयामिमां सविकल्पसमाधिदशां नानुभवति, तथापि तदीयचेतसि आनन्दस्योदयेन तदन्तःकरणं स्वाभाविकरूपेण समाधिमधिगच्छत्येव। तदन्तःकरणे यो ह्यानन्दोदयः, स हि परमात्मनो ब्रह्मानन्द एव। अतो विषयानन्दो ब्रह्मानन्दसहोदरो मतः। विषयाकारवृत्त्या स्वत एव क्षणिककालकृते विषयभोगपरायणस्य जीवस्य अन्तःकरणं योगिजनदुर्लभमेकतत्त्वं प्राप्नोति। एकतत्त्वाधिगत्या तदन्तःकरणवृत्तिषु प्रक्षीणासु सर्वव्यापको निर्मलशान्त आत्मा स्फटिकमणि-

सदृशो विषयिणः पुरुषस्यान्तःकरणे प्रतिफलति, येनाऽऽत्मनो ब्रह्मानन्दो विषयानन्दस्वरूपं भजन् जीवं सुखयति।

विज्ञानेनैतेन सुस्पष्टमिदं सिद्ध्यति यज्जीवेन स्वभावत एव विषयाकारवृत्तावपि एकतत्त्वाधिगमेन सविकल्पसमाधिरधिगम्यते। विज्ञानमिदमवधारयन् गुरुभक्तिपरायणो योगी पूर्वोदीरितसाधनेष्वेकतरां ततोऽधिकां वा योगक्रियामभ्यस्यन् ज्ञानपुरस्सरमेकतत्त्वभूमितो यदि सविकल्पसमाधिभूमिमासादयेत्, तर्हि स्वीययोगसाधनक्रमोन्नतिं स्थायिनीं विदधत् क्रमशः समाधिभूमौ उत्तरोत्तरमग्रेसरतां प्रपद्यते।

एकतत्त्वसाधने सिद्धिं लभमानेन आत्मानात्मविवेकसम्पन्नेन योगिना तादृशसमुन्नताधिकाररूपं सविकल्पसमाधिसमापत्तिदशा किमिव लभ्यते, तदेतत्सूत्रे अत एव निर्णीतं यत् स्वीयां स्थितिं परिज्ञाय साधकेन निजक्रमोन्नतिः स्थायिनी क्रियताम्। यदि साधारणविषयभोगी जीव इव योगी साधकः समापत्तिरूप-समुन्नतदशामधिगत्यापि असावधानो भवति, तर्हि तस्य उत्तरोत्तरसमुन्नतिर्नैव सम्भवितुमर्हति। अतः सूत्रेऽत्र समापत्तिस्वरूपमुपवर्ण्य तद्भेदा अग्रे वक्ष्यन्ते॥ ४१॥

क्रमप्राप्तायाः समापत्तेर्भेदा वर्ण्यन्ते—

**तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः॥ ४२॥**

शब्दार्थज्ञानानां विकल्पेन सङ्कीर्णा मिश्रिता समापत्तिः सवितर्का प्रोच्यते। इदानीं पूर्वोक्तसमापत्तिदशायाः प्रथमावस्था वर्ण्यते। यदा समापत्ति-समुत्पत्तिकरावलम्बनस्य शाब्दिकी संज्ञा, तदर्थस्तज्ज्ञानं च विकल्पस्वरूपतोऽन्तःकरणे तिष्ठति, तदानीमियं प्रथमावस्था समुदीर्यते।

उदाहरणेन विज्ञानमिदमवधारयितुमुभयतश्च परिज्ञातुमुचितमास्ते, प्रथमं बहिर्विषयतो द्वितीयमन्तर्विषयतश्च। बहिर्विषयतोऽवधारयितुं कमलपुष्पस्योदाहरणं प्रदीयते—'कमलपुष्पमि'ति कथ्यमानो कमलपुष्पशब्दोऽन्तःकरणे प्रविष्टः। ततश्च तदर्थावबोधः। ततो नु कमलपुष्पज्ञानं

चान्तःकरणे समजायत। त्रिष्वप्येतेषु अन्तःकरणे समुदीयमानेषु विकल्प साहाय्येन त्रयाणामपि स्वरूपं तत्र पृथक् पृथक् प्राकट्यमाप्तम्। त्रयाणामेतेषां पृथक् पृथक् प्राकट्येन यद्यप्यन्तःकरणमेकतत्त्वाभिमुखमग्रेसरति, तथापि तत्रान्तःकरणसमापत्तिदशा नैव परिपूर्णतामवाप्नोति।

एवं हि यदाऽन्तःकरणस्य सूक्ष्मातिसूक्ष्मावलम्बनवर्णनं क्रियेत, तदा इदमुदाहरणं दातुं शक्यते यत् "सच्चिदानन्दमयं ब्रह्म" इत्युच्चार्यमाणे सच्चिदानन्दमयब्रह्मशब्दः, तदर्थस्तज्ज्ञानं च सहैव अन्तःकरणे समुदीयमाने भवेताम्। तदा विकल्पसाहाय्येन यावत् त्रयाणामपि पारस्परिको भेदस्तिष्ठेत्, तावत् समापत्तिदशा सवितर्का वक्तुं शक्यते। दशायामत्र नैव समापत्तिपूर्णता भवितुमर्हति, नापि चान्तःकरणवृत्तयः स्वीयस्वरूपतः शून्यतां प्राप्नुवन्त्योऽन्तःकरणभूमिमतिनिर्मलां प्रशान्तां वा कर्तुं शक्नुवन्ति।

निष्कर्षोऽयं यद् दशायामत्र अन्तःकरणवृत्तयो लयाभिमुखमुपढौकमाना अपि एकतत्त्वोदयहेतुतां प्रपद्यन्ते। परन्तु दशेयं समाधिभूमावग्रेसरणशीलैव। इतोऽपि समुन्नताया द्वितीयदशाया वर्णनमग्रे वक्ष्यते॥ ४२॥

निर्वितर्क-समापत्तिरुच्यते—

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का॥ ४३॥**

शब्दार्थज्ञानमूलकस्मृतौ परिशुद्धायां स्वरूपरहितसमानभासमाना ध्येयाकारभावयुक्तेति यावत्, समापत्तिर्निर्वितर्का प्रोच्यते। निर्वितर्कसमापत्तौ शब्दसङ्केतेन शब्दानुमानेन ज्ञानरूपविकल्पेन च संयुक्ता स्मृतिर्नावभासते। केवलं ग्राह्यपदार्थरूपे पदार्थवत् प्रतीयमाना बुद्धिरेवावशिष्यते। पूर्वसूत्रोक्तायाः सवितर्कसमापत्तेरवस्थायाः साधनद्वारा विलये प्राप्ते चित्तम् एकलक्ष्यरूपिणीमवस्थां धत्ते, तादृशैकाकारदशाया नाम निर्वितर्कसमापत्तिरिति। स्थूलस्य सूक्ष्मस्य वा वस्तुनः कुत्र चिदेकतरसाहाय्येन समापत्तिर्लभ्यत इति प्रागेवोक्तम्।

समापत्ति-पूर्वावस्था सवितर्का समापत्तिः। सा किल निकृष्टा। दृढी-

भूतायामेकाग्रतायां परिपूर्णावस्थामधिगता समापत्तिर्निर्वितर्का बोद्धव्या। सा समुत्कृष्टाऽवधेया। पूर्वोक्तसवितर्कसमापत्तौ श्रूयमाणः पठ्यमानश्च शब्दस्तदर्थस्तच्छब्दविचाररूपं ज्ञानं च तदीयस्मृतिं द्वारीकृत्य विकल्पदशायां किञ्चित् पृथक् पृथग् वृत्तिस्वरूपं धारयन्ति, अतोऽन्तःकरणे समापत्तिर्नैव परिपूर्णतामधिगच्छति। परन्तु सर्वोत्तमदशायां ध्येयवस्तुनि चित्तैकाग्रतायाः परिवर्धमानत्वात् शब्दस्तदर्थः, शब्दार्थज्ञानं च स्मृतिद्वारा पृथक् पृथक् नैव तिष्ठन्ति। एकस्य स्मृतिर्द्वितीये द्वितीयस्य तृतीये विलयमुपगच्छति। दशायामस्यां शब्दं तदर्थं च द्वारीकृत्य समुत्पन्ने ध्येयज्ञाने, तत्रैव हि ध्येयस्वरूपे चित्तवृत्तिर्निर्मला सती ऐकाग्र्यमासाद्य स्थिरीभवति। तदानीं ध्येयं स्थूलं सूक्ष्मं वा भवेत्, तद्व्यतिरिक्तं योगिना साधकेन नैव किञ्चिदवबुद्ध्यते। स्थूलानां सूक्ष्माणां वा विषयाणां परिदृश्यमानपञ्चभूतानाम् अदृश्यमानतन्मात्राणां सूक्ष्मभावस्य वा साहाय्येन निर्वितर्का समापत्तिर्जायते।

समापत्तिपूर्णावस्थायामेकमात्रं ज्ञानरूप-लयव्यतिरिक्तं न किञ्चिदन्यदवभासते। तथापि पाञ्चभौतिकाः पदार्था विषया एव सन्ति, प्राकृतिकमवलम्बनमनित्यमेव। अतः एकाग्रताचरमसीमस्वरूपां निर्वितर्कसमापत्तिदशामधिगत्यापि तिष्ठत्येव प्रकृतिसम्बन्धः। तत्परवर्तिन्यामवस्थायां समाधिमधिगच्छता साधकेन प्रकृतिसङ्गं विरहय्य परमात्मरूपपुरुषसङ्गं भजता तत्स्वरूपमासाद्य बन्धनाद् विमुच्यते॥ ४३॥

सूक्ष्मविषयावलम्बनेन क्रमप्राप्तं द्विविधसमापत्तिवर्णनमुपक्रामति—

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता॥ ४४॥**

यथा उत्कृष्टा निकृष्टा चेत्यवस्थाभेदेन एकाग्रतास्थापनकारिण्याः समापत्तेर्भेदद्वयं पूर्वसूत्रेषु उपवर्णितम्, तथैव आत्मदर्शनरूपसमाधिप्रथमदशाया अपि सविचार-निर्विचारभेदाद् भेदद्वयमाम्नातम्। पूर्वोक्तदशाद्वयेऽवलम्बनभूता प्रकृतिरेवास्ते। परन्त्वेतत्सूत्रप्रतिपादिते अवस्थाद्वये पूर्वोक्तदशाद्वयतोऽप्यग्रिमस्वरूपे परमात्मैवावलम्बनस्वरूपो वरीवृत्यते।

सा किल सविचारावस्था प्रणिगद्यते, यत्र साधकः समाधिं द्वारीकृत्य सूक्ष्मभूताश्रयेण देश-काल-निमित्तसंयुक्तो भूत्वा आत्मनोऽनुभवमात्रमनुष्ठातुं शक्नोति। दशायामत्र भावस्यावलम्बनेन साधको योगी अग्रेसरतां प्रपद्यते। निर्विचारावस्थायां तु सूक्ष्मभूतादीनां सम्बन्धो न तिष्ठति, केवलं परमात्मन एव सम्बन्धेन समाधिरनुष्ठीयते। दशायामत्र भावद्वारा समधिगतोऽनुभवः सुस्थिरीभवति। दशाद्वितयेऽप्यत्र ज्ञातृ-ज्ञान-ज्ञेयभेदेन आत्मा साक्षात्क्रियते।

सविचाराख्या निकृष्टा दशा प्रोक्ता। अस्यां किल सूक्ष्मप्रकृतिसम्बन्धसत्त्वाद् आत्मनोऽप्रत्यक्षरूपोऽनुभवो जायते। निर्विचाराख्या तु उत्कृष्टा दशा, यस्यां प्रकृतिभानराहित्यात् ज्ञातृ-ज्ञान-ज्ञेयवृत्तेरनुसारतः परमात्मनः साक्षात् सम्बन्धो वोभूयते।

भेदद्वयमप्येतत् सविकल्पसमाधेरवगन्तव्यम्। निर्विकल्पसमाधिदशा किलैतदधिकारतोऽपि अग्रिमावस्थायामधिगम्यते। ततश्च निर्विकल्पसमाधिपरिपूर्णावस्थामधिगत्य साधको विमुच्यते॥ ४४॥

सूक्ष्मविषयस्य अवधिरुच्यते—

**सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्॥ ४५॥**

सूक्ष्मविषयावधिश्च अलिङ्गपर्यवसानो विज्ञेयः। सूत्रेणैतेन पूर्वसूत्रोक्तविज्ञानान्तःकरणसूक्ष्मावस्थानां च प्रकाशने प्रयासोऽनुष्ठितः। पृथिव्यप्तेजोवाय्वाकाशपरमाणूनां गन्ध-रस-रूप-स्पर्श-शब्दाः क्रमशः सूक्ष्मविषया विद्यन्ते। सूक्ष्मविषया इमे तन्मात्राशब्देन समाख्यायन्ते। व्याप्ताहङ्कारान्तःकरणे तन्मात्राणां लिङ्गं चिह्नमिति सूक्ष्मस्वरूपेण तिष्ठति। अहङ्कृतिभाजां सूक्ष्मातिसूक्ष्मविषयाणामग्रे न किञ्चिदप्यवशिष्यते। तदानीं तदेवालिङ्गशब्देन उच्यते।

इयमवस्था निम्ननिर्दिष्टरीत्याऽपि समवधारयितुं शक्यते। तथा हि, गुणविपरिणतिविचारेण स्थूलसूक्ष्मविचारेण लिङ्गस्य भेदचतुष्टयमवधेयम्—

१. विशिष्टलिङ्गम् , २. अविशिष्टलिङ्गम् , ३. लिङ्गम् , ४. अलिङ्गं चेति। स्थूलभूतानि इन्द्रियाणि च विशिष्टलिङ्गानि। सूक्ष्मभूतानि तन्मात्राश्च अविशिष्टलिङ्गशब्देनोच्यन्ते। बुद्धिरूपेण शुद्धमन्तःकरणमेव लिङ्गमाख्यातम्। अन्तःकरणातीतं प्रधानं चालिङ्गं समाम्नातम्।

एभ्यः परः पुरुषस्ततोऽपि सूक्ष्मः कथं नेति शङ्कायां समाधत्ते। तथा हि—यथा लिङ्गावस्थातोऽपि परस्यालिङ्गस्य सूक्ष्मभानम्, न तथा पुरुषे विद्यते। यथा लिङ्गावस्थाया लिङ्गदशा समवायिकारणभूता, न तादृशसम्बन्धोऽलिङ्गावस्थायाः पुरुषेण साकं वर्तते। पुरुषो हि प्रकृतितः पूर्णरूपेण स्वतन्त्रः। किन्तु प्रधानं यावत्-प्रकृतिराज्यम्। अतोऽलिङ्गसूक्ष्मकारणं पुरुषो भवितुं नार्हतीति।

एतत्सूत्रस्य तात्पर्यमिदं यत् स्थूलं जगदारभ्य अलिङ्गाख्यं प्रधानं यावत् विषयाणां सत्ता विद्यते। शेषावस्थात्मकेऽलिङ्गे विषयाः सूक्ष्मातिसूक्ष्मतामापद्यन्ते। अतः परं सूक्ष्मताया नैव सम्भावना। निर्विकल्पे समाधौ न तिष्ठति प्रकृतिसम्बन्धः। दशेयं तदवस्थातः परवर्तिनीति॥ ४५॥

सर्वस्य कियदवधिकोटिरित्युच्यते—

**ता एव सबीजः समाधिः॥ ४६॥**

स्पष्टोऽर्थः। पूर्वसूत्रप्रतिपादिताः सवितर्क-निर्वितर्क-सविचार-निर्विचाराख्याश्चतस्रः समापत्तयः 'सबीजसमाधि'नाम्ना प्रोच्यन्ते। चतसृष्वप्येतासु दशासु ज्ञातृ-ज्ञान-ज्ञेयरूपमवलम्बनं तिष्ठति। अवलम्बनसत्त्वाद् बीजस्यापि सद्भावः। अतो दशेयं सबीजा प्रोक्ता। प्रकृतेः परिणामिनीत्वात् दृश्यरूपं जगदुत्पद्यते। दृश्यप्रपञ्चरूपं जगत् प्रकृतिकार्यम्। पुरुषो निष्क्रियो निःसङ्गः शुद्धो मुक्तस्वभावश्च। प्रकृतिपरिणामतो वृत्तिसारूप्यमधिगच्छन् स बद्ध्यते। प्रकृतिपरिणामस्वरूप-समुद्भूयमानेषु वृत्तितरङ्गेषु प्रतिफलितः पुरुषो बद्ध इव प्रतीयते। स्वच्छमणिसन्निधाने रञ्जितपदार्थस्थापनेन मणिरपि तद्वदेव रञ्जितो निभाल्यते। पुरुषबन्धनस्य सुस्पष्टमेतदुदाहरणम्।

अष्टाङ्गयोगसाधनेन उपायान्तरेण वा पूर्णरूपेण एकतत्त्वमभ्यस्यन् योगी नैजमन्तःकरणं सर्वथा वृत्तिविरहितं विदधत्, सवितर्कावस्थातो निर्वितर्कावस्थाम्, ततोऽपि सविचाराम्, ततोऽपि च निर्विचारां दशामुपढौकते। तदानीं तदीयमन्तःकरणं क्रमशः स्थूलतः सूक्ष्माभिमुखमग्रेसरत् परिशुद्धं निर्मलं वृत्तिविरहितं च सञ्जायते। तत्क्रममनुसृत्यैव तदीयमन्तःकरणं क्रमशो विशेषदशातोऽविशेषाम्, ततश्च लिङ्गदशाम्, ततोऽपि चालिङ्गावस्थां प्रापत् निस्तरङ्गतडागवत् निर्मलं विशुद्धं च बोभवीति। तदा किल द्रष्टुः पुरुषस्य वृत्तिरूपतरङ्गेषु निलीयमानं यथार्थस्वरूपं प्रकाशमेति। तदैव च निर्बीजसमाधिभूतिमधिगच्छन् योगी मुक्तिभूमिं प्राप्नोति।

एकतत्त्वमभ्यसन् योगी स्वकीययोगाभ्यासतः क्रमेण पूर्वोक्ताः सर्वा अप्यवस्था अधिगच्छन् अन्ते च समुन्नतभूमिमासादयन् परमात्मनः परमपुरुषस्य या अलौकिकीः शक्तीः समाप्नोति, तद्वर्णनं वक्ष्यते॥ ४६॥

निर्विचारसमापत्ति-परिणामो निर्दिश्यते—

**निर्विचारवैशारद्येऽध्यात्मप्रसादः॥ ४७॥**

निर्विचारसमापत्तौ समधिगतायाम् आत्मनः प्रसादः समुदेति। पूर्वप्रतिपादितसिद्धान्तेन निर्णीतमिदं यत् सवितर्कातो निर्वितर्का, ततश्च सविचारा, ततोऽपि च निर्विचारा समापत्तिः क्रमशः समुन्नता। अन्तिमदशास्वरूपे निर्विचारसमाधौ सम्पूर्णरूपेण प्रकृतेः परिशुद्धत्वात् रजस्तमसी लयं प्राप्नुतः, सत्त्वस्य च परिपूर्णप्रकाशेन अन्तःकरणेऽध्यात्मप्रसादः समुदेति।

परमपुरुषाख्यं ब्रह्म सच्चिदानन्दमयम्। एकस्मिन् तदद्वैतभावे सच्चिदानन्दरूपास्त्रिभावा विद्यन्ते। तत्सत्तयैव सत्तावती प्रकृतिः परिणामिनी सती यदा जगत् प्रसूते, तदानीं ब्रह्मानन्दः सच्चिद्रूपजडचेतनाश्रयेण अविद्यामय-द्रष्टृ-दृश्याभिनिवेशरूप-विषयानन्दरूपेण परिणमति। तेनैव जीवो विमुह्यति। एतदेव जीवबन्धनदशायाः सूक्ष्मं रहस्यम्। अज्ञान-

जन्यविषयानन्दे निमग्नो जीवो गतागतचक्रे बभ्रम्यमाणस्तिष्ठति। यद्यपि विषयानन्देऽपि ब्रह्मानन्द एव परिव्याप्नोति, परन्तु विषयानन्दोऽज्ञानजन्यत्वात् क्षणभङ्गुरो मिथ्याभूतश्च। सविकल्पसमाधेः सर्वोत्तमदशायामत्र योगसाधनेन एकत्वाभ्यासस्य फले समुदीयमानेऽन्तःकरणं वृत्तिराहित्यं निर्मलत्वं च प्रपद्यते। योगिराजस्य विशुद्धेऽन्तःकरणेऽत्र स्वत एव परमानन्दप्रदो ब्रह्मानन्दाभासः प्रतिफलति। अयमेव अध्यात्मप्रसाद उच्यते। दुःखकारणभूते रजस्तमसी मते। अतस्तयोर्विलये योगिना साधकेन परिमुक्तसर्वदुःखेन परमानन्दमय-परमात्मसान्निध्येन आत्मप्रसादस्वरूपः परमानन्दोऽनुभूयते ॥ ४७ ॥

तदानीं किं दशेत्युच्यते—

**ऋतम्भरेति तत्र प्रज्ञा ॥ ४८ ॥**

तत्र दशायाम्, ऋतम्भरा प्रज्ञा समुदेति। 'ऋतं सत्यं बिभर्ति धारयतीति ऋतम्भरा।' यस्यां बुद्धौ सत्यं समुदेति, सैव ऋतम्भरा समाम्नाता। पूर्वसूत्रप्रतिपादितदशायां सत्त्वगुणस्य पूर्णोदयेन बुद्धिः सात्त्विकी सञ्जायते। अन्तःकरणे रजस्तमसोर्विद्यमानत्वे चाञ्चल्यवशाद् बुद्धिः पूर्णरूपेण नैव प्रकाशते। निर्विचारसमाधिदशायां रजस्तमसोर्विलयेन बुद्धिचाञ्चल्यं प्रणश्यति। तदानीमन्तःकरणे विपर्ययादिमिथ्याज्ञानस्य नास्ति सम्भावना। सर्वेऽपि पदार्थाः यथावत् स्वस्वरूपतः प्रतीयन्ते।

इयमेव बुद्धिर्वेदान्तशास्त्रे 'प्रबोध'नाम्ना, योगशास्त्रे च 'ऋतम्भरा' इति समाख्यायते। निर्विचारसमाधिपरिपूर्णतायां योगिनामन्तःकरणेषु एतादृश्येव सत्यसुधाकरकिरणजालमण्डिता अमृतमयी प्रज्ञा समुदयति। अत एवेयं प्रज्ञा योगिराजेन पतञ्जलिना 'ऋतम्भरा' समाख्याता ॥ ४८ ॥

अन्यविधप्रज्ञापेक्षया ऋतम्भरायाः किं वैशिष्ट्यमित्युच्यते—

**श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥**

विशेषार्थत्वात् विलक्षणविषयज्ञापकत्वात् श्रुतानुमानबुद्धितः अन्यविषया भिन्नरूपा ऋतम्भरा भवति। शब्दश्रवणजन्यं ज्ञानं परिपूर्णं न

सम्भवति। शब्दद्वारा प्राकट्यं नीयमानेऽपि भावे विषयस्य सूक्ष्मता, भावविस्तरः, गुणक्रमाश्च नैव याथातथ्येनानुभूयन्ते।

अनुमानज्ञानमपि नैव परिपूर्णम्। यद्यपि दूरवर्तिनि पर्वते धूमदर्शनेन अग्नेरनुमानं सिद्ध्यति, किन्तु स किंपदार्थजन्यः कियान् वेति सूक्ष्म-कारणज्ञानमनुमित्या न भवितुमर्हति। शब्दानुमानयोर्यावदवधिगतिरस्ति, तावदवधिपर्यन्तमेव ज्ञानमनुभावयितुं शक्नुतस्ते। ततोऽग्रे न किमपि बोधयितुमर्हतः। इन्द्रियग्राह्याः लौकिकप्रत्यक्षपदार्था एव शब्दानुमानाभ्यां प्रकाशयितुं शक्यन्ते। सूक्ष्मातिसूक्ष्मपदार्थप्रकाशने तयोः सामर्थ्याभावः। पूर्वसूत्रवर्णितायां समाधिगतबुद्धौ तादृग् असम्पूर्णत्वं नास्ति। सत्त्वगुण-स्वरूपज्ञानस्य परिपूर्णप्रकाशेन तद्बुद्धेरगोचराः केऽपि विषया न सन्ति। ऋतम्भरां बुद्धिमधिगत्य समाधिस्थेन साधकेन स्थूलस्थूलाः सूक्ष्मसूक्ष्मा-श्चापि विषया यथावत् परिज्ञातुं शक्यन्ते। अत एवैषा सर्वविधप्रज्ञा-विलक्षणरूपा विद्यते।

अन्तःकरणविभागेषु बुद्धिसहचरोऽहङ्कार एव। मानवो यादृशमहङ्कारं धारयति, तद्बुद्धिरपि तादृशी भवति। तदीयसिद्धान्तोऽपि तादृश एव। नरा नार्यः, राजानः प्रजाश्च नैजाहङ्कृतिप्रसूतभावानुसारेण स्वबुद्ध्या विचारयन्ति। अतः साधारणी प्रज्ञा परिपूर्णा भवितुं नार्हति। एकतत्त्वा-भ्यासेन निर्मलीभूतचेतसो योगिनोऽन्तःकरणं रजस्तमोमलं निराकृत्य यदा विशुद्धतां भजति, तदा तत्र पूर्वोक्तायाः असम्पूर्णतायाः कापि सम्भावना नास्ति। तदानीं योगिनोऽन्तःकरणं विशुद्धं व्यापकं च जायते। तदीया बुद्धिरपि विशुद्धा व्यापिका च सम्पद्यते। तदन्तःकरणे ज्ञानबाधकोऽह-ङ्कारो नावशिष्यते।

विशुद्धचित्स्वरूपायाः परिशुद्ध-भगवद्बुद्धिरूपिण्या ऋतम्भरायाः प्रज्ञायाः साहाय्येन योगी निखिलानपि पदार्थान् याथातथ्यरूपेण परिद्रष्टुं शक्नोति। लौकिकजगतः सूक्ष्मपदार्थानां दैवजगतोऽध्यात्मराज्यस्य च सूक्ष्मातिसूक्ष्मविषयाणां विज्ञानं तदन्तःकरणप्रतिफलितम् ऋतम्भरया प्रज्ञया योगी सम्यग् विजानाति॥ ४९॥

ततः किमित्युच्यते —

**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥**

स्पष्टोऽर्थः। पूर्वसूत्रे ऋतम्भराया बुद्धेर्विशिष्टलक्षणगुणान् वर्णयित्वा सम्प्रति तज्जा विशिष्टफलावाप्तिरुच्यते। ऋतम्भराप्रज्ञाप्राप्तिदशायामन्तःकरणे समुदीयमानाः संस्कारा अन्तःकरणस्थपूर्वसंस्कारविनाशका भवन्ति। सर्वविध-विषयसंस्कारेषु नाशमुपगतेषु विषयज्ञानमपि प्रणश्यति। ततश्च निर्विषया परिशुद्धा ऋतम्भरा प्रज्ञा समुदेति। तदानीं तत्र समाधिस्थबुद्धि-संस्कारव्यतिरिक्ता व्युत्थानदशा-संस्कारा नावशिष्यन्ते। अन्तःकरणे पूर्णरूपेण प्रणष्टा वैषयिकसंस्कारा न पुनरुद्भवन्ति। एवम् ऋतम्भराबुद्धि-रूपनिर्मलप्रवाहद्वारेण चित्तरूप-शिलातो व्युत्थानसंस्काररूप-मलचिह्नान्यपि परिपूर्णरूपेण प्रक्षाल्यन्ते।

तटस्थ-स्वरूपभेदेन ज्ञानं द्विविधम्। यत्र ज्ञातृ-ज्ञान-ज्ञेयरूपा त्रिपुटी विद्यते, तत् तटस्थज्ञानम्। यत्र च त्रिपुटी विनश्यति, अन्तःकरणमेकान्ततो व्युत्थानदशासंस्कारविरहितं निर्मलं सद् विलीयते, तद्विलय-समकालमेव स्वरूपज्ञानमुदयति। एतदेव आत्मज्ञानमुच्यते। ज्ञानमिदमासाद्य आत्मा ज्ञानस्वरूपो विख्यायते। सबीजसमाधितो निर्बीजसमाधौ आसादिते त्रिपुटीजनिताः दृश्यप्रपञ्चसम्बन्धनिबन्धनाः व्युत्थानदशायाः सर्वेऽपि संस्कारा विलयमुपयान्ति। एतदवस्थाया विवृतिरग्रे वक्ष्यते ॥५०॥

योगफलस्वरूपोऽसम्प्रज्ञातसमाधिर्निरूप्यते—

**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः ॥ ५१ ॥**

तन्निरोधेन सबीजसमाधि-समस्तसंस्कारेषु निरुद्धेषु निर्बीजः समाधिराविर्भवति। एवमन्तःकरणे वृत्तिषु पूर्णरूपेण निरुद्धासु सविकल्पसमाधि-पूर्णाम् अवस्थामधिगतवति साधके निर्बीजाख्यो निर्विकल्पः समाधिः समुदयति। दशायामत्र संप्रज्ञातसंस्कारा नितरां विलीयन्ते। ततः पूर्वमेव अन्तःकरणवृत्तयः समस्ताः स्वस्वकारणे विलीयमानाः सम्प्रज्ञातसंस्कारे

विलयमुपाढौकन्ते। अतोऽवस्थायामत्र पुरुषः पूर्णरूपेण निर्मलः सन् स्वीयं स्वरूपमधिगच्छति। एतदवस्था-नामैव पुरुषस्य स्वरूपाधिगतिः। जीवात्मनः परमात्मनि विलयो मुक्तिः कैवल्यं वा समुदीर्यते। वृत्तिसारूप्याधिगमो जीवभावः। योगसाधनद्वारा चित्तवृत्तिनिरोधेन द्रष्टुः पुरुषस्य स्वरूपप्राप्तिरेव योगफलम्। एतदेव च मुक्तिपदमाम्नातम्।

तथा चायं निर्गलितः पाद-सारांशः—

चित्तवृत्तिनिरोधरूप-योगप्राप्तये अभ्यास-वैराग्ये प्रथमावलम्बनभूते समाम्नाते। वैराग्येण दृश्यप्रपञ्चबन्धनं प्रणश्यति, अभ्यासेन च क्रमशः चित्तवृत्तिनिरोधपूर्वकं निर्वीजः समाधिरासाद्यते। सर्वात्मनि परमपुरुषे ईश्वरे भक्तिपुरस्सरं चित्तसंयमरूपं प्रणिधानमपि कैवल्यप्राप्तिकारणम्। परन्तु तत्र पूर्णरीत्या साफल्याधिगमे निर्वीजसमाधिप्राप्तिरूप-मुक्तिपदासादने वा वहवोऽन्तरायाः सन्ति। तांश्च विनाशयितुं प्रणवजपेन वहुविधसाधनेन चैकतत्त्वमधिगम्यते। एकतत्त्वलाभेन सर्वानन्तरायान् विनाशयन् साधको योगी क्रमशः सवीजसमाधेरनेकाः भूमिका अतिक्रामन् अन्ते आत्मप्रसादम् ऋतम्भरां प्रज्ञां च समासाद्य निर्वीजसमाधिदशामधिगच्छन् जीवन्नेव विमुच्यते। तदानीं भाग्यवतः सिद्धमहात्मनो योगिराजस्य नैव भवति पुनर्दृश्यप्रपञ्चनिपातेन वन्धनसम्भावना।

आत्मा किल नित्यमुक्तः, शुद्धः, अद्वितीयः, द्वैतप्रपञ्चविरहितो ज्ञानस्वरूपश्च। वृत्तीनामावरणेन अन्तःकरणं चाञ्चल्यमासादयद् आत्मस्वरूपमाच्छादयति। सवीजसमाधितः क्रमेण निर्वीजसमाधावधिगते स्वत एवाऽऽत्मस्वरूपं प्रकाशते। ततश्च न पुनरज्ञानवन्धनं वा स्थातुमर्हति। निर्वीजसमाधिप्राप्तिपूर्वकं कैवल्याधिगमस्य एतदेव रहस्यमवधेयम्॥ ५१॥

# २. साधनपादः

आत्मसाक्षात्कारेण योगानुशासनस्य परिपूर्णोऽधिकारोऽधिगम्यते। यत्र सात्त्विकबुद्धिपूर्णरूपाया ऋतम्भरायाः प्रज्ञायाः समुदयः, स एव योगानुशासनस्य पूर्णोऽधिकारी। सात्त्विकबुद्धिसम्पन्नस्य साधकस्य हेतवे एवेदमनुशासनं विहितम्। अतस्तदनुशासनाधिकारनिर्णयम्, तत्परिपूर्णतोषाप्तिदशावर्णनम्, तदीयं चरमं फलम्, योगाधिगमोपायविज्ञानं च सविस्तरं प्रथमपादे समुपवर्ण्य सूत्रकृन्महर्षिः योगपथप्रवृत्तस्य योगानुशासनफलाकाङ्क्षिणः चित्तवृत्तिनिरोधेच्छोः साधकस्य कृते योगसाधनस्य विविधोपायान् वर्णयति—

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

तपः, स्वाध्यायः, ईश्वरप्रणिधानं चेत्येतानि 'क्रियायोग'शब्देनोच्यन्ते। प्रथमपादे सूत्रकृता महर्षिणा स्थिरीभूतान्तःकरण-सावधानसाधकहिताय सम्प्रज्ञातादियोगा व्याख्याताः। साधनपादनाम्नि द्वितीयपादेऽत्र विविधाः साधनोपायाः समुपवर्ण्यन्ते।

येषां ज्ञानिसाधकानामन्तःकरणं समुन्नतभूमिमधिगच्छद् अस्थैर्यञ्च पर्यत्यजत्, तेषां हिताय पूर्वपादप्रोक्तसाधनान्येव हिताधायकानि। परन्तु ये किल अनिर्मलीभूतचेतसो मुमुक्षवो निम्नाधिकारवन्तः साधकाः सन्ति, ते हि यथाक्रमं तपःस्वाध्यायेश्वरप्रणिधानानि समाचरन्तः शनैः शनैः समुन्नतभूमिमासाद्य समाधिस्थाः सन्तः कैवल्यपदमधिगच्छन्तो विमुच्यन्ते।

शरीरमनोवचसाम् अनर्गलप्रवृत्तिनिरोधपूर्वकं विषयसम्बन्धविरह एव तप इत्युच्यते। यथा नियमावरुद्धाः श्वानः शक्तिशालिनः सन्तो मृगयाविशेषसहायका भवन्ति, तथैव शरीरमनोवाचां विषयवत्यः शक्तयस्तपसा सुसंयताः प्राबल्यमापद्यन्ते। तपस्विनस्तपसैव अनेका अलौकिकसिद्धीः समधिगच्छन्ति। तपसैव साधका असीमधर्मफलमासादयन्ति।

अतो योगमार्गे साफल्याधिगमाय तपो हि सर्वाभ्यर्हितं प्रधानं सहायकम्। तपोविरहितानां पुरुषाणां योगसिद्धिरसम्भवा। यतोऽनादिकर्माविद्या-प्रभृति-क्लेशवासनासमुत्पन्न-विषयजालम् अन्तःकरणमलं च तपःसाधनादृते नैव क्षीणतामासादयतः। तपसैव अन्तःकरणं परिशुद्धं सत् साधन-शक्तिप्राप्तियोग्यतां लभते। प्रणवादिसिद्धमन्त्राणां जपो मोक्षप्रदशास्त्राणा-मध्ययनं च 'स्वाध्यायः' उच्यते। स्वाध्यायेन अन्तःकरणज्ञानभूमिः समुन्नमति, साधकश्च स्वीयं लक्ष्यं स्थिरीकृत्य क्रमशोऽग्रेसरति।

ईश्वरप्रणिधानस्वरूपं पूर्वपादे सविस्तरं प्रपञ्चितम्। एतत्सूत्रोक्तेन ईश्वरप्रणिधान-शब्देन गौणी भक्तिर्निर्दिष्टा। गौण्या भक्तेः साधनेन क्रमशः परा भक्तिरासाद्यते। ईश्वर-तद्‌गतभावरूप-पराभक्ति-प्राप्तये भक्तिशास्त्रेषु यानि श्रवण-कीर्तनादिसाधनानि वर्णितानि, तान्येव 'गौणीभक्ति'नाम्ना प्रोच्यन्ते। गौणी-पराभेदेन भगवद्‌भक्तिर्द्विविधा। पराभक्तिरूपमभ्यर्हितम् ईश्वरप्रणिधानं समाधेः साक्षात् कारणभूतमिति पूर्वमेव समुदीरितम्। वैधी रागात्मिका, चेति भेदद्वयसम्पन्ना गौणीनामिका प्रथमदशाया भगवद्‌भक्तिः योगपथपथिकाय योगशक्तिं वितरति।

फलनिरपेक्षतया परमगुरवे श्रीमति परमेश्वरे सर्वकर्मफलसमर्पणम् ईश्वरप्रणिधानशब्दार्थ इति निरूपितपूर्वम्। प्रणिधानप्रथमावस्थायां कर्म-फलसमर्पणबुद्धि-प्राप्तिचेष्टा, तदर्थं विधिनिषेधात्मकानि च साधनानि समपेक्षितानि, एतदेव क्रियायोगान्तर्गतस्य ईश्वरप्रणिधानस्य तात्पर्यम्। एवं हि तपःस्वाध्यायादिसाहाय्येन समुन्नमन्तः साधकाः समाधेरभिमुख-मग्रेसरन्ति॥ १॥

एवं समनुष्ठित-क्रियायोगलक्षणमुच्यते—

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च॥ २॥**

पूर्वसूत्रप्रतिपादितः क्रियायोगक्रमः समाधिप्राप्तये क्लेशनाशार्थञ्चापि समनुष्ठीयते। पूर्णतामधिगतः क्रियायोगो बहुविधवृत्तियुक्तान्तःकरणस्य

-नानाक्लेशान् दग्धवीजवद् विनाशयति। ईश्वरप्रणिधानसाधकसद्गतित्वं सप्रमाणं पूर्वसूत्रे प्रतिपादितम्। साधकहृदये भगवत्-प्रेम्णः समुदये जाते स्वत एव सर्वेऽपि क्लेशा विनिवर्तन्ते। अविद्यादयः पञ्च क्लेशा व्युत्थानदशायां विषयप्रवृत्तस्य जीवस्य चेतः परिखेदयन्ति। अतस्तपः-स्वाध्यायादिसाधनैः व्युत्थानदशाया निरोधः समाधिदशायाः समुदयश्च यावान् समुदेष्यति, तावानेव क्लेशक्षयो भविष्यतीत्यत्र नाणीयानपि संशीतिलवः।

सुखदुःखादिद्वन्द्वग्रस्तो जीवो दुर्दमनीयान् क्लेशाननुभवति। तपसा द्वन्द्वसहिष्णुर्भूत्वा साधकः क्लेशमूलं शिथिलयितुं सामर्थ्यं लभते। ईश्वरप्रणिधानं क्रमशः साधकं समाधिभूमावग्रे सारयति। स्वाध्यायः उभयसहायकः। अतो योगपथपथिकस्य कृते तत्त्रिविधसाधनानामाश्रयणं समुचितम्। एवं किल साधकः समुन्नतमधिकारमासादयन् क्रमेण निर्विकिल्पसमाधिमधिगच्छन् विमुच्यते ॥ २ ॥

इदानीं क्लेशा निरुच्यन्ते—

**अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥**

स्पष्टोऽर्थः। आनन्दावरोधिन्यो वृत्तयः 'क्लेश'शब्देनोच्यन्ते। निष्कामो भावो भगवद्भक्तिर्ज्ञानं चेत्यादीनि ब्रह्मानन्दं प्रकाशयन्ति। ब्रह्मानन्द-माच्छादयन्ती तं वा विषयानन्दस्वरूपेण परिवर्तयन्ती अज्ञानजन्या वृत्ति-ततिः सूत्रकृता योगाचार्येण पञ्चधा विभक्ता, क्लेशसंज्ञया समाख्याता च। पञ्चविधक्लेशसंज्ञकं दुःखोत्पादकं मिथ्याज्ञानमेतद् यथा यथा परिवर्धते, तथा तथैव तमोगुणवृद्धिद्वारेण अहङ्कृतिं समेधयत् जीवान्तःकरणे जाड्य-मभिवर्धयति। एवंरीत्या सांसारिकसुखदुःखरूपिण्यौ द्वे नद्यौ परस्परं साहाय्यमाचरन्त्यौ प्रवलवेगेन प्रवहमाणे जीवं विनिमज्जयतः। पञ्चविध-क्लेशस्वरूपस्य विवृत्तिरग्रिमसूत्रेषु समनुष्ठास्यते ॥ ३ ॥

पञ्चस्वपि क्लेशेषु अविद्याप्राधान्यं निरूप्यते—

**अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ॥ ४ ॥**

प्रसुप्त-तनु-विच्छिन्नोदारसंज्ञया चतुर्विधविभक्तानां क्लेशानामविद्यैव मूलकारणम्। अविद्ययैव सृष्टिरुत्पद्यते। तयैव जीवो जडमयं निजस्वरूपमवगच्छन् मायाजाले निमग्नः। चतुर्विधक्लेशहेतुरविद्यैव।

प्रसुप्त-तनु-विच्छिन्नोदारसंज्ञकाः क्लेशानां चतस्रो भूमयः। प्रसुप्तत्वं नाम निद्रितत्वम्। अस्मितादिक्लेशा निद्रितरूपेण अन्तःकरणे निवसन्ति। तत्सम्बन्धो वाह्यजगतो न तावत्प्रतीयते, यावत् ते केनापि कारणविशेषेण जागृता न भवेयुः। यथा वालकस्यान्तःकरणे क्लेशादिवृत्तीनां विद्यमानत्वेऽपि सदानन्दमये वालके तत्स्फूर्तिर्न तावद् भवति, यावदसौ वालो वाह्यकारणकलापेन क्लेशितो न स्यात्। क्लेशानामियं दशा प्रसुप्तेति कथ्यते। मनुष्येषु सर्वा अपि क्लेशवृत्तयः सदैवानुभूयन्ते, परन्तु वालके ताः प्रसुप्ताः सन्ति। वालकेन ताः स्वयं वृत्तिरूपेण नानुभूयन्ते। केनापि वाह्यकारणेन चालिताः समुत्तेजिताः सन्तः क्लेशा वस्तुतो जाग्रदवस्थायां परिलक्ष्यन्ते।

कृशत्वमेव तनुत्वं नाम। अर्थादेका वृत्तिरपरवृत्तिभारेण समाक्रान्ता प्रक्षीयते। क्लेशदशेयं तनुनाम्ना समाम्नाता।

यदा साधन-स्वाध्याय-विचार-तपोभिः सात्त्विकवृत्तिषु समुदीयमानासु राग-द्वेषादिमूलकास्तामसिकवृत्तयः प्रक्षीयन्ते, तदानीं क्लेशमूलकवृत्तयस्ता व्यक्तिविशेषे नूनमेव तिष्ठन्ति, किन्तु सत्सङ्ग-सच्चर्चाप्रभावतः प्रक्षीणतामापद्यन्ते। पार्थक्यं हि विच्छिन्नत्वम्। अर्थात् परस्परसहयोगिवृत्तिद्वयोदयकाले एकवृत्तेः पश्चादपरवृत्तेरनुभवो जायते। यथा कामेन क्रोधस्योत्पत्तिः। परन्तु क्रोधवृत्तौ समुदीयमानायां कामवृत्तिः पार्थक्यं भजति। इयमवस्थैव विच्छिन्ननामिका। उदाहरणेनैतदवधेयं यत् कस्यापि प्रेमिकस्य कोमला प्रेमवृत्तिः स्वकीयप्रेमपात्रे निजस्वार्थविपरीतदोषदर्शनेन अन्तःकरणे तिरोदधाति। तदानीं च प्रेमपात्रोपरि क्रोधस्य द्वेषस्य च वृत्तिः समुदेति। तदा स्वयमेव तदीयपूर्वकालिकप्रेमवृत्तिर्विच्छिन्नदशामधिगच्छति।

सांसारिकसाधारणकर्मप्रतीयमानाया वृत्तेः परिपूर्णादशा उदारशब्दे-

नाख्यायते। उदारावस्थायामस्यां वृत्तयः जीवं विमोहयन्त्यः स्वीयपूर्ण-स्वरूपेण समुद्भूतां पूर्णां क्रियामुत्पादयन्ति। सुतरां प्रसुप्त-तनु-विच्छिन्नो-दारचतुर्विधदशायुक्तानाम् अविद्यास्मितारागद्वेषाभिनिवेशाख्यानां पञ्चा-नामपि क्लेशानामविद्यैव उत्पत्तिनिदानभूता। पूर्वमेवेदं निर्णीतं यत् यथा क्षुद्रोऽपि वटवीजो महतो वटवृक्षस्य करणरूपस्तथैव नानावृत्तिमयसृष्टिनिदा-नमविद्यावीजमेवास्ते। यथा वीजे नष्टे न वृक्षसम्भावना, तथैव ज्ञानाग्निना अविद्यारूपे वीजे दग्धे न पुनर्नानावृत्तिमयसृष्टिसम्भावना। सूत्रेऽत्र अविद्याया मौलिकप्राधान्यमुपवर्णितम्। तल्लक्षणमग्रिमसूत्रे वक्ष्यते ॥ ४ ॥

अविद्या लक्ष्यते—

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥५॥**

अनित्येषु पदार्थेषु नित्यत्वस्य, अशुचिषु शुचित्वस्य, दुःखदेषु सुख-त्वस्य, अनात्मसु च आत्मनो बुद्धिरविद्या प्रोच्यते। अविद्यया विपरीत-ज्ञानमुत्पद्यते। यस्य वस्तुनो वास्तविकं यत्स्वरूपम्, तद् विरहय्य विपरीत-ज्ञानं या प्रकाशयति सैवाविद्या। अविद्यैव हेतुभूतया विनश्वरेषु संसार-रूपैहलौकिकेषु स्वर्गादिपारलौकिकेषु च सुखेषु जीवस्य नित्यत्वबुद्धिः। अविद्ययैव मूत्रपुरीषाद्यपावनपदार्थसम्भूतशरीरे पवित्रताप्रतीतिः, मांस-वसाविकृतिरूपे रमणीदेहे च रामणीयत्वज्ञानम्। अविद्ययैव नाशशीलेषु परमदुःखदेषु विषयेषु जीवस्य सुखदातृत्वपरिज्ञानम्। तथैव च अनात्मनि जडरूपे पाञ्चभौतिकशरीरे जीवस्य चेतनस्वरूपस्यात्मनो बुद्धिरुत्पद्यते। एवंविधनानारूपमिथ्याज्ञानेषु जीवस्य निपातहेतुरविद्यैव।

ब्रह्मशक्तेर्महामायाया ज्ञानाज्ञानसम्बन्धतो भेदद्वयमाम्नातम्। ज्ञान-प्रसविनी विद्या, अज्ञानजननी चाविद्या प्रतिपादिता। स्मर्यते चात्र—

"विद्याऽविद्येति तस्या द्वे रूपे जानीहि पार्थिव।
विद्यया मुच्यते जन्तुर्वद्ध्यतेऽविद्यया पुनः ॥" इति।

अविद्या हि विपरीतभावप्रदर्शनपुरस्सरं समुत्पादितसृष्टिजाले जीवं सुदृढं निवध्नाति। कालान्तरे च सोऽभ्यासवैराग्यप्रभावतो योगानुशासनपथ-

पथिको ज्ञानप्रसविन्या विद्याया उपासनया अविद्याबन्धनानि समूलं नाशयित्वा परमं पदमधिगच्छति। अतो ज्ञानजननी विद्या यावन्नोदेति, न तावज्जीवोऽविद्याजनितं क्लेशम् एकान्ततः परित्यक्तुं शक्नोति। तयैव विमोहितो जीवः सदैव अनित्ये नित्यत्वबुद्धिम्, अपवित्रे पवित्रबुद्धिम्, दुःखे सुखबुद्धिम्, अनात्मनि चात्मबुद्धिं प्रकुर्वाणस्तिष्ठति। अविद्ययैव कारणभूतया मोहमुपगतो जीवः पापं पुण्यरूपेण अधर्मं च धर्मरूपेण मन्यमानः सदैव दुःखेषु पापत्यमानस्तिष्ठति ॥ ५ ॥

अविद्यालक्षणं वर्णयित्वा तद्भिन्नचतुर्विधक्लेशाः क्रमशोऽधो निर्दिश्यन्ते—

दृग्दर्शनशक्त्योरेकात्मतैवास्मिता ॥ ६ ॥

दृक्छक्तौ दर्शनशक्तौ चान्योन्यमभेदप्रतीतिः अस्मिता प्रोच्यते। पुरुषे ज्ञानकारिणी दर्शनशक्तिर्विद्यते। बुद्धिरूपेऽन्तःकरणे दर्शनदातृत्वशक्तिर्वर्तते। द्रष्टा दर्शनयन्त्रं च नैकः पदार्थः। परन्तु येन द्रष्टरि पुरुषे दर्शनयन्त्रस्वरूपेऽन्तःकरणे चैकत्वप्रतीतिः, तस्यैव मायाप्रभावस्य नाम अस्मितेति। सर्वशक्तिः पूर्णज्ञानमयः परमेश्वरोऽस्मिताविरहितः, अतस्तत्र नास्ति भ्रमलेशोऽपि। परन्तु जीवस्य ज्ञानांशो जीवेऽन्तःकरणे चैक्यं स्थापयति। अतः कारणात् जडरूपान्तःकरणक्रियमाणकर्मकलापस्य चेतनरूपो जीवात्मा कर्तारं भोक्तारं चात्मानं मन्यते। एतद्भ्रमज्ञानवशादेव स्वस्वरूपेऽन्तःकरणे चाभेदं मन्यमानो जीवात्मा सर्वविधमपि सुखदुःखमुपभुङ्क्ते। परमात्मनः परमपुरुषस्य स्वरूपे सच्चिदानन्दभावस्यैव अद्वैतरूपतः स्थितत्वात् न तत्रास्मिता स्थातुमर्हति। यदा च अस्ति-भाति-स्वरूपसच्चिद्भावयोः पृथक्त्वेनानुभवस्तदैव द्वैतभावप्रबोधिन्या अस्मितायाः समुदयो जायते। एतदेव जीवब्रह्मभेदकारिण्या अद्वैतभावोत्पादिन्या अस्मितायाः स्वरूपम्। चित्तवृत्तिनिरोधस्य चरमफलरूपनिर्विकल्पसमाधेरुदये सति विद्याशक्तिबलेन स्वकारणीभूतयाऽविद्यया सह यदाऽस्मिताऽन्तर्दधाति, तदा द्रष्टुः स्वरूपेऽवस्थानं जायते।

पुरुषस्य बुद्धेश्चैकात्मता न तात्त्विकीति ज्ञापनार्थम् 'एव'शब्द-प्रयोगः। अनाद्यविवेकेन उभयोर्भोक्तृभोग्यभावः केवलमौपचारिक एव। स च विवेकोदयेन प्रणश्यति, पुरुषश्च स्वीयं ज्ञानमयं स्वरूपमवबुद्ध्य विमुच्यते ॥ ६ ॥

रागरूपस्य तृतीयक्लेशस्य वर्णनमनुतिष्ठति—

**सुखानुशयी रागः ॥ ७ ॥**

सुखस्य भोगानन्तरं तत् स्मृत्वा सुखवृत्तिलोभेच्छैव रागः। अनेनैव रागेण अन्तःकरणरूपजलाशये बहुविधास्तरङ्गा आविर्भूयन्ते। वासना-जनितसंसारप्रपञ्चस्य प्रधानहेतू राग एव। वासनया रागस्तेन वासनेति कर्मणामनन्तधाराः प्रवाहयन् जीवो गमागमचक्रे निरन्तरं परिभ्राम्यति। रागो रजोमूलकः, स्तेनैव च संसारप्रपञ्चोत्पत्तिः। संसारोत्पत्तौ रागस्यैव जनकत्वपदमास्ते। रागेणैव निम्नगामिनः स्नेहस्य, उच्चगामिन्याः श्रद्धायाः, समानगामिनः प्रेम्णश्चोत्पत्तिः। एवं रागपाशबद्धा जीवाः संसारेऽत्र नानारूपेषु बम्भ्रम्यन्ते, रागेच्छयैव जीवो विषयरूपपाशेषु निपतति ॥ ७ ॥

दुःखरूपश्चतुर्थः क्लेशो निरूप्यते—

**दुःखानुशयी द्वेषः ॥ ८ ॥**

दुःखस्य अनुस्मरणपूर्वकं तत्रोत्पन्नविरुद्धभावनैव द्वेषः। दुःखज्ञातृषु दुःखानुस्मरणेन दुःखे तत्साधने वा क्रोधवृत्तिसमतुल्या रागवृत्तिविपरीता वृत्तिरेव द्वेषनाम्ना प्रोच्यते। दुःखलक्षणं पूर्वसूत्रे वर्णितम्, अत एव न पुनस्तदुच्यते। तद्दुःखस्य स्मरणेन भयेन च रागवृत्तिविपरीता तीव्रा अनिच्छावृत्तिरेव द्वेषाख्याऽवधेया। द्वेषस्तु तमोमूलको रागवृत्तिविरोधी च विद्यते। इमे एव राग-द्वेषवृत्ती आकर्षण-विकर्षणशक्तिमुद्भावयन्त्यौ समस्तस्यापि ब्रह्माण्डस्य सृष्टिस्थितिलयकर्मसु साहाय्यमाचरतः। रागेण सृष्टिः, द्वेषेण लयः, उभयसमतायां च स्थितिर्जायते। अतो रागे रजोगुणः, द्वेषे तमोगुणः, उभयसमतायां च सत्त्वगुणः समुदेति। रागद्वेषावुभावेव अविद्यासहायकौ, उभयोः समता विद्यासहायिका। जीवस्य बन्धनप्राप्ति-

विषये रागद्वेषौ समानौ स्तः। रागमन्तरेण द्वेषस्य द्वेषमन्तरा रागस्य च स्थितिरसम्भवा। सांसारिका द्वन्द्वप्रपञ्चा रागद्वेषमूलकाः। अतः क्लेशेषु द्वेषोऽपि पूर्णशक्तिशाली विज्ञातव्यः॥ ८॥

पञ्चमं क्लेशं निर्वक्ति—

स्वरसवाही विदुषोऽपि तथारूढोऽभिनिवेशः॥ ९॥

मूर्खे पण्डिते वा, ज्ञानिन्यज्ञानवति वा, निरक्षरे किराते वेदपाठिनि विप्रे वा सर्वत्रैव समानरूपेण विद्यमाना आत्महितचिन्तनरूपिणी वृत्तिरेव अभिनिवेशसंज्ञया समाम्नाता। जन्मजन्मान्तरेषु पौनःपुन्येन समधिगतत्वात् मरणदुःखानुभवरूपा जीवितेच्छाजनिताः संस्कारसमूहा एव-स्वरस शब्देन प्रतिपादिताः। स्वरससंज्ञकसंस्काराणां वहनशीलत्वादभिनिवेशः स्वरसवाही प्रोक्तः। अभिनिवेशः किल किमिति मूर्खेषु, विद्वत्स्वपि दरीदृश्यते। अतः सूत्रे अपिशब्दः प्रयुक्तः। सर्वोऽपि प्राणी आत्महितचिन्तनपरायणः। "मया न मर्तव्यम्" इति समीहा विद्वत्स्वपि दृश्यते। मृत्युरूप-दुःखभोगादृते जीवस्य आत्महितचिन्तनमसम्भवम्। मरणेऽनिच्छारूपायाश्चिरायुष्ट्वेचेच्छारूपाया जीवसामान्यवृत्तेः कारणं मृत्युभयमेव। यतः पूर्वजन्मसु मरणकाले समधिगतनानाक्लेशानुभवेन मृत्यौ जीवस्यानिच्छा दृश्यते।

एतदपि पुनर्जन्मसिद्धिप्रमाणम्। सद्यः प्रसूते बाले ज्ञानविरहिते कीटपतङ्गे च यन्मृत्युभयं विलोक्यते, तत्तदीयपूर्वजन्मसंस्कारविजृम्भितम्। प्रत्यक्षानुमानशब्दप्रमाणैरज्ञातेष्वपि मरणजनितदुःखेषु तद्भयसमुत्पत्त्या सिद्ध्यतीदं यदत्र किञ्चित् पूर्वकारणं नूनमेव वर्तत इति। पुनर्जन्मैव एतत्पूर्वजन्मकारणम्। पूर्वजन्मानुभूतविषयाः संस्काराधीनत्वादस्मिन् जन्मन्यप्यनुभूयन्ते। सा हि मृत्युभयरूपक्लेशहेतुभूता स्वजीवनसमीहारूपिणी वृत्तिरेव अभिनिवेशनाम्ना समाख्याता॥ ९॥

वर्णितक्लेशानां विलयप्रकारः प्रोच्यते—

ते प्रतिप्रसवहेयाः सूक्ष्माः॥ १०॥

ते सूक्ष्माः पञ्चक्लेशाः प्रतिप्रसवहेयाः, अर्थात् क्रियायोगेन प्रतिलोम-परिणामद्वारा चित्तलयेन सह विलीयन्ते। पञ्चक्लेशाः पूर्वसूत्रेपूपवर्णिताः। समाधिपादोपवर्णितानां व्याधिप्रभृति-चित्तविक्षेपकरयोगविघ्नसमूहानां मूले पञ्चक्लेशा विराजन्ते। अतो महर्षिणा सूत्रकृता पूर्वं पञ्चक्लेशलक्षणानि वर्णयित्वा तन्नाशोपायाः प्रदर्श्यन्ते। योगाभिलाषिणा सर्वप्रथमं क्लेशाः परित्यक्तव्याः। यथार्थस्वरूपपरिज्ञानमन्तरेण कस्यापि पदार्थस्य हेयोपादेयता न सम्भवति, अतः पूर्वसूत्रेषु पञ्चानामपि क्लेशानां लक्षणोद्देश्योत्पत्ति-स्थानानि समुपवर्ण्य तत्त्यागोपायोऽधुना प्रदर्श्यते।

सूक्ष्म-स्थूलभेदेन पञ्चापि क्लेशा द्विधा विभक्ताः। अन्तःकरणे कारण-रूपेण विद्यमानाः सूक्ष्माः, विस्तृतिमापन्नाश्च स्थूलाः। सूक्ष्मावस्थापन्नाः क्लेशा बीजप्रणाशवत् योगेऽन्तःकरणविलयेन सहैवास्तं गच्छन्ति। स्थितौ च न पुनः प्रादुर्भवन्ति। स्थूलक्लेशलयोपाया अग्रे वक्ष्यन्ते। परन्तु सूक्ष्मक्लेशविषये ह्येतावदेवोक्तं यत् ते स्वकारणरूपेऽन्तःकरण एव प्रति-लोमविधिमनुसृत्य अन्तःकरणनिरोधात् लयमुपगच्छन्ति। पञ्चक्लेशा वृत्तयो न सन्ति। ते किल वृत्तिनिदानरूपाः चित्तगताः सूक्ष्माभावा एव। अतो वृत्तिविलयप्रकारत एतल्लयप्रकारो भिन्नः। समाधिनाऽन्तःकरणे विलीयमाने तेनैव साकं पञ्च क्लेशा अपि समूलं विलयमुपयान्ति॥ १०॥

स्थूलभावापन्न-क्लेशलयोपायं व्याचष्टे—

## ध्यानहेयास्तद्वृत्तयः॥ ११॥

तद्वृत्तयः, तेषां क्लेशानां स्थूलावस्थागता वृत्तयो ध्यानेन हेयाः परित्याज्या भवन्ति। पूर्वसूत्रे पञ्चक्लेशसूक्ष्मदशानाशोपायं प्रदर्श्य सूत्रेऽत्र तत्स्थूलावस्थानाशोपाया उपवर्ण्यन्ते। सूक्ष्मभावमयी क्लेशानां सूक्ष्मदशा यदा कार्यरूपेण परिणमति, तदा सा वृत्तिरूपं बिभ्राणा अन्तः-करणं विचालयति। येषां क्लेशानां कर्म प्रारब्धम्, तादृशोदारावस्था-प्राप्ता विस्तृतवृत्तय एव स्थूला वृत्तय इत्यवधेयम्। सुखदुःखमोहादि-दायिन्यः स्थूलवृत्तयोऽन्तःकरणे स्वाधिपत्यमकार्षुः, अतोऽन्तःकरणं यावद्

ध्यानादियोगक्रियाभिर्न निरुद्ध्यते, न तावत्ता निरुद्धा भवितुमर्हन्ति। अतः स्थूलवृत्तयो ध्यानरूपक्रियायोगेनैव प्रणाशनीयाः। यया जीवोऽन्तःकरणेन असद्वस्तु सद्रूपेण पापं च पुण्यात्मना विचारयति, सैव वृत्तिरविद्यानाम। यया किल जीवः शरीरमात्मस्वरूपेण विजानाति, सा वृत्तिरस्मिता गीयते। यदा च रागेण प्रीत्यादयो द्वेषेण च शत्रुताप्रभृतयो वृत्तयः समुदीयमानाः अन्तःकरणस्य चञ्चलतां जनयन्ति, तदानीं ता एव रागद्वेषाख्यया प्रोच्यन्ते। इयं किल रागद्वेषयोरुदारा स्थूलावस्था। जीवनेच्छाभयजनितविशेषवृत्तयः समुदीय अन्तःकरणं विमोहयन्ति, तदा ता एव अभिनिवेशस्य उदारावस्थासंज्ञया प्रख्यायन्ते।

एतत्स्थूलदशाविलयोऽन्यापेक्षया सुकरोऽवधेयः। ध्यातृध्यानध्येयाख्यां त्रिपुटीं द्वारीकृत्य यदाऽन्तःकरणं वशमानीयते, तदा स्थूलवृत्तयस्ता निजान्तःकरणतः तिरोदधति। यतो ध्यानदशायां त्रिपुटीव्यतिरिक्तं नैव किञ्चिदपि प्रतीयते अतः स्थूलवृत्तयः स्वत एव विलीयन्ते। यथा च वस्त्रस्य मलं स्थूलं जलेन अपसार्यते, सूक्ष्मं च क्षारादिनाऽपनीयते, तथैव ध्यानादिक्रियाकलापेन अन्तःकरणे स्थिरीकृते तत्कालमेव स्थूलवृत्तयो विलयमुपयान्ति। यथाकथञ्चिद् विद्यमानाः सूक्ष्मवृत्तयोऽप्यन्तःकरणे समाधिस्थे सति विलयमुपढौकन्ते। सूत्रस्यैतस्य निर्गलितार्थोऽयमेव यत् निरन्तरध्यानादिसाधनेन महाक्लेशदायकाः स्थूलवृत्तयः प्रक्षीणाः सत्योऽन्तःकरणे विलीयन्ते। ततश्च साधको महाशत्रुभिर्नाक्रम्यते॥ ११॥

क्लेशैरेभिः कस्योत्पत्तिरित्यधो विविच्यते—

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः॥ १२॥**

क्लेशा एव मूलं यस्य तादृशः कर्माशयो दृष्टेऽदृष्टे च जन्मनि वेदनीयो भोगयोग्यतां धत्ते। सूत्रकृता महर्षिणा पूर्वसूत्रैः क्लेशभेदास्तन्निवृत्त्युपायाश्च समुपवर्णिताः। साम्प्रतमेतत्सूत्रद्वारा क्लेशोद्भूतः कर्माशयः प्रतिपाद्यते।

शुभाशुभकर्मानुष्ठानजन्यो वासनात्मको धर्माधर्मस्वरूपः संस्कारराशिरेव

कर्माशयाख्यया प्रोच्यते। फलोत्पत्तिकालपर्यन्तं संस्काररूपेण चित्तभूमौ कर्मस्थितिरिति आशयशब्दः प्रयुक्तः। पञ्चक्लेशहेतुनैव शुभाशुभकर्मात्मकः कर्माशयः समुत्पद्यते। दृष्टादृष्टजन्मवेदनीयत्वेन कर्मणां भेदद्वयमवधार्यम्। येषां कर्मणां फलोपभोगो वर्तमानजन्मनि सम्पद्यते, तानि दृष्टजन्मवेदनीयानि, येषां च परजन्मनि, तानि अदृष्टजन्मवेदनीयानि प्रोच्यन्ते। पञ्चक्लेशप्रभावप्रत्युद्गतवृत्तिवीचिचिह्नस्वरूपाः संस्कारा यत्रान्तःकरणाकाशेऽङ्किताः, स एव कर्माशयोऽवधेयः। सूक्ष्मेण स्थूलेन वा देहेन जीवेन अनुष्ठीयमानकर्मवृक्षसंस्कारस्वरूपो बीजस्तदन्तःकरणचित्ताकाशे राशीभूतो जन्मान्तरीयकर्मभोगमुत्पादयति। असमुत्पन्नकर्मभोगोऽदृष्टजन्मवेदनीयः, समुत्पन्नकर्मभोगश्च संस्कारो दृष्टजन्मवेदनीयो वेद्यः। सदसद्रूपाणि दृष्टादृष्टजन्मवेदनीयानि कर्माणि तीव्रां लघ्वीं वा गतिमनुसृत्य जायन्ते। यानि प्रबलकर्माणि सदसद्रूपाणि जीवस्य विद्यमानजन्मकर्मफलं निरुद्ध्य स्वीयं फलमुत्पादयन्ति, तानि दृष्टजन्मवेदनीयानि।

महात्मा नन्दीश्वरो देवाधिदेवमहादेवप्रीतये तीव्रं तपः समाचरन् इहैव जन्मनि मानवत्वाद् देवत्वं प्रपेदे। नहुषश्च असत्कर्मप्रभावतो ह्येकस्मिन्नेव जन्मनि तिर्यग्योनिमाससाद। यद्यपि चैतत्कर्मफलानि प्रायशो जन्मान्तरभोग्यानि, तथापि तान्युग्रवेगानि जन्मन्यस्मिन्नेव फलदानि जायन्ते। तादृशालौकिककर्मविशेषावस्था दृष्टजन्मवेदनीयत्वेनाऽऽख्यायते। अदृष्टजन्मवेदनीयकर्मस्वरूपं नासाधारणम्, यतः साधारणेषु जीवेषु तादृशकर्मणामेव प्राबल्यमवलोक्यते। अन्यथा जीवानुष्ठितपुण्यपापकर्मणां शुभाशुभफलानि सपद्येवाधिगतानि भवेयुः। प्रायशः साम्प्रतिक-कर्मसंस्कारा जीवान्तःकरणे बीजरूपेण तिष्ठन्तो जन्मान्तरे वृक्षस्वरूपतां दधते।

यद्यपि सूत्रकारो महर्षिर्दृष्टादृष्टभेदेन कर्मणां भेदद्वयमेवाङ्गीकृतवान्, परन्तु वेदान्तादिषु तेषां भेदत्रयमाम्नातम्। एतदवधानात् सूत्रार्थः सुस्पष्टः स्यात्। तथा हि—सञ्चित-क्रियमाण-प्रारब्धभेदेन कर्मणां त्रयो भेदाः। अनन्तजन्मसु विहितः फलोत्पत्तिविरहितः केवलं संस्काररूपेण

जीवकर्माशये विद्यमानः कर्मकलापः सञ्चितनाम्ना व्यपदिश्यते। विद्यमानशरीरेण नवसभीहया समनुष्ठीयमानो नूतनसंस्कारोत्पादकः कर्मराशिः क्रियमाणपदेनाऽऽख्यायते। कर्माशयसंगृहीतानन्तकर्मराशिभ्यः समाकृष्टो यो हि प्रवलः कर्मसमूहो विद्यमानजन्मफलोत्पत्तिजनकः, स प्रारव्धशव्देनाख्यायते। प्रारव्धकर्मणामिहैव जन्मनि फलावाप्तिः, सञ्चित-क्रियमाणानां च जन्मान्तरेषु इति साधारणो नियमः। किन्तु प्रवलक्रियमाणकर्माणि प्रारव्धतामुपेत्य इहैव जन्मनि फलमाविर्भावयन्तीति सूत्रेऽत्रोक्तमवधेयम्। अतः शास्त्रोक्तां योगभूमिमनुसृत्य इहैव जन्मनि भोगोत्पादको दृष्टजन्मवेदनीयः, जन्मान्तरभोगजनकश्च कर्मकलापोऽदृष्टजन्मवेदनीय इति कर्मणां भेदद्वयं सूत्रकृन्महर्षिमते समाम्नातम्।

अन्यदर्शनानि कर्मत्रैविध्यमङ्गीकुर्वते, तत्कथमिदं योगदर्शनं कर्मणां द्वैविध्यमेव सम्मनुते इति शङ्काया इदमेव समाधानं यद् यौगिकः पुरुषार्थः सर्वत्रैव विषये नैजमलौकिकत्वमाविष्करोति। विचाररूपज्ञानेन मोक्षलाभ इति दर्शनान्तरमतम्। किन्तु योगदर्शनप्रोक्ता मुक्तिप्राप्तिपद्धतिः सर्वविलक्षणा। अलौकिकैकतत्त्वाभ्यासेन निर्वाणप्रत्यूहप्रणाशपूर्वकं निर्विकल्पसमाधिद्वारा मुक्तिपदमासाद्यत इति योगदर्शनसिद्धान्तः। अन्यदर्शनानि केवलं लौकिकप्रत्यक्षमेव सर्वतोऽभ्यर्हितं समामनन्ति, किन्तु योगदर्शनमेतत् स्वकीयलोकोत्तरपुरुषार्थपद्धत्या अलौकिकप्रत्यक्षसाहाय्येन दैवानि जगन्त्यपि परिचाययति। अन्यदर्शनानि कर्मणि पूर्णरूपेण स्वीयप्रभावविद्योतनशीलां पद्धतिं न परिदर्शयन्ति। परं योगदर्शनविज्ञानमिदं संयमशक्तिप्रभाव-परिज्ञानपूर्वकं वहुविधसिद्धीनामधिकारमर्पयद् योगिभ्यो निजामलौकिकीं शक्तिं प्रयच्छति, यया ते स्वीयेन संयमवलेन दृष्टमदृष्टरूपेण अदृष्टं च दृष्टरूपेण परिणमयितुं प्रभवन्ति। एतद्धि दर्शनस्यैतस्य वैचित्र्यमलौकिकत्वं च। अत एवैतद् दृष्टादृष्टजन्मवेदनीयत्वेन कर्मणो द्वैविध्यमेव अङ्गीकुरुते ॥ १२ ॥

तत्परिणतिमाख्याति—

**सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥**

क्लेशानां कर्माशयमूले विद्यमानत्वात् तद्विपाकरूपा जात्यायुर्भोगा उद्भवन्ति। कर्मसंस्कारराशिरेव कर्माशय इति प्रागुक्तम्। कर्माशयस्थ-कर्मरूपबीजेन भोगस्वरूप-द्रुमोत्पत्तिः विपाकनाम्ना प्रोच्यते। यथा सतुप-धान्यवपनेन अङ्कुरोत्पत्तिस्तथैव साधनैः पञ्चानां क्लेशानां यावत् समूलं प्रणाशो न क्रियते, तावत्ते विपाकरूपं कर्मफलं जनयन्त्येव।

जातिः, आयुः, भोगश्चेति त्रिविधो विपाकः। समानगुणप्रसवव्यक्ति-समष्टिरेव जातिः। गुणानां कर्मसहायकत्वात् गुणकर्मभेदादेव जातिभेदः। यथा च चतुर्विधभूतसमूहे उद्भिज्ज-स्वेदजा-ऽण्डज-जरायुजभेदाः, मानवेषु आर्या-ऽनार्यभेदाः, आर्येष्वपि ब्राह्मणादिभेदाः सन्ति, तथैव दैवे जगति देवर्षिपितृजातयः, देवेषु चापि गन्धर्व-किन्नर-विद्याधरप्रभृतयो जाति-भेदा विलसन्ति। स्थूलशरीरसाहाय्येनैव जीवानां कर्मभोगः। एकेन स्थूल-शरीरेण जीवसम्बन्ध एव आयुरुच्यते। तच्च जन्मतो मृत्युपर्यन्तमास्ते। शरीरविषयेन्द्रियतन्मात्रासाहाय्येन अन्तःकरणे सुखदुःखभानं भोगः।

आयुः कथमुत्पद्यत इति नूनमत्र विवेचनीयम्। मानवेतरजीवानामायुः समष्टिप्रकृत्यधीनमित्यलं तद्विवेचनेन। परन्तु मनुष्यायुर्निश्चयस्य अयं क्रमो यत् स्थूलशरीरपरित्यागकाले शरीरान्तरधारणादर्वाक् कर्माशयस्थ-पुरातनसञ्चितसंस्कारराशिषु अङ्कुरोन्मुखसंस्काराः स्वीयफलोत्पत्तिपर्यन्तं जीवानामायुर्निर्धारयन्ति। यथा सप्तधातुमध्ये स्थापितं चुम्बकं केवलं लौहमेव समाकर्षति, तथैव स्थूलविग्रहमेकं परित्यज्य स्थूलविग्रहान्तर-ग्रहणकालेऽङ्कुरोन्मुखः प्रबलः संस्कारराशिः सञ्चितकर्मराशितः समा-कृष्यमाणः शरीरान्तरप्राप्तिहेतुतां व्रजति। तत्फलमेव जात्यायुर्भोगा इति। भोगसमयनिर्धारणमेवायुः। यथा गभीरजलाशयान्तःस्थितो जलसमूहो न प्रत्यक्षीभवति, केवलं जलाशयस्योपरि विद्यमान एव दृष्टिगोचरतामभ्यु-पैति, तथैव चिदाकाशाङ्कितोऽनन्तकर्मकलापो यथास्थानमेव संतिष्ठते, केवलं देहान्तरप्राप्तिकाले यावान् संस्कारराशिश्चिदाकाशसमाकृष्टो मानवचित्ताकाशमाश्रयति, तेनैव जात्यायुर्भोगसमुत्पत्तिः। तद्भोग-काल एव आयुर्व्यपदिश्यते।

मानवस्य मानसिकी शारीरिकी च प्रकृतिर्विषयश्चेति त्रिभ्यो योग-सम्बन्धः। विरक्तानां साधुसंन्यासिनामनुरक्तानां भूपतीनां च मानसिक-प्रकृतितारतम्येन विषयभोगेऽपि नूनं तारतम्यसम्भावना। एवमेव ताम-सिक-सात्त्विकयोः पुरुषयोः शारीरिक्यां प्रकृतौ महदन्तरेण भोगेऽपि सुमहदन्तरं प्रतीयते। विषयभेदेन भोगभेदः सम्भव एव। अतो भोगोत्पत्तौ पूर्वोक्तास्त्रयो विषया ध्रुवमेव अवस्थान्तरं जनयन्ति। एवं हि कर्माशय-स्वरूपकर्मबीजतः समुत्पद्यमानस्य विपाकवृक्षस्य जात्यायुर्भोगाश्चेति फलत्रय-मवगन्तव्यम्।

कर्माशयतः कर्मविपाकसमुत्पत्तिसम्बन्धे जिज्ञासूनामयं सन्देहो जागर्ति यत् कर्मेदं एकस्य अनेकस्य वा जन्मनः कारणम्? तथैव च अनेकानि कर्माणि एकस्य अनेकस्य वा जन्मनः कारणानि? इति। सन्देहोऽयं समाधीयते—एकं कर्म एकजन्मकारणं भवितुं नार्हति। यतो ह्यनादि-कालाद् अनादिसृष्टिद्वारा संख्यातीतकर्मसमूहेभ्यः कर्मणैकेन जन्मैकं परमेश्वरः प्रयच्छति चेत्तर्हि कर्मणां संग्रहे नियमव्याघातो दुर्निवारः। यत एकस्मिन्नेव दिवसे स्वल्पसमये वा मानवो देव-मनुष्य-पश्वादियोन्युप-योगिनं कर्मकलापं संगृह्णाति। तदेतत्क्रमानुसारेण जन्मनाऽपि भवि-तव्यम्। किन्तु नैतत्सम्भाव्यते। भगवतोऽभ्रान्तनियमेषु च भ्रान्ते-रुत्पत्तिः स्यात्। एकस्मिन् दिवसे मानवैः देव-पशु-मनुष्य-तिर्यग्योनियोग्य-कर्माणि संगृह्यन्ते, तर्हि तैः कुत्र कुत्र योनौ क्रमशो गन्तव्यमित्यसम्भव-मेतत्। कर्मणा चैकेन अनेकजन्माधिगमस्वीकारे प्राक्कृतानन्तकर्माणि विफ-लतां प्राप्नुयुः। एकेन कर्मणाऽनेकजन्मोत्पत्त्या पूर्वानुष्ठितानेकर्मणां फला-वाप्तिसमय एव नासादितः स्यात्। अनेककर्माणि चानेकजन्मकारणान्यपि नैव भवितुमर्हन्ति, यतश्चैककाले अनेकजन्मसम्भवोऽसम्भवः।

अतः सिद्धान्तोऽयं विचारकोटीमाटीकते यत् समनुष्ठितः समनुष्ठीय-मानश्च कर्मकलापः कर्माशयस्वरूपस्थाने चैकत्र सम्मिलितः क्रमशः प्राधान्याप्राधान्येन फलं प्रयच्छन् दृष्टादृष्टरूपेण जन्मनो जन्मान्तरस्य च हेतुतामुपढौकते। अर्थात् सञ्चितेषु अङ्कुरोन्मुखप्रधानकर्माणि,

क्रियमाणकर्माणि च महोग्राणि जात्यायुर्भोगरूपैकजन्मफलानि प्रयच्छन्तीति पूर्वोक्तसूत्रसिद्धान्तः।

एवं हि सञ्चिताप्रधानकर्मसु शरीरान्ते प्रधानीभूतकर्माणि पुनर्जन्मान्तर-सृष्टिकराणि जायन्ते। योगदर्शनमिदं ह्येतन्निश्चिनोति यद् योगशक्त्या साधकः स्वीयप्राचीनकर्मराशिभ्योऽनेकान् संस्कारान् समाकृष्य नूतनकर्म-कलापान् अवरुद्ध्य च जात्यायुर्भोगरूपानधिकारान् न्यूनाधिकान् विधातुमर्हति। मानवोऽपि नन्दीश्वरः स्वकीययाऽलौकिक्या तपश्चर्यया दैवीं जातिमासाद्य देवभोगानध्यगच्छत्। राजर्षिर्विश्वामित्रोऽपि लोकोत्तर-योगसाधनादितपसा स्वीयां मानसिकीं शारीरिकीं प्रकृतिं चावधूय जन्मन्येकत्रैव ब्रह्मर्षित्वं प्रपेदे। इयमेव एतस्य योगदर्शनविज्ञानस्य अलौ-किकता वेद्या॥ १३॥

तदुदर्कं निश्चिनोति—

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात्॥ १४॥**

ते जात्यायुर्भोगाः पुण्य-पापजनकत्वात् शुभाशुभफलोत्पादकाः समा-म्नाताः। पुण्य-पापभेदेन कर्मणो द्वैविध्यमास्ते। अतो जात्यायुर्भोगजनकः कर्मविपाकः सुख-दुःखदायको बोध्यः। पुण्यार्जिता जात्यायुर्भोगाः सुखो-दर्काः, पापार्जिताश्च दुःखोत्तरफलाः सन्ति।

एतत्संस्कारजन्य-भोगवैचित्र्यहेतुना सुख-दुःखदायकानां स्वर्ग-नरक-लोकानां क्लेशमयप्रेतलोक-शान्तिपूर्णपितृलोकादीनां सृष्टिः। इमे भोग-लोकाः कर्माशयक्रियाभिः सम्बन्धनिबन्धनाः। स्थूललोकेऽप्यत्र ज्ञानिनो-ऽज्ञानिनश्चेत्यादिभेदाः कर्माशयप्रभावोत्पन्ना वेदितव्याः। सुख-दुःख-स्वरूपो भ्रान्तोऽनुभव आकीटपतङ्गेभ्यो मानवपर्यन्तं दरीदृश्यते। परन्तु ज्ञानपरायणयोगिभिः किञ्चिदन्यदेवानुभूयते। तद्वर्णनमग्रे वक्ष्यते॥ १४॥

विवेकवतां सर्वं दुःखमयमिति निरूपयति—

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च**

**दुःखमेव सर्वं विवेकिनः॥ १५॥**

विषयसुखैः साकं परिणाम-ताप-संस्कार-दुःखसत्त्वात् सत्त्वरजस्तमोगुणजनितानां सुखदुःखदायकवृत्तीनां चान्योन्यविरोधाद् विवेकवन्तः सर्वं दुःखमयमेव मन्यन्ते। रागद्वेषहेतुत्वात् किल सर्वैरपि जीवैः सुखदुःखमनुभूयते। रागद्वेषवृत्ती परस्परं विरोधिन्यौ। रागोत्पन्नं रागजं द्वेषप्रादुर्भूतं च द्वेषजं कर्म सुखदुःखदायके मन्येते।

सूक्ष्मेक्षिकया विचारे क्रियमाणे इदमेव निश्चीयते यद् इन्द्रियतृप्तिजनकं कर्म सुखाधायकं तद्भिन्नं च दुःखकरमिति। विषयभोगपरिश्रान्तानि इन्द्रियाणि स्वयं शान्तिमापद्यन्त इति देहात्मवादिजल्पनं सारशून्यमवधेयम्। त्रिगुणमयी प्रकृतिरस्थिरा निरन्तरमवस्थान्तरं धत्ते। विषयभोगेन इन्द्रियाणि तमोगुणहेतुना शान्तवत्प्रतीयन्ते। तदीयशान्तिहेतुस्तमोगुण एव। परन्तु स्वाभाविकनियमद्वारा गुणपरिवर्तने सम्पद्यमाने तमःस्थाने रजःस्फूर्तिरवश्यम्भाविनी। ततस्तानीन्द्रियाणि कार्यपटूनि भूत्वा पुनरपि स्वविधेयविधाने व्याप्रियन्ते। यथा किल घृताहुत्या क्षणाय शान्तिमापन्नोऽग्निः पुनरपि तीव्रतामुपैति, तथैव इन्द्रियाण्यपि विषयभोगेन न शान्तिमाप्नुवन्ति। प्रत्युत पुनःपुनरभ्यासदार्ढ्यात् प्राबल्यमासाद्य विषयभोगे नितरामेव प्रसज्जन्ते। अतो योगिभिः सुखमपि दुःखोदर्कमनुभूयते।

यथा शारीरिकामयविध्वंसी आयुर्वेदो रोगः, रोगहेतुः, आरोग्यम्, चिकित्सा चेति व्यूहचतुष्टयेन रोगनाशं विधत्ते, तथैव भवरोगहरं योगशास्त्रमपि हेय-हेयहेतु-हान-हानोपायाख्यैश्चतुर्व्यूहैः जीवानां भवरोगं शमयति। दुःखबहुलः संसारोऽयं हेयः, प्रकृतिपुरुषसंयोगो हेयहेतुः, तत्संयोगस्य आत्यन्तिकनिवृत्तिर्हानम्, विवेकेन पुरुषसाक्षात्कारश्च हानोपायः स्वीकृतः। सुखाभावरूपं दुःखं दुःखाभावरूपं च सुखमिति सुखदुःखस्वरूपं निर्णीतवन्तः सर्वजीवहितैषिणो महर्षयो दर्शनशास्त्रेषु। इन्द्रियेषु विषयसुखप्राप्त्यर्थं चञ्चलतां प्रपन्नेषु तच्चाञ्चल्यजनितम् अन्तःकरणवैकल्यमेव दुःखम्। स्वकीयलक्ष्यासादनेन विषयसुखप्राप्त्या इन्द्रियाणां चाञ्चल्यराहित्याद् अन्तःकरणस्य शान्तिरेव सुखम्। विषयाणां क्षणभङ्गुरत्वेन तद-

वस्थापरिवर्तनमवश्यम्भावि। अवलम्बननाशेन पूर्ववत् चाञ्चल्यमासादयत्सु इन्द्रियेषु दुःखोत्पत्तिरित्येव सुखदुःखाधिगमक्रमः। अतो योगिभिरन्योऽन्यं कारणीभूतमुभयमपि दुःखमेवानुभूयते।

ताप-परिणाम-संस्कारभेदेन तद्दुःखं त्रिविधमुदीर्यते।

स्वसमानं सुखिनमवलोक्य ईर्ष्यायाः, निकृष्टं च परिलक्ष्य घृणायाः समुत्पत्तिस्तापः। सुखभोगकाले सुखसाधनपूर्णताया अभावेन सुखविरोधि-पदार्थानामस्तितया तां प्रति द्वेषेण च सुखाभावाशङ्काभिः सुखसमृद्धि-चिन्ताभिश्च सुखप्रयासिना विषयिणा पुरुषेण यद् दुःखमासाद्यते, तदपि तापदुःखान्तर्गतमेव।

सुखभोगपरिणामे हुतघृतः पावक इव भोगतृष्णा न निवर्तते, प्रत्युत क्रमशः प्रवर्धते। तया ह्यशान्तिचाञ्चल्यप्रादुर्भूतमसुखमुत्पद्यते। तदपि परिणामदुःखेऽन्तर्भवति। यं च विषयमधिगन्तुम् इन्द्रियाण्यधावन्, तद्विषये परिपूर्णतामुपगते ( अर्थाद् रत्यन्ते ) यो हि वैकल्योदयः, सोऽपि परिणामदुःखशब्दवाच्यः।

सुखदुःखाधायक-वस्तुसमुदयेन भोगद्वारा रागद्वेषजनितसंस्कारोत्पत्त्या वासनोदये जाते सुखं प्रति रागो दुःखं प्रति द्वेषश्च समुत्पद्यते। एवं संस्कार-धाराया अविरामगत्या गतागतचक्रेऽत्र जीवान्तःकरणे यद्दुःखमाविर्भवति, तद्धि संस्कारदुःखमाख्यायते। विषयभोगकाले समतीते पुनस्तत्प्राप्ति-निराशस्य वृद्धावस्थोपभुक्त - पूर्वसुखस्मृत्या यद् दुःखमुत्पद्यते, तदपि संस्कारदुःखमेव।

प्रकृतेस्त्रैगुण्यात् परिवर्तनशीलत्वाच्च सत्त्वरजस्तमोगुणैः सुखदुःख-मोहजनिकाश्चित्तवृत्तयो विषयिणामन्तःकरणे सदैव जागर्तिमापद्यन्ते। सुख-दुःखमोहात्मिकासु वृत्तिषु परस्परं विरोधसम्बन्धात् एकस्याः समुदया-वसरेऽन्ययोर्द्वयोः पराभवेन विषयिणो जीवस्य चित्ते गुणवृत्तिरोधजन्य-मसुखं सदैव सन्तिष्ठते। त्रिविधदुःखपरिणामो गुणवृत्तिनिरोधजन्यं दुःखं च प्रत्येकेनापि सुखेन सह संलग्नमास्ते। एवं विचार्य प्रज्ञावन्तो योगिनो

विषयसम्बद्धं सुखमसुखं च सुवर्ण-लौहशृङ्खलावन्मन्यमानाः परिणाम-बन्धनकरं दुखदमेव मन्यन्ते। वैषयिकसुखेषु दुःखावबोधो विवेकिभिरेव अनुभूयते। विषयविषसेवापरायणैरविवेकिभिस्तु किमपि दुःखं नानुभूय विषयविमुग्धैरेव भूयते। अत एव सूत्रेऽत्र 'विवेकि'शब्दप्रयोगः।

ऊर्णातन्तुः देहान्यभागपतितः सन् दुःखदायको न जायते। किन्तु स एव नेत्रनिपतितः सुमहान्तं क्लेशमुत्पादयन् मानवमन्धीकुरुते। तथैव विषयसुखस्य अवश्यम्भाविपरिणामदुःखवत्त्वेन यद्यपि अविवेकिनो मानसे किञ्चिदपि दुःखं नोत्पद्यते, किन्तु विवेकिपुरुषैस्तेन दुःखमेवानुभूयते। मिथ्याज्ञानरूपिणी अविद्या क्लेशकर्म-तत्फलस्वरूपहेतुरिति निर्णीतपूर्वम्। सूत्रेणैतेन महर्षिणा सूत्रकृता निर्णीतमिदं यत् सुखदुःखफलोत्पत्तिमूलेऽविद्याया विद्यमानत्वात् तदुभयमपि दुःखाकरमेवेति त्याज्यमेव योगयुक्तज्ञानिभिरिति ॥ १५ ॥

चतुर्षु हेयस्वरूपं निरूपयति—

**हेयं दुःखमनागतम् ॥ १६ ॥**

अनागतं दुःखं हेयमेव। भुक्ते भुज्यमाने च दुःखे न किमपि विचारणीयम्, यतो द्विविधमेतत् जीवानुभवगोचरम्। भविष्यत्कालजन्यम् अनारब्धभोगदुःखमेवात्र विविच्यते। अप्राप्तदुःखं हेयमवगत्य तत्त्यागे योगपरायणैः पुरुषार्थो वितन्यते। अप्राप्तदुःखं त्याज्यमनुभूय साधकैः साधनमाचरणीयमिति महर्षिसूत्रकृतस्तात्पर्यम्। विवेकोदयेन समुत्पत्स्यमानानाम् अध्यात्माधिदैवाधिभूतदुःखानां बीजनाशे नष्टबन्धनो जीवः स्वरूपं प्रतिपद्यते। अतोऽनागतदुःखनिवृत्तये योगिभिः पुरुषार्थोऽनुष्ठेयः।

स्थूलेन सूक्ष्मेण च शरीरेण समुत्पन्नं शारीरिकं मानसिकं च दुःखमाध्यात्मिकमुच्यते। दैवप्रेरणया वज्रपातादिना समुद्गतमाधिदैविकमाख्यायते। प्राणिनो द्वारीकृत्य आविर्भूतमाधिभौतिकमाम्नायते। सर्वेषां कर्मजन्यत्वेऽपि जीवस्वपिण्डोत्पन्नमाध्यात्मिकम्, दैवोत्पादितमाधिदैविकम्, अन्यजीवपिण्डप्रभवं चाधिभौतिकं प्रणिगद्यते।

यद्यपि देवा एव निखिलकर्मप्रेरकाः, किन्तु निमित्तभेदात् कर्मभेदः। त्रिविधदुःखानामेषां पृथक् पृथक् स्वरूपं पूर्वसूत्रैः समुपवर्णितमेव। सुतरां तत्त्वज्ञैः विचारपूर्वकं दुःखस्वरूपं तदवस्थां च निर्णयद्भिः सर्वविधमेव दुःखं हेयमवधार्य तत्परित्यागे यत्नोऽनुष्ठीयते ॥ १६ ॥

हेयहेतुं निर्णयति—

**द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

द्रष्टृदृश्ययोरेकत्वसम्बन्ध एव त्रिविधदुःखमय-संसारहेतुः। द्रष्टा पुमान् दृश्येन बुद्धितत्त्वस्वरूपान्तःकरणेन सह अविद्यया सम्बद्धः स्वरूपमन्तःकरणाभिन्नम् अनुभवति, तत्प्रतिपत्तिरेव द्रष्टृदृश्ययोरेकत्वसम्बन्धः। शुद्धबुद्धमुक्तस्वरूपश्चेतनः अनाद्यविद्यया नैजं स्वरूपमन्तःकरणाभिन्नं मन्यते। तदानीं जडरूपायास्त्रिगुणमय्याः प्रकृतेः स्वाभाविकैर्गुणैरन्तःकरणेऽपि परिवर्तनं जायते। अर्थात् विषयाविष्टमन्तःकरणं विषयवत् प्रतीयमानं तज्जन्यसुखःदुखक्लेशाननुभवति। चैतन्यस्वरूपः पुरुषोऽपि निजस्वरूपमन्तःकरणाभिन्नं स्वीकुरुते। यथा संसारेऽत्र अनेकबालकेषु रोगग्रहग्रस्तेषु सत्स्वपि नैजमेव शिशुं पीडया परिपीड्यमानं निभाल्य स्नेहमयी तज्जननी स्वयं क्लिश्यति, तथैव नित्यशुद्धबुद्धमुक्तस्वरूपः पुरुषोऽपि नैजं स्वरूपं जडमयमन्तःकरणम् अविद्यया मन्यमानः स्वीयान्तःकरणानुभूतं क्लेशराशिमपि स्वयमनुभवति। हेयहेतु-विचारप्रवृत्तस्तत्त्वज्ञानी अज्ञानजनन्या अविद्यायाः प्रभावेण चिज्जडग्रन्थिरूप-द्रष्टृ-दृश्यमिथ्यासम्बन्धो जातः, स एव दुःखमूलमित्यवबुद्ध्यते।

द्रष्टा किल शुद्धबुद्धमुक्तस्वभावो दुःखातीतश्च, दृश्यरूपा प्रकृतिः परिणामिनी दुःखप्रसविनी च। उभयोरज्ञानोत्पन्नो मिथ्यासम्बन्ध एव दुःखनिदानम्। अत एतन्मिथ्यासम्बन्धनिराकृतौ तत्त्वज्ञैर्योगानुशासनरतैर्भूयते। सूत्रकारमहर्षितात्पर्यमेतद् यत् द्रष्टुः पुरुषस्य दृश्यरूपान्तःकरणेन यो हि मिथ्याभूतः एकत्वसम्बन्धः, स एव सर्वविधक्लेशहेतुः। अतो मुमुक्षुभिर्द्रष्टृदृश्यैकत्वसम्बन्धः परिहर्तव्य इति ॥ १७ ॥

इदानीं हानस्वरूपपरिज्ञानाय दृश्यरूपं विविनक्ति—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥**

प्रकाशः सत्त्वस्य स्वभावः, रजसः क्रिया, तमसश्च स्थितिरालस्यमिति यावत्। इमे त्रयस्त्रिगुणात्मिकायाः प्रकृतेः स्वभावसिद्धगुणाः परस्परं न भिद्यन्ते। यत्र यस्य प्राधान्यं तत्र तस्य गुणस्यैव कार्यं मन्यते। अत एव सत्त्वरजस्तमोगुणमयं दृश्यं प्रकाश-क्रिया-स्थितिशीलमुदीरितम्।

भूतपदेन पृथिव्यादिपञ्च, पञ्चतन्मात्राश्चेति दश गृह्यन्ते। इन्द्रियशब्देन च पञ्च कर्मेन्द्रियाणि, पञ्च ज्ञानेन्द्रियाणि, अन्तःकरणावच्छिन्नानि अहङ्कृति-बुद्धि-मनांसि चेति त्रयोदश गृह्यन्ते। सर्वाणीमानि मिलित्वा त्रयोविंशतितत्त्वानि दृश्यपदेनाऽऽख्यायन्ते। तदेतद् दृश्यं त्रिगुणवैषम्यजनितं बोध्यम्। त्रिगुणसाम्यदशा प्रकृतिरभिधीयते। प्रकृतिविकाररूपदृश्येन साकमौपचारिकसम्बन्धेन पुरुषो दृश्यभोक्ता मन्यते। एतद्दृश्यस्वरूपपरिज्ञानात् पुरुषोऽपवर्गं लभते।

दृश्यं किल भोगापवर्गार्थम् इति सूत्रे निर्दिष्टम्। भोगोऽपवर्गश्च अर्थः प्रयोजनं यस्य तद् दृश्यम्। पुरुषस्य कृते भोगश्च अपवर्गश्चेति उभावपि हेतुभूतौ समाम्नातौ। स्वीयत्रिगुणवैषम्यहेतुना प्रकृतिर्हि परिणामिनी भूत्वा चतुर्विंशतितत्त्वविभक्ता अविद्यानाम धत्ते। प्रकृतेर्वैषम्यावस्थेयं बन्धनहेतुः। यदा च सा स्वीयां परिणामदशां परित्यजन्ती पूर्वोक्तांस्त्रयोविंशतिविकारान् आत्मसात्कृत्वा चतुर्विंशतिरूपां साम्यावस्थामासादयन्ती शुद्धसत्त्वमयी भवति, तदाऽसौ 'विद्या'शब्दसमाख्याता जीवस्य मुक्तिहेतुतां प्रपद्यते। अतो दृश्यं हि भोगापवर्गार्थमिति सूत्रे व्याख्यातम्।

संसारः किल त्रिगुणमय्याः प्रकृतेर्विस्तारस्वरूपः। जिह्वा-नासिका-कर्ण-नेत्र-त्वग्रूपाणां पञ्चेन्द्रियाणां रस-गन्ध-शब्द-रूप-स्पर्शस्वरूपाणां पञ्चतन्मात्राणां च साहाय्येन त्रिगुणमयमन्तःकरणं बाह्यविषयान् गृह्णन्

गुणानां प्राधान्यात् सर्गप्रक्रियां वितनुते। अतः सर्गसङ्घातोऽयं त्रिगुणमय्याः प्रकृतेर्विस्ताररूप एव। निष्क्रियोऽपि पुरुषः अविद्ययैव नैजं स्वरूपमन्तःकरणाभिन्नं मन्यत इति प्रागेव प्रपञ्चितम्। यथा सैनिकसमनुष्ठितस्य विजय-पराजयरूपकार्यकलापस्य फलभोक्ता राजा मन्यते, तथैव प्रकृतिकृतबन्धन-मोक्षकर्मफलभोक्ता पुरुषो ज्ञायते। द्रष्टा पुरुषः, दृश्या च प्रकृतिः। अविद्यया यावदयं द्रष्टृ-दृश्यसम्बन्धस्तावदेव संसारो भोगश्च। एतत्सम्बन्धविच्छेदेन पुरुषो हि प्रकृतिपाशविमुक्तः स्वरूपं प्रतिपद्यते॥ १८॥

दृश्यं लक्षयित्वा तदवस्थाचतुष्टयं निर्दिशति—

**विशेषाऽविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि॥ १९॥**

विशेषः, अविशेषः, लिङ्गम्, अलिङ्गं चेति गुणानामवस्थाचतुष्टयमुच्यते। दृश्यस्वरूपायाः प्रकृतेर्विशिष्टस्वरूपनिर्णयार्थं सूत्रेऽत्र तद्दशाचतुष्टयं निरूपितम्।

सांख्यदर्शनप्रणेत्रा महर्षिणा कपिलेन त्रिगुणमयी प्रकृतिश्चतुर्विंशतितत्त्वैर्विभक्ता। तथा हि—आकाशः, वायुः, अग्निः, जलम्, पृथ्वी चेति पञ्चभूतानि। शब्दः, स्पर्शः, रूपम्, रसः, गन्धश्चेति पञ्च तन्मात्राः। कर्णः, त्वक्, नेत्रम्, जिह्वा, नासिका चेति पञ्च ज्ञानेन्द्रियाणि। वाक् पाणिः, पादः, उपस्थः, गुदा चेति पञ्च कर्मेन्द्रियाणि। एतत्सर्वाधारस्वरूपस्य अन्तःकरणस्य मनः, बुद्धिः, अहङ्कारश्चेति त्रयो भेदाः। अव्यक्ता प्रकृतिश्चेति चतुर्विंशतितत्त्वानि।

चतुर्विंशतितत्त्वानाम् एतेषां स्थूल-सूक्ष्म-कारणभेदेन दशात्रयम्, अव्यक्ता प्रकृतिश्चेति मिलित्वा गुणानां चत्वारो भेदाः समाम्नाताः। तथा हि—१. भूतानि पञ्च, कर्मेन्द्रियाणि पञ्च, ज्ञानेन्द्रियाणि पञ्च, मनश्चेति विशेषावस्था। २. पञ्चतन्मात्रा अहङ्कारश्चेति अविशेषावस्था। ३. ज्ञानाधारस्वरूपं महत्तत्त्वमेव लिङ्गावस्था। ४. साम्यावस्थायुक्तस्य प्रकृत्यपरनामकस्य प्रधानस्य दशैव अलिङ्गावस्था बोध्या। एतदवस्थाचतुष्टयपरिज्ञानं योगिभिरवश्यमेव सम्पादनीयम्।

चतस्रो दशाश्चेमा हेयान्तर्गताः। अवस्थाचतुष्टयसंवलितस्य दृश्यस्य परिबोधेन द्रष्टा पुरुषः स्वरूपे सन्तिष्ठते। बन्धनकारिस्वरूपपरिज्ञानादेव पुरुषो दृश्यप्रपञ्चतो विमुच्यते ॥ १९ ॥

हेयरूपं दृश्यमुपवर्ण्य द्रष्टृस्वरूपं व्याचष्टे—

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

द्रष्टा पुरुषश्चेतनमात्रः शुद्धोऽपि बुद्धिवृत्त्युपरक्तो दृश्यवत् प्रतीयते। ज्ञानात्मिकया बुद्ध्यैव जीवः सदसत् कर्म निर्णयति। जीवाधारस्थलस्य अन्तःकरणस्य प्रधानवृत्तिर्बुद्धिरेव। बुद्धिर्हि पुरुषनैकट्यसम्बन्धवती। पुरुषः स्वीयधिषणयैव सदसद् विचारयतीति हेतोस्तद्विचारितस्य सदसद्-वस्तुनो विवेकी पुरुष एवेति निर्णीतम्। बहिर्दृष्टिपरायणत्वात् चाञ्चल्य-मापन्नायां बुद्धौ न सदसद्विचारप्रादुर्भावः। स्थैर्यमुपगतायां तस्यां पुरुष-साहाय्येन सद्विचारयोग्यता समुदेति। यथा यथा पुरुषसम्बन्धो बुद्धौ प्रवर्धते, तथा तथा ज्ञानशक्तिरपि बुद्धेः समेधते। अतो बुद्धेः पुरुषस्य च स्वातन्त्र्यं सिद्ध्यति। द्रष्टा पुरुषः शुद्धः साक्षी चिन्मयश्च। प्रकृति-सङ्गदोषप्रभावादेव तत्र दोषो भासते।

पुरुषस्य विशुद्धचैतन्यस्वरूपनिर्णयार्थं 'मात्र'शब्दप्रयोगः। चैतन्य-धर्मवान् पुरुषो नास्ति, स च चैतन्यस्वरूप एव। अतो धर्मधर्मिभाव-निरासार्थं सूत्रेऽत्र मात्रशब्दः प्रयुक्तः।

परिणामादिधर्मरहितत्वमेव शुद्धत्वम्। प्रत्ययाख्यया बुद्धिवृत्त्याऽनु-सृतश्चैतन्यरूपो धर्मधर्मिभावविरहितः उदासीनोऽपि पुरुषो द्रष्टा प्रतीयते। अयमेव सूत्रगत-'प्रत्ययानुपश्य' शब्दार्थः। बुद्धिप्रतिबिम्बितस्य पुरुषस्य द्रष्टृरूपेण आत्मनः प्रतिभानमेव बन्धनम् , विवेकद्वारा चैतन्यमयोदासीन-निजस्वरूपावगतिर्मुक्तिः। यथा निर्मलः शुद्धोऽपि स्फटिकमणी रञ्जित-वस्तुसाहचर्याद् रञ्जितः प्रतीयते, तथैव शुद्धबुद्धमुक्तस्वभावः परिणामादि-रहितः पुरुषोऽपि प्रकृतिजन्यदृश्यसम्पर्कतो द्रष्टृरूपं धत्ते। द्रष्टृदृश्ययोः यथार्थरूपपरिज्ञानं मोक्षः ॥ २० ॥

द्रष्टृदृश्यस्वरूपं निरूप्य तयोः परस्परापेक्षित्वसम्बन्धो निरूप्यते—

**तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥**

दृश्यस्य आत्मा तदर्थ एव = तस्य द्रष्टुः पुरुषस्य भोगापवर्गार्थ एव वेद्यः। सृष्टिक्रियेयं दृश्यस्वरूपप्रकृतिजन्या, पुरुषो निष्क्रिय एव। परन्तु द्रष्टृ-दृश्ययोरेकत्र सम्बन्धसत्त्वात् दृश्यकार्यं द्रष्टा स्वकीयमवधारयति इति पूर्वमेव सुनिर्णीतम्। सूत्रेऽत्र इदं निर्णीयते यत् प्रकृतिविधीयमानं विधेयजातं सर्वमपि पुरुषस्य भोगापवर्गार्थमेव। पुत्रे जाते मातुस्तनयोर्दुग्धसमुत्पत्तिः स्वाभाविकी। दुग्धमेतत् पुत्रोपभोगार्थम्। पुरुषसद्भावात् प्रकृतिसद्भावः, पुरुषास्तिताभावे प्रकृतेरस्तिता कदापि न सम्भवा। यथा निष्क्रियचुम्बक-सान्निध्येन अयसि क्रियोत्पत्तिस्तथैव निष्क्रियपुरुषसामीप्यात् दृश्यप्रादु-र्भूततन्मात्रेन्द्रियादिविकारः पुरुषभोगापवर्गार्थ एव, न दृश्यार्थ इति। एतदेव सूत्रगतस्य 'एव'शब्दस्य तात्पर्यम्।

प्रकृतिविकृतिमवेक्षमाणः पुरुषस्ततो विरक्तो यदा स्वरूपे तिष्ठति, न तदानीं तदर्थं प्रकृतेरस्तित्वप्रयोजनम्। स्वरूपस्थितस्य पुरुषस्य कृते तत्-प्रकृतिर्लयत्वमुपैति। प्रकृतेरस्तिता पुरुषबन्धनदशासमपेक्षिता। मुक्तदशायां तदस्तिता निष्प्रयोजना। पराधीना जडा प्रकृतिश्चैतन्यमयस्वाधीनपुरुष-सत्तां निर्बिभर्ति। पुरुषसत्तयैव प्रकृतिसत्तेति निर्गलितोऽर्थः। अतो दृश्य-सद्भावः पुरुषभोगापवर्गार्थ एवेति सिद्धम् ॥ २१ ॥

मुक्तामुक्तपुरुषस्य कृते दृश्यस्थितिं व्याचष्टे—

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

मुक्तपुरुषं प्रति नष्टमपि प्रधानं नैव प्रणश्यति, यतस्तदन्यत्र प्रतीयते। पुरुषहेतव एव दृश्यप्रयोजनमिति पूर्वसूत्रे निश्चितम्। किं तर्हि दृश्यस्य परिणतिराहित्याद् जागतिकाः सर्वेऽपि द्रष्टारो विमुच्यन्त इति ? समाधत्ते—ज्ञानोदयेन अविद्याजनिते भ्रमे विनष्टे दृश्यपदार्थाः प्रणश्यन्त्येवेति निश्चि-तम्, परमियं स्थितिरेकस्य मुक्तपुरुषस्य कृत एव वेद्या। परिपूर्णज्ञानरूपाया ऋतम्भरायाः प्रज्ञायाः समुदयो दृश्यस्वरूपप्रकृतिनाशश्च एकस्मिन्नेव

जीवपिण्डे जायते। असंख्यजीवपिण्डेपु प्रकृतिपुरुषयोरनाद्यनन्तसम्बन्धस्तिष्ठत्येव। अतो मुक्तिमापन्नस्य द्रष्टुर्दृश्यं विनश्यति, परन्तु द्रष्टृदृश्यसम्बन्धावच्छिन्ना अनन्तजीवा अनादितोऽनन्तकालपर्यन्तं तिष्ठन्त्येव। जीवसर्गप्रवाहोऽनादिरनन्तश्च। मुक्तपुरुषप्रकृतिरेव प्रणाशमुपगच्छति, अनन्तजीवप्रकृतिस्तिष्ठत्येव। एकत्र जीवपिण्डे प्राप्ततत्त्वज्ञानस्य पुरुषस्य दृश्यबन्धनविमुक्तत्वेऽपि संख्यातीत-जीवपिण्डप्रकृतिवैभवो यथापूर्वं तिष्ठत्येवेति ॥ २२ ॥

अनन्तजीवेषु अनादिसंयोगं व्याकरोति--

**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥**

दृश्यद्रष्टृस्वभावयोरविद्याजनितो भोग्यभोक्तृरूपसम्बन्धः संयोगः। अविद्याया अनादित्वात् तन्मूलकः प्रकृतिपुरुषसंयोगोऽयमनादिः, वियोगपर्यन्तं स्थितिशीलश्च। द्रष्टा पुरुषः प्रकृतेस्त्रिगुणमयं स्वरूपं परिचीय यदा तत उपरमति, तदैव भोग्यभोक्तृभावनाशेन स्वीये रूपे सन्तिष्ठते। सूत्रेऽस्मिन् प्रकृतिपुरुषस्वरूपोपलब्धिः संयोगहेतुरिति निर्दिष्टम्। दृश्यद्रष्ट्रोरुभयोरेव सम्बन्धनिबन्धनत्वात् स्वरूपशब्द उभयवाचकः। पूर्वोक्तसूत्रेण पुरुषविमुक्तिसिद्धान्ते सुनिश्चितेऽपि प्रकृतेरनाद्यनन्तत्वमपि प्रमाणितमेव। तस्या अनाद्यनन्तत्वे सिद्धे तदुत्पन्नजीवसृष्टिप्रवाहोऽप्यनादिरनन्तश्च सिद्ध्यति चेत् हेयहेतुकसृष्टिप्रवाहसमुत्पत्तिकारणं किमिति शङ्कानिराकृतये महर्षिणैतत्सूत्रमाविष्कृतम्। परमात्मनः परमपुरुषस्य मूलप्रकृतिर्महामाया स्वीयत्रिगुणजनितस्वभावतः परिणामिनी सती अनाद्यनन्तां सृष्टिधारां प्रवाहयति, यत्रेश्वरांशस्वरूपा अनन्ता जीवा अविद्याजालपतिताः सदैवोत्पद्यन्ते। चिज्जडग्रन्थिरूप-जीवभावोत्पत्तिकरः अविद्याजनितः संयोगोऽयं यथा मूलप्रकृतेः स्वभावः, तथैव विद्यारूपेण द्रष्टृदृश्यसम्बन्धं परिधूय जीवमुक्तिदायकोऽपि तत्स्वभावः परिज्ञातव्यः। त्रिगुणमयीयं मूलप्रकृतिः रजस्तमोभ्यां जीवधारां समुत्पाद्य सत्त्वगुणेन च स्वकीयं परमपुरुषस्य च स्वरूपं निदर्शयन्ती जीवान् विमोचयति। स्वशक्तिरूपदृश्यस्य

स्वामिशक्तिस्वरूपस्य च द्रष्टुः स्वरूपोपलब्धिकरं किल अघटनघटना-पटीयस्या मूलप्रकृतेः संयोगक्रियाप्रयोजनं सर्वैरपि दार्शनिकैरभ्युपगन्तव्य-मेव। इदमेवालौकिकं सृष्टितत्त्वरहस्यम्॥ २३॥

हानस्वरूपनिदर्शनाय संयोगमूलकारणं व्याकरोति—

**तस्य हेतुरविद्या॥ २४॥**

तस्य = संयोगस्य, हेतुरविद्यैव विद्यते। अविद्यास्वरूपं पूर्वमेव उप-वर्णितम्। विपरीतज्ञानवासनासंभृतबुद्धिः कदाप्यात्मज्ञानमाविर्भावयितुं नार्हति। वासनायुक्तमन्तःकरणं निर्विषयं मोक्षपदमर्पयितुं नैव शक्नोति। विपर्ययज्ञानस्वरूपाऽविद्यैव विवेकख्यातिहेतुरूपसंयोगस्य निदानमास्ते। सुतरामनाद्यनन्तसर्गप्रवाहोत्पत्तिकरः प्रकृतेः स्वभावः। द्रष्टृदृश्यसम्बन्ध-स्थापनपुरस्सरं पुरुषबन्धनदशाप्राप्तिमूलहेतुरविद्यैव। अविद्यानाशादेव द्रष्टृदृश्यसम्बन्धः प्रणश्यति, नान्यथेति॥ २४॥

इदानीमधो हानस्वरूपं निर्दिशति—

**तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्॥ २५॥**

तस्या अविद्याया अभावात् संयोगाभाव एव हानम्। एतदेव पुरुष-स्यापि कैवल्यं बोध्यम्। तस्या अविद्याया अभावात् अन्तःकरणेनात्मनः संयोगोऽपि प्रणश्यति। अन्तःकरणरूपदृश्याभिन्नमात्मानं मन्यमानस्य शुद्धबुद्धमुक्तस्यात्मनो भ्रमनिरासेन बन्धननिवृत्तौ कैवल्यमासाद्यते। ऋतम्भराप्रज्ञापरनामक-परिपूर्णज्ञानोदयेन मिथ्याज्ञानाख्याया अविद्यायाः प्रणाशात् द्रष्टृदृश्यसंयोगाभावः किल हानस्वरूपम्। एतदनन्तरं निर्वि-कल्पसमाधिजनित-कैवल्याधिगमः। अविद्यारूपमिथ्याज्ञानेनैव असत्यमपि सत्यवन्मत्वा अज्ञानजन्यचिज्जडग्रन्थिसमुत्पत्त्या द्रष्टृदृश्यसंयोगाज्जीवभावा-विर्भावः। योगमार्गसाफल्याधिगमेन ऋतम्भरायाः प्रज्ञायाः साहाय्येन चाविद्यानाशाद् द्रष्टृदृश्यसंयोगस्वरूपचिज्जडग्रन्थिः प्रणाशमेति। एतदव-स्थायाः शब्दद्वारेण विवृत्तिर्दुःशका। निरवयवस्य रूपरहितस्य वस्तुनो

विभागो न कर्तुं शक्यते। विवेकख्यातौ समुत्पन्नायामज्ञानजनितपूर्वोक्त-संयोगः स्वयमेव विनश्यति। एतदेव हानरूपम्, येन पुरुषः कैवल्यमधि-करोति ॥ २५ ॥

सम्प्रति हानोपाय उपवर्ण्यते—

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

मिथ्याज्ञानरहिता विवेकख्यातिरेव हानोपायः। मूलप्रकृतेरविद्या-रूपधारणेन चिज्जडग्रन्थिसमुत्पत्त्या द्रष्टृदृश्यसम्बन्धस्थापनमेव जीवबन्ध-नम्। तस्याश्च ज्ञानप्रसविन्या विद्यास्वरूपधारणात् चिज्जडग्रन्थिविनाश-हेतुना द्रष्टृदृश्यमिथ्यासम्बन्धहानमेव कैवल्यम्। रजस्तमसो न्यूनाधिक्येन जीवबुद्धौ ज्ञानशक्तितारतम्यं स्वाभाविकम्। सुतरां सत्त्वगुणाधिक्ये-नैव बुद्धिस्तीव्रतां धत्ते। रजस्तमोभ्यां च मालिन्यमुपढौकते। बुद्धौ परिवर्तनमवश्यम्भावि। रजसस्तमसश्च उपरता कर्तृत्व-भोक्तृत्वाभिमान-शून्या शुद्धसत्त्वस्वरूपं धारयन्ती निश्चलाऽन्तर्मुखी परिपूर्णविवेकवती विप्लव-रूपमिथ्याज्ञानविरहिता स्थिरप्रज्ञैव हानदशाप्राप्तेरुपायभूता समाम्नाता।

तात्पर्यमिदं यत् विवेकख्यात्यपरनामिकायाः स्थिरनिर्मलपरिपूर्णज्ञान-वत्या असम्भावितपरिवर्तनाया बुद्धेः समुदयेनैव मिथ्याज्ञानस्वरूपिण्या अविद्याया बीजप्रणाशः। एतादृशहानोपाय-दशाधिगमेन जीवो बन्धनाद् विमुच्यते ॥ २६ ॥

विवेकख्यातेर्दशासप्तकं विविच्यते—

**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥**

तस्य विवेकख्यातिनिष्ठस्य पुरुषस्य प्रज्ञा उत्तरोत्तरसमुन्नतिशीला सप्तधा सप्तभूमिविभक्ता वेद्या। पूर्वसूत्रोक्तां हानोपायरूपां विवेकख्याति-मधिगतवतो योगिनः स्वरूपप्रतिष्ठाहेतवे शनैः शनैर्यादृशी प्रज्ञा समुदेति, या च पुरुषकैवल्यप्रदत्वात् प्रान्तभूमिस्वरूपोत्तमपरिणामशालिनी समा-ख्याता, सा शास्त्रकारैः सप्तधा विभक्ता।

पुनरपि दशासप्तकस्य भेदद्वयमुररीकृतम्। तत्र प्रथमे वर्गे चतस्रो भूमयः, द्वितीये च तिस्रो भूमयो ज्ञेयाः।

'पूर्वस्मिन् समये हेयविषयकज्ञानस्य आवश्यकत्वमासीत्, तदिदानीं नास्ती'ति साधकावबोधः प्रथम दशा। 'प्राक् किल त्यक्तव्याः कामाद्यनेके हेयविषया आसन्, सम्प्रति ते नावशिष्यन्ते' इति परिज्ञानं द्वितीया दशा। पुरा हि 'हानविषया अनेके प्राप्तव्याः सन्ति स्म, परमधुना न किञ्चिदपि हातव्यं वस्तु अवशिष्यते' इति विवेकस्तृतीया दशा। सम्प्रज्ञातसमाधौ विवेकख्यातिरधिगता, एतर्हि भावनीयो विषयः कोऽपि न विद्यते' इति विचारश्चतुर्थी दशा। प्रथमवर्गीयदशाचतुष्टयस्यास्य नाम 'कार्यविमुक्ति'-रिति।

'पूर्वमनेकवासनायुक्तबुद्ध्या मम विविधदुःखेषु विनिपातः समभूत्, सम्प्रति तु सर्वाण्यपि दुःखानि क्षयमुपगतानि, मदीयमन्तःकरणं शाश्वतिक-शान्तिशीलमि'त्यनुभवः पञ्चमी दशा। 'मदन्तःकरणस्थाः सर्वे गुणदोषा दग्धबीजसमानतामुपगताः, नैव पुनस्तेऽङ्कुरितुं प्रभवः' इत्यनुभूतिः षष्ठी दशा। अन्तःकरणविलयेन आत्मस्वरूपाधिगत्या सर्वज्ञताप्राप्तिः सप्तमी दशा। सेयं कैवल्यान्नातिरिच्यते। पञ्चमादिसप्तमान्ता दशा द्वितीयवर्गा-न्तर्गता 'चित्तविमुक्त्य'परनामिका च। उत्तरोत्तरं समुन्नतः साधकः क्रमशः सप्तसु भूमिषु अग्रेसरन् अन्ते कैवल्यमासादयति ॥ २७॥

एवं सप्तधा विभक्ताया विवेकख्यातेः कथमुदय इति निर्दिश्यते—

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २८ ॥**

अष्टाङ्गयोगसाधनेन चित्तमालिन्यविनाशात् विवेकख्यातिपर्यन्तस्य ज्ञानस्याभिव्यक्तिर्जायते। सूत्रकृता महर्षिणा पूर्वसूत्रेण विवेकख्यातिदशां सुनिरूपयता सम्प्रति तदुत्पत्तेरुपायः समुपवर्ण्यते। ग्रन्थिबन्धनं यथा कर्म, तथैव ग्रन्थिविमोकोऽपि। जीवानां साधारणकर्मवद् अष्टाङ्गयोग-साधनमपि कर्मैव। यथा ग्रन्थिबन्धनेन पदार्थबन्धः, ग्रन्थिविमोकतश्च पदार्थमोक्षः, तथैव असाधारणेन कर्मणा जीवा बद्ध्यन्ते; अष्टाङ्गयोगसाधन-

रूपकर्मणा च बन्धनाद् विमुच्यन्ते। यथा यथा यमाद्यनुष्ठानेन साधकोऽग्रिमसाधनाधिकारितां प्रपद्यते, तथा तथा नैजमन्तःकरणमलं निराकुर्वन् ज्ञानदीप्तिदीप्तः स पूर्णज्ञानरूपाया विवेकख्यातेः परिपूर्णां दशामधिगच्छन् कैवल्यमाप्नोति। यथा मानवः क्रमशः सोपानाश्रयेण सौधपृष्ठभागमधिरोहति, तथैव योगसाधनसुकौशलपूर्णप्रक्रियाभिः अष्टाङ्गयोगसाहाय्येन निर्मलां विवेकख्यातिमधिगत्य अन्ते मोक्षपदं लभते ॥ २८ ॥

योगस्य अष्टौ अङ्गानि निर्वक्ति—

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥**

यमादीनि समाध्यन्तानि योगस्य अष्टौ अङ्गान्यवधेयानि। कैवल्यप्रदयोगसाधनस्य अष्टावपि विभागा अङ्गानि कथ्यन्ते। एकैकाङ्गसाधनेन साधकः क्रमशः समुन्नताङ्गसाधनाधिकारमधिगच्छति।

अष्टानामङ्गानां वहिरङ्गभूमिः, अन्तरङ्गभूमिश्चेति भेदेन भेदद्वयम्। यम - नियमाऽऽसन - प्राणायामाः वहिरङ्गभूमयः, प्रत्याहार - धारणाध्यान-समाधयश्च अन्तरङ्गभूमयो वेदितव्याः। वहिरङ्गसाधने अन्तःकरणनैर्मल्ये सति योगसाधने रुचिर्वर्धते। वहिरङ्गानुष्ठानं मुक्तेर्न साक्षात् कारणम्। अन्तरङ्गसाधनेन अन्तःकरणमैकाग्र्यं भजते। अत एतदेव मोक्षस्य साक्षाद्धेतुभूतम्। अष्टानामङ्गानां विस्तृतविवृत्तिरग्रिमसूत्रेषु विविच्यते ॥ २९ ॥

यमो निरूप्यते —

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ॥ ३० ॥**

कदापि केनाऽपि कारणेन द्वेषवुद्ध्या दुःखादानमहिंसा। आत्मवत् सर्वभूतेषु दयादृष्टिः अहिंसा व्यपदिश्यते। मनसा निश्चितस्य वचसा यथावत् प्रकाशनं सत्यम्। छल-कपट-भ्रमादिशून्यमनिर्थकं सर्वोपकारकमक्लेशजनकं वाक्यमेव सत्यमिति भगवान् वेदव्यासः। परकीयादत्त-

वस्तुग्रहणं स्तेयम्। अस्तेयं तदभावः। मनोदमनपूर्वकमुपस्थेन्द्रियवशीकारेण वीर्यरक्षणं ब्रह्मचर्यमुच्यते। स्मरण-कीर्तनाद्यष्टविधमैथुन-परित्यागोऽत्रैव अन्तर्भवति। सम्पत्तेः संग्रह-रक्षण-नाशतः हिंसादिदोषदर्शनेन तत्परित्यागः अपरिग्रहः। पञ्चधा विभक्तस्यास्य यमस्यानुष्ठानेन साधको योगस्य प्रथमाधिकारं लभते ॥ ३० ॥

प्रथमाङ्गभूतस्य यमस्य वैशिष्ट्यं निदर्शयति—

**एते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥ ३१ ॥**

जाति-देश-काल-समयविचारपरित्यागपूर्वकं समदर्शिताधिगमेन परमकल्याणप्राप्तिरेव महाव्रतम्। यथा जातिविचारेण गो-ब्राह्मणानां वधः, देशविचारतः काशीप्रभृतितीर्थेषु हिंसा, कालविवेकतः पर्वणि जीवहिंसनम्, समयविवेकेन च सन्ध्यादिसमये प्राणिवधश्चेत्यादिकं मानवैरनुचितं मन्यते, एतद् व्रतम्। परन्तु सर्वथा पक्षपातपरित्यागेन सार्वभौमहितदृष्ट्या जातिदेशकाल-समयविचारविरहितो दृढप्रतिज्ञः साधकोऽहिंसको महाव्रतधारी समाख्यायते। एवमेव सत्यास्तेयब्रह्मचर्यापरिग्रहादीनां जाति-देश-काल-समयविवेकपरित्यागपुरस्सरं साधनं महाव्रतमाम्नायते।

तात्पर्यमिदं यत् सांसारिकैर्जीवैः जातिदेशकाल-समयानुरोधेनैव शनैः शनैर्यमसाधनं क्रियते। तच्च तेषां हिताधायकमपि। तथापि नियमोऽयं गौणः। दृढव्रतत्वेन सर्वत्रैव सार्वभौमदृष्ट्या यमानुष्ठानेन यथार्थकल्याणाधिगमो जायते। नियमोऽयं सर्वाभ्यर्हितोऽनुष्ठेयश्च। स्वार्थपरत्वमेव जीवभावः, परार्थपरत्वमीश्वरभावः। सुतरां जीवो यदा तादात्म्यभावेन स्वीयमन्तःकरणं सर्वत्र नियुनक्ति, तदैवासौ महाव्रती भूत्वा भगवद्राज्ये प्रविश्य योगानुशासनस्वरूपमुक्तिभूमिमधिकरोति ॥ ३१ ॥

नियमं निर्दिशति—

**शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः ॥ ३२ ॥**

बाह्यमान्तरिकं चेति शौचं द्विविधम्। स्नान-मार्जनादिप्रक्रियाभिः शुद्धिसम्पादनं बाह्यशौचलक्षणम्। मैत्री-सरलताप्रभृतिभिश्च मनोमालिन्यापसारणमान्तरिकं शौचमभिधीयते। सर्वावस्थासु सुखित्वभावना सन्तोषः। उभयोरेव सुखदुःखयोः क्षणभङ्गुरत्वेन सर्वास्वपि दशासु ज्ञानवतः साधकस्य अविचलत्वमेव सन्तोषः। शीतोष्णताप्राबल्येन जायमानक्लेशस्य सहिष्णुता बुभुक्षा-पिपासादिप्रादुर्भूतवैक्लव्याभावश्च तपः। कृच्छ्रचान्द्रायणसान्तपनानशनादिव्रतानि तपसि एवान्तर्गतानि। तपसो विस्तृतं सूक्ष्मलक्षणं प्रागेवोदीरितम्। अत्रोक्तं तपः शरीरसम्बद्धमवगन्तव्यम्। मोक्षधर्मनिर्देशकानां शास्त्राणामध्ययनं मननं च स्वाध्याय उच्यते। जगत्कर्तरि परमेश्वरेऽविचला भक्तिः, स्वानुष्ठितसत्कर्मफलानां तच्चरणसरसीरुहे समर्पणं च ईश्वरप्रणिधानमवधेयम्।

ईश्वरप्रणिधाने सविस्तरं प्राग् विवृतेऽपि नात्र पुनरुक्तिराशङ्कनीया। अत्र वैध्या भक्त्यैव तत्सम्बन्धः। एवं शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानरूप-नियमानुष्ठानेन शुद्धचित्तः साधको योगसमुन्नताधिकारमधिगच्छति ॥ ३२ ॥

यमनियम-विरोधिनीनां वृत्तीनामुदयेन किमनुष्ठेयमित्युच्यते—

**वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥**

वितर्कबाधने अर्थात् योगविरुद्धहिंसादिवृत्त्या यमादियोगाङ्गानाम् उच्छेदशङ्कासमुदये सति प्रतिपक्षभावनम्, अर्थात् तत्तद्धिंसादिवृत्तिप्रतिपक्षभावना कर्तव्या।

यमनियमादिसाधनेनैव हिंसादिवृत्तयो विनश्यन्तीति न मन्तव्यम्। प्रतिकूलवृत्तिबाधनेनैव यमनियमानुष्ठाने साफल्यमधिगम्यते। प्राणिहिंसा, निजेन्द्रियसुखाप्तये असत्यभाषणम्, स्वीयसुखसाधनाय परकीयवस्तूनामपहरणम्, विषयवासनातृप्तये व्यभिचारः धर्माधर्मविचारराहित्येन दानादानम्, शौचविरोधिन्या अशुचितायाः समुदयः, सन्तोषविरोधिनः

असन्तापस्य प्रादुर्भावः, तपोनाशप्रवृत्तिः, स्वाध्याये अश्रद्धा, नास्तिक्य-भावनादयो भावा यदि साधकान्तःकरणेषु जागृता भवेयुः, तदानीं गुरूप-देशादिना साधकेन तत्तद्विरुद्धवृत्तीनां संस्मरणमनुष्ठातव्यम् , येनान्तः-करणेषुद्दीयमानाः पापकारिण्यः प्रतिकूलवृत्तयो निरुद्धाः स्युः।

प्रतिक्रियाभावनया हिंसादिनाशो वोभवीति। अर्थात् 'हिंसानुष्ठानेन ममापि जन्मान्तरे हिंसनं भविष्यती'ति विरुद्धभावनया साधको हिंसातो विनिवृत्तो जायते। एवं हि कर्मविपाकरूप-नरकादिदुःखभयेन विरुद्धवृत्तीनां निरोधः साधकेन गुरूपदेशतो नूनमनुष्ठेयः, येनासौ योगपथेऽग्रेसरः स्यात्॥ ३३॥

वितर्कस्वरूपक्रमस्तत्प्रतिपक्षभावना च विविच्यते—

**वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोह-पूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्ष-भावनम्॥ ३४॥**

वितर्काः = हिंसादयः, ते च कृताः कारिताः अनुमोदिताः, लोभ-क्रोध-मोहोत्पादकाः मृदुमध्याधिमात्रस्वरूपाः, दुःखमज्ञानमेव अनन्तफलं येषां तथाभूता भवन्तीति प्रतिपक्षभावना बोध्या। महर्षिणा सूत्रकारेण योगा-ङ्गेषु प्रथमप्रोक्तौ यम-नियमौ तत्साधनोपायांश्च वर्णयित्वा सूत्रेणैतेन तद्-विरोधिवृत्तिभेदाः तद्दशाश्च वर्ण्यन्ते।

कृता, कारिता, अनुमोदिता चेति त्रिविधाऽपि हिंसा लोभक्रोधमोह-जनिता भवति। मांसादिहेतवे समनुष्ठिता लोभजा, पूर्ववैरप्रतिशोध-बुद्ध्या समनुष्ठीयमाना क्रोधजा। 'एतदीयहननं मम धर्मः' इति विचिन्त्य विहिता मोहजा। त्रिप्रकाराया अप्येतस्या मृदु-मध्य-तीव्रभेदात् त्रैविध्य-मवधेयम्। एवंरूपतो हिंसायाः सप्तविंशतिभेदाः संवृत्ताः। प्रकृतिभेदतः प्राणिनां संख्यातीतभेदवद् गुणानां तारतम्यमनुसृत्य हिंसारूपपापस्य सप्तविंशतिभेदानामपि आनन्त्यमवसीयते। एवम् असत्यादिवृत्तीनामपि अनन्तभेदाः।

एतासां हिंसादियोगविरोधिवृत्तीनां दमनाय किमिव प्रतिपक्षभावना समनुष्ठातव्येति विविच्यते। कस्य चन वधावसरे तद्बलपराक्रमयोर्निन्दा, ततः क्लेशप्रदानम्, हत्या चेत्येवंक्रमेण निजानुष्ठित-पापकर्मफलान्यपि मानवैर्लभ्यन्ते। बलपराक्रमनिन्दनेन परजन्मनि वीर्यराहित्यम्, दुःख-प्रदानेन दुःखाधिगमः, हत्यया च मनुष्यस्य तस्य हननमपि भवत्येव। स्मर्यते चात्र—

"योऽयं हन्ति विना वैरं प्रकामं सहसा पुनः।
हन्तारं हन्ति तं प्राप्य मानवो जननान्तरे॥" इति।

कर्मणां गहनगतिं विचार्य स्वकृतपापस्य दुःखफलप्राप्तिर्दुर्निवारा। एवं शास्त्रोक्तपुण्यविचारेण प्राणिहिंसया पारलौकिकसुखाधिगमेऽपि मानवोऽल्पायुष्ट्वमधिगच्छति। हिंसादितामसिक-पापकर्मानुष्ठानेन घोराज्ञान-तमसाच्छन्नान्तःकरणा घोरामधोगतिं नरकयन्त्रणां च लभन्ते। एवं किल हिंसादियोगविरोधिवृत्तीनां निवारणाय तत्प्रतिकूलविवेक एव प्रतिपक्ष-भावनायाः स्वरूपम्। सुतरां वितर्काणां भेदानन्त्यात् तैरन्तकाले दुःख-प्राप्तिर्निश्चप्रचा। अतो योगप्रत्यूहकारिणीनां वृत्तीनां प्रतिपक्षभावनया विनाशो नितरामावश्यक इति॥ ३४॥

योगानुरूपाहिंसानुष्ठानेन सिद्धीनां प्राप्तिर्निरुच्यते—

## अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः॥ ३५॥

पूर्णरूपेण अहिंसायां प्रतिष्ठितायां साधकस्याभ्यर्णम् उपागताः प्राणिनोऽपि स्वीयं वैरभावं परित्यजन्ति। व्याघ्रादिहिंसकप्राणिनां स्वभाव एव जीवहिंसनम्। तत्कथं तैः स्वकीयः प्राकृतिकः स्वभावो हेय इति चेत्, श्रूयताम्—

व्याघ्रादीनां प्राणिहिंसनं स्वभावश्चेत् कथं तैः स्वपुत्रकलत्रादयो न हन्यन्ते? तेषु तमःप्रभावाधिक्यात् स्वल्पेनैव कारणेन तमोगुणस्योत्पत्ति-र्जायते। अयमेव हिंसाधिक्यहेतुः। कारणाभावे न कार्योत्पत्तिरिति न्यायेन

अहिंसापरायण-साधुसङ्गत्या हिंसकाः पशवोऽपि हिंसावृत्तिं परित्यजन्ति। हिंसकान् प्राणिनो दृष्ट्वैव तेषां व्याघ्रादीनां परहिंसानुष्ठाने प्रवृत्तिर्जागर्ति। साधूनामन्तःकरणे हिंसावृत्तेरभावात्, तत्सन्निधाने हिंसका व्याघ्रादयोऽपि हिंसावृत्तिं परित्यजन्ति।

विज्ञानमिदं सूक्ष्मदृष्ट्या विवेचनीयम्। तथा हि—हृदयाकाशं ब्रह्माण्डे पिण्डे च व्याप्नोति। अन्तःकरणं हि व्यापकं तत्त्वम्। एकस्य ब्रह्माण्डस्य अन्तःकरणसमष्टिः ब्रह्मणोऽन्तःकरणमवधेयम्। प्रत्येकस्य जीवस्य व्यष्टिस्वरूपमन्तःकरणं 'चित्ताकाश'नाम्ना व्यपदिश्यते। अन्तःकरणसमष्टिः किल 'चिदाकाशा'भिधानेन व्याख्यायते। समष्टि-व्यष्टिसम्बन्धेन उभावपि परस्परं सम्बद्धौ वर्तेते। अत एव प्रेमपरायणानां प्राणिनां प्रीतिः अन्योन्यान्तःकरणे प्रतिफलति, योगिनश्च परकीयान्तःकरणभावमवगच्छन्ति। देवैश्चापि मानवानां शारीरिकमानसिक-कर्मणामवगतिः सम्यक् क्रियते। योगिनामन्तःकरणेषु अहिंसावृत्तौ प्रतिष्ठितायां-अर्थात् हिंसानुकूले आघाते जातेऽपि नैवोदेति हिंसावृत्तिस्तदानीं—सन्निहितान्तःकरणेष्वपि स एव भावः प्रतिफलति। अतो हिंस्रपशूनामन्तःकरणमपि हिंसावृत्तिं परित्यजति। गुरुशक्तिर्लघुशक्तिं पराजयते। अतो लघुशक्तिविशिष्टस्य पशोरन्तःकरणं गुरुशक्तिविशिष्टयोगिनः अन्तःकरणप्रभावात् स्वतः शान्तिमापद्यते॥ ३५॥

अन्यच्च—

## सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम्॥ ३६॥

सत्यस्य प्रतिष्ठायां सम्पादितायां क्रियाया अभावेऽपि क्रियाफलाश्रयत्वं जायते। सूत्रेणैतेन पूर्णरूपेण सत्ये प्रतिष्ठिते सति किं फलमासाद्यते इति निरूपयति। असत्यवचनोच्चारणाभावाद् यदा योगी सत्यताऽभ्यासे सुदृढो जायते, तदानीं तेन वाक्सिद्धिरवाप्यते। तन्मुखाद् यत् किमपि निःसरति, तत्फलमवश्यम्भावि। तद्वाक्योच्चारणमात्रेणैव मूर्खः पण्डितत्वं दरिद्रश्च धनिकत्वं प्रपद्यते। किं बहुना, वन्ध्याऽपि पुत्रं सूते। अन्तःकरणविशुद्ध्या

स्वभावस्य सत्यमयत्वाच्च योगी यत्किमपि वक्ति, तत् सर्वमेव सत्यतामुपढौकते। तदन्तःकरणं भवितव्यमनुभवति। अतस्तेन यत् किमप्युच्यते, तद् भवत्येव ॥ ३६ ॥

तथैव च —

## अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ॥

चौर्याभावे सम्यक् प्रतिष्ठिते सर्वाणि रत्नानि स्वत एवोपतिष्ठन्ति। लोभं विजयमानस्य साधकस्यान्तःकरणे कदा चिदपि चौर्यवृत्तिः नोदेति। तदानीं तदनिच्छयाऽपि सर्वे पदार्थाः स्वत एव समुपढौकन्ते। यथा अहिंसावृत्तेरुदयेन तत्सन्निधाने हिंस्रपशवो व्याघ्रादयोऽपि अहिंसावृत्तिं धारयन्ति, तथैव अस्तेयवृत्तेः सम्यगुदयेन अविश्वासिनोऽपि जनास्तं विश्वसन्ति। मानवः स्वकीयया समीहयैव अभावमनुभवति। लोभेच्छायां दूरीभूतायां साधकेन नाभावोऽनुभूयते। संसारस्य कोऽपि पदार्थस्तस्य अप्राप्तो न जायते।

सिद्धान्तोऽयं प्रकारान्तरेणापि विविच्यते—पूर्वजन्मकर्मणैव मानवेन अभावोऽनुभूयते। पूर्वजन्मनि यस्य पदार्थस्य दुरुपयोगः, अयथासङ्ग्रहो वाऽनुष्ठितः, तत्पदार्थाभाव एवेदानीं मानवैरनुभूयते। अन्तःकरणे अस्तेयवृत्तौ प्रतिष्ठितायाम् अभावोत्पादककर्मबीजं समूलं प्रणश्यति। अत एव संसारेऽत्र योगिराजस्य केनापि पदार्थेन अलभ्येन न भूयते इति ॥ ३७ ॥

## ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ॥ ३८ ॥

ब्रह्मचर्ये पूर्णरूपेण प्रतिष्ठिते सति साधकेन शारीरिकं मानसिकं च वीर्यमासाद्यते। शरीरे किल वीर्यं नाम सर्वाभ्यर्हितः सप्तमो धातुः। उक्तं चाऽऽयुर्वेदे—

"रसाद् रक्तं ततो मांसं मांसान्मेदः प्रजायते।
मेदसोऽस्थि ततो मज्जा मज्जायाः शुक्रसम्भवः॥" इति।

रेतसः संरक्षणेन शरीरं पूर्णतां प्रतिपद्यते। ब्रह्मचर्यसाधनेन पूर्णोपयोगितामधिगतं शरीरं नं कदापि केनापि विचाल्यते। प्रधानेन धातुना

परिपूर्णे देहे सर्वेऽन्ये धातवः परिपुष्टतामुपयान्ति। शरीरमनसोः घनिष्टः सम्बन्धः। देहे वीर्यवति मनोऽपि प्राबल्यमासादयति। मनोवायुवीर्याणां परस्परं घनिष्ठसम्बन्धात् सृष्टिक्रियायां मनसः कर्तृत्वं रेतसश्च कारणत्वं समाम्नातम्। "ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत" इत्युक्तं श्रुतौ। ब्रह्मचर्यसाधनेन बलवन्मनो यदिच्छेत्, तदेव विधातुमर्हति॥ ३८॥

## अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः॥ ३९॥

विषयप्राप्तिसमीहा-राहित्यात् लोभशून्ये पूर्णवैराग्यसंयुक्ते अन्तःकरणे परिपूर्णां शान्तिमासादयति सति अपरिग्रहस्य सर्वाभ्यहितावस्था समुदेति। अपरिग्रहस्यैतस्य पूर्णदशायां साधकेन पूर्वजन्मज्ञानमधिगम्यते। 'पूर्वजन्मनि कोऽहम्, कानि च कर्माणि समनुष्ठितानि मये'ति सर्वं साधकोऽवगच्छति। तीव्रवैराग्योदयेन विषयवासनाविरहितं शान्तिमापन्नं सर्वविधपदार्थबन्धनरहितमन्तःकरणं बहिर्मुखप्रवृत्तिशून्यं सद् विशुद्धज्ञानसाहाय्येन निखिलमेव विषयसमूहं सम्यगवगच्छति।

पूर्वजन्मकृतकर्मसंस्कारा जीवचित्ते सन्तिष्ठते। परन्तु ते नानावृत्तिभिः चित्तचाञ्चल्यात् नावबुद्ध्यन्ते। अपरिग्रहस्थैर्येण स्थिरीभूते चित्ते सर्व एव संस्काराः स्मृतिपथमारोहन्ति। अत एव जीवस्य पूर्वजन्मसंस्काराणां स्मृतिर्जायते॥ ३९॥

यमाङ्गान्तर्गतां सिद्धिं वर्णयित्वा नियमसाधनजनिताः सिद्धयो वर्ण्यन्ते—

## शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गश्च॥ ४०॥

शौचेन स्वाङ्गेषु घृणा परैरसंसर्गश्च समुदेति। शौचाभ्यासत तच्चरमसीमानमधिरोहता साधकेन शरीरस्य अपवित्रताऽनुभूयते। शरीरसङ्गोऽपवित्रताहेतुः। देहाध्यासो हि जीवबन्धनहेतुः। देहोऽयं नितरामपवित्र इति मन्यमाने, शरीरं प्रति समधिगततीव्रद्वेषबुद्धौ जीवे मोक्षसाधनसमीहा प्रबलायते। स्वीयशरीरे द्वेषबुद्धौ सत्यां परकीये देहे द्वेषबुद्धिः, तत्संसर्गसमीहा-विनिवृत्तिश्च सम्भवत एव।

विज्ञानमिदं सुस्पष्टयितुं शौचलक्षणं स्मार्यते। स्थूलदेहसम्बद्धाऽपवित्रमलादिनिवृत्त्या बहिःशौचसम्पन्नताऽधिगम्यते। पापजनकक्लिष्टवृत्तौ अरुच्या पुण्यजनकाक्लिष्टवृत्तिभिश्च अन्तःकरणपरिपूर्णतासम्पादनेन अन्तःशौचमासाद्यते चेत्तर्हि स्वीकर्तव्यमेवैतद् यद् अपवित्रादसतः पवित्रसदभिमुखं शौचसाधनतत्परस्य योगिनो गतिः प्रवृत्तिश्च सर्वदैव सन्तिष्ठेते। शरीरस्य क्षणभङ्गुरत्वे विषयसुखालीकत्वे च समनुभूते साधकचित्ते स्वकीयशारीरिकासक्तेरभावः, अन्यदेहतः सम्बन्धस्थापने अरुचिश्च स्वयमुत्पद्यत इत्यत्र नाणीयानपि सन्देहः ॥ ४० ॥

शौचसिद्ध्यः फलान्तरमाह—

**सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-**
**योग्यत्वानि च ॥ ४१ ॥**

शौचशुद्ध्या सत्त्वशुद्धिः, मनःप्रसादः, एकाग्रता, इन्द्रियजयः, आत्मदर्शनयोग्यता च समधिगम्यते।

अन्तःकरणमलिनतामपसृत्य सत्त्वगुणविशेषप्रकाशात् ज्ञानाधिक्यहेतुना क्लिष्टवृत्तिरूपं तमोऽपसरति। दशेयं सत्त्वशुद्धिरुच्यते। मलरूपक्लिष्टवृत्तिनाशेन जायमाना मानसिकसुखोत्पत्तिः मनःप्रसादापरपर्यायं सौमनस्यमभिधीयते। यत्र सत्त्वशुद्धिस्तत्र सौमनस्यमपि स्वतःसिद्धम्। शुद्धं मनः स्थैर्यमभ्युपैति। एतदेव एकाग्रत्वम्। विषयाप्रसक्तिरेव इन्द्रियजयः। अर्थात् शौचसाधनेन देहेष्वेव प्रीतेरभावात्, इन्द्रियाणां विषयेषु प्रीतिर्विनिवर्तते। सुतरां विषयपराङ्मुखतैव इन्द्रियजयो बोध्यः। एवं हि वृत्तिशून्यतामापन्ने अन्तःकरणे आत्मदर्शनं जायते। सूत्रस्यैतस्य इदमेव तात्पर्यं यत् शौचसाधनस्य पूर्णत्वेन न केवलं पूर्वोक्तमेकमेव फलमासाद्यते, किन्तु सत्त्वशुद्धि-चित्तप्रसादैकाग्रत्वाऽऽत्मदर्शनयोग्यता अपि समधिगम्यन्ते ॥ ४१ ॥

**सन्तोषादनुत्तमसुखलाभः ॥ ४२ ॥**

सन्तोषात् किल सर्वाभ्यर्हितस्य सुखस्योपलब्धिर्जायते। उक्तं च भगवता व्यासेन—

"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्॥" इति।

वासनैव सर्वदुःखनिदानम्। सन्तोषोदयेन इच्छाया असद्भावात् सर्वमपि सुखमयमेव प्रतीयते। अतः सन्तोषः परमसुखस्वरूपः। सुखस्वरूपे विचार्यमाणे इदमेव सिद्ध्यति यद् विषयाः सुखं न प्रयच्छन्ति। किन्तु विषयावलम्बनेन ऐकाग्र्यमासादयति अन्तःकरणे आत्मनः प्रतिबिम्बस्यावभासाद् विषयिणः सुखानुभूतिः। विषयस्य क्षणभङ्गुरत्वात् परिणामशीलत्वाच्च ऐकाग्र्यस्यापि क्षणभङ्गुरत्वेन विषयसंयोगसमुत्पन्नस्य आत्मप्रतिबिम्बजनितस्य सुखस्याधिगमोऽपि क्षणभङ्गुर एव। तृष्णाक्षयेण सन्तोषावाप्त्या चेतसश्चाञ्चल्यं प्रणश्यति। एकाग्रे चेतसि आत्मनः प्रतिबिम्बं सदावभासते, येन सन्तोषिणा पुरुषेण अत्युत्तममविनश्वरं सुखमधिगम्यते॥४२॥

अन्यदपि—

## कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः॥ ४३॥

तपसः = तपोरूपकारणाद् अशुद्धिक्षयात् कायसिद्धिः इन्द्रियसिद्धिश्च सम्पद्येते। रजस्तमोजनित-मलावरणाद्यशुद्धिद्वारैव जीवस्य आभ्यन्तरिकाः समस्तशक्तयः कुण्ठितास्तिष्ठन्ति। तपसोऽनुष्ठानात् सर्वविधाशुद्धीनां प्रणाशेन अणिम-लघिमाद्यो बहुविधाः शरीरसम्बद्धाः शक्तयो योगिभिरासाद्यन्ते। इयमेवं कायसिद्धिः। तपःसाधनेन सुदृढं विशुद्धं चान्तःकरणमेकाग्रतां प्रतिपद्यते, येन परिपूर्णेन्द्रियशक्तिर्योगी दूरदर्शनश्रवणादिशक्तीः अधिकरोति।

तपसाऽशुद्धिक्षयादेव कायसिद्धेरिन्द्रियसिद्धेश्चाधिगमः। रजस्तमसोः मलसद्भावात् जीवसद्भावः। निर्मलमन्तःकरणम् ईश्वरसान्निध्यं भजते। अत एव ईश्वरीयभावराज्यनिमग्ने निर्मलेऽन्तःकरणे विविधसिद्धीनां प्रकाशः

सम्भव एव। तस्माद् एवंविधक्रियाकलाप-कुशलिनां योगिनां स्थूलकाय-सिद्धिः, सूक्ष्मराज्यविषयक-ज्ञानेन्द्रियसिद्धिश्च स्वतःसिद्धा ॥ ४३ ॥

### स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥

वेद-तत्सम्मताभ्युदयनिःश्रेयसप्रद-शास्त्राध्ययनं तन्मननं मन्त्रजपश्च स्वाध्याय उच्यते। एतत्साधनपरिपूर्णतया अभिलषितदेवतासान्निध्यं जायते। मोक्षरूपाभिलापपूर्तिकर्ता महात्मा गुरुदेवः इष्टदेवो वा साधक-कल्याणप्रदो ज्ञेयः। मोक्षप्रदशास्त्राध्ययनेन विशुद्धान्तःकरणेन पुंसा साधवो महात्मानो गुरुदेवो वा दृश्यन्ते। वेदादिमुक्तिप्रद-शास्त्रमननकर्ता साधकः पूर्णं ज्ञानमधिगत्य प्रकृति-परमात्मस्वरूपपार्थक्यं विन्दते। तदानीमेव तदन्तःकरणे भक्तमनोरञ्जनो देवदेव इष्टदेवो भगवानाविर्भवति।

प्रणवरूपमन्त्रजपाद् भगवद्दर्शनप्रकार उक्तपूर्वः। सगुणोपासनायामपि स्वस्व-साम्प्रदायिकगुरूपदिष्टमन्त्रजपेन, अर्थानुगमपूर्वकं स्वस्व-साम्प्र-दायिक-गीतादिशास्त्राध्ययनेन ज्ञानक्रियाशक्तिसाहाय्येन स्वेष्टदेवाधिगम इति भावः ॥ ४४ ॥

अपि च—

### समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥

ईश्वरप्रणिधानेन भगवद्भक्त्याऽपि समाधिः सिद्ध्यति। ईश्वरस्य प्रणि-धानस्वरूपभक्त्या निर्विकल्पसमाधिमधिगत्य साधकः कथङ्कारं विमुच्यते इति प्रथमपादे सम्यग् विवेचितम्। यदा भक्तशिरोमणिः साधको भगवद्-भक्तिपरिपूर्णतामधिगत्य पराभक्तिराज्यमासादयन् स्वकीयप्रियतमहृदयनाथ-प्रीतये स्वीयं सर्वं कर्मफलं समर्पयति, प्रेम्णा च उन्मत्तो भूत्वा बहिरभ्यन्तरं जडचेतने, सुखदुःखे सर्वत्र सर्वावस्थायामेव भगवन्तमीक्षते, तदैव भक्त-कुलतिलकोऽसौ कैवल्यपदप्रदं समाधिमासादयति।

समाधिभूमौ अग्रेसरता साधकेन संयमेन सिद्धिः, एकतत्त्वेन च निर्विकल्पः समाधिः सौविध्येनाधिगम्यते। ईश्वरप्रणिधानेन एकतत्त्वं स्वतो

लभ्यते। एवं किलैकतत्त्वं योगिराजं यदि निर्विकल्पसमाधिभूमिं प्रापयति चेत् तर्हि तद् ईश्वरप्रणिधानरूपस्य निर्विकल्पसमाधेः परमं सहायकमित्यत्र नाणीयानपि संशीतिलेशः।

सूत्रकृन्महर्षिणा पूर्वोक्तयमनियमादिप्रत्येकाङ्गपरिपूर्णाभ्यासेन फलप्राप्तेः स्वतन्त्ररूपेण वर्णनमनुष्ठितम्। यमनियमसाधनावस्थायां पूर्णतेयं नासाद्यते। योगमार्गेऽग्रे सरता साधकेन तत्फलान्यवाप्यन्ते॥ ४५॥

योगस्य तृतीयमङ्गम् आसनं निर्णयति—

**स्थिरसुखमासनम्॥ ४६॥**

स्थिरं सुखं येन तद् आसनमुच्यते। यया शरीरचेष्टया शारीरिकं सुखं मनसः स्थैर्यमात्मनः प्रसन्नता च समधिगम्यते, सैव आसनशब्दवाच्या। एकावस्थायां मानवेन न सुखमनुभूयते। अत एवासौ शयनोत्थानोपवेशनेषु सदैव परिवर्तनमनुतिष्ठति। शरीरचाञ्चल्यात् मनोऽपि चाञ्चल्यमभ्युपैति। अतस्त्रिकालदर्शिभिः महर्षिभिर्योगाचार्यैः अनेका उपवेशनपद्धतयो निर्दिष्टाः, याभिरभ्यस्ताभिः शनैः शनैः शरीरं मनश्च शान्तिमासादयतः। शान्तं मनो योगसाधनोपयोगितां प्रपद्यते।

स्थूलं शरीरमेतत् सूक्ष्मस्यैव शरीरस्य विस्तारमात्रम्। स्थूलशरीरचाञ्चल्येन तन्मूलभूतं सूक्ष्मं शरीरमपि चाञ्चल्यमुपढौकते। केनापि प्रक्रियाविशेषेण स्थूले शरीरे सुखीक्रियमाणे मनस्यपि सुखोदय इत्यत्र न सन्देह इति।

योगशास्त्राचार्यैर्बहुविधानि आसनानि समुपवर्णितानि। तत्तत्फलान्यपि उपवर्णितानि। चतुर्विधयोगसाधनेषु हठयोगाचार्यैः चतुरशीतिसंख्यकानि आसनानि निर्दिष्टानि। लययोगनिष्णातैस्तु केवलं चत्वार्येव अङ्गीकृतानि। योगशास्त्रे चतुर्विंशतिमुद्राणामपि वर्णनं लभ्यते। आसु मुद्रासु काश्चन आसनेषु, काश्चित् प्राणायामे, काश्चिच्च प्रत्याहारे, धारणायां स्थूलध्याने ज्योतिर्ध्याने च साहाय्यमाचरन्ति॥ ४६॥

आसनसिद्धेरुपायो निर्दिश्यते—

**प्रयत्नशैथिल्यानन्तसमापत्तिभ्याम् ॥ ४७ ॥**

प्रयत्नशैथिल्यं च अनन्तसमापत्तिश्च ताभ्यामासनसिद्धिरित्यर्थः। आसनमभ्यस्यतः साधकस्य यदा तत् स्वाभाविकं भवेत् अर्थात् देहाध्यासविचारराहित्यात् पूर्णरूपेण आसनेषु प्रयत्नशिथिलता सम्पद्येत, तदैव तस्य सिद्धावस्थाऽवगन्तव्या। एवमासनाभ्यासेन मनस एकाग्रतामधिगच्छन् योगी स्वचित्ताकाशं चिदाकाशे तमपि च महाकाशे नियोजयति। तदानीमेवासौ अनन्तशेषस्वरूपानन्ताकाशशायिनि परमात्मनि स्वचित्तमेकतानीकरोति। एतन्नाम अनन्तसमापत्तिरिति। एवम् आसनाभ्यासतः शरीरमनःस्थिरतया पूर्वोक्ता अङ्गमेजयत्वादयः समस्ता योगप्रत्यूहा निरस्यन्ते। आसनसिद्धेरमुम् उपायं समनुतिष्ठता साधकेन योगसाधने साहाय्यमधिगम्यत इति ॥ ४७ ॥

आसनसिद्धेः फलं निर्दिशति—

**ततो द्वन्द्वानभिघातः ॥ ४८ ॥**

तत आसनसिद्धेरनन्तरं द्वन्द्वस्य अभिघातो नोत्पद्यते। एकस्मिन् अन्यतरस्याभावो द्वन्द्वानभिघातः। ग्रीष्मे शीतस्य, शीते च ग्रीष्मस्य, दुःखे सुखस्य सुखे च दुःखस्याभावो द्वन्द्वबाधा। आसनसाधनेन सिद्धौ लब्धायां शरीरे स्थिरतामुपेयुषि मनसि च निश्चलतां प्राप्ते शीतोष्णादिद्वन्द्वप्रभावः देहचित्तयोरुपरि भवितुं नार्हति। मनश्च अनन्तभावे विलीयते। सिद्धासनो धीरो योगी साधकोऽनायासेन अध्यात्मपथेऽग्रेसरन् द्वन्द्वबाधातो विनिवर्तत इति सूत्रनिर्गलितार्थः ॥ ४८ ॥

आसनसिद्ध्या प्राणायामसम्बन्धं दर्शयति—

**तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥**

आसनसिद्धेरभावेन मनसश्चाञ्चल्यम्, तेन च प्राणवायुः चञ्चलायते। चञ्चलमनाः प्राणायामसाधने नाधिकृतः। बाह्याभ्यन्तर-गतिशीलयोः

श्वास-प्रश्वासयोरवरोधः प्राणायाम उदीर्यते। यावता मानवेन का चिदपि गम्भीरचिन्ता न कर्तुं शक्यत इति प्रत्यक्षसिद्धम्। मनःसंयमाय शारीरिक-निश्चलतासम्पादनमावश्यकम्। सुतराम् आसनदार्ढ्यमन्तरेण मनोजय-कारिण्याः प्राणायामक्रियायाः सम्पादनमसम्भवम्। प्राणायामोऽयं श्वास-प्रश्वासयोर्गतिविच्छेदात् सिद्ध्यतीत्यग्रिमसूत्रेषु सविस्तरं वर्ण्यते ॥ ४९ ॥

**वाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥**

पूरकः श्वासग्रहणं वा आभ्यन्तरवृत्तिः, रेचकः प्रश्वासप्रक्षेपो वा वाह्य-वृत्तिः। श्वास-प्रश्वासयोः स्तम्भनवृत्तिः कुम्भकः। रेचक-पूरक-कुम्भक-क्रियाभिः प्राणायामः साध्यते। परन्त्वत्र कुम्भक एव लक्ष्यभूतः। प्राण-वायुस्थैर्यादेव प्राणायामसिद्धिः। शरीरस्य स्थानविशेषेषु प्राणवायोः स्तम्भनविधेः सत्त्वाद् देशसम्बन्धः, रेचक-पूरक-कुम्भकेषु च समयभेदः। अतस्तत्र कालसंख्याद्वारा प्राणायामसाधनाभ्यासनियमः संरक्ष्यते। एवं हि देश-काल-संख्यासाहाय्येन कुम्भकमभ्यसतः साधकस्य प्राणायामः सिद्ध्यति।

पूर्वं प्राणायामानुष्ठानकाले प्राणवायुः सवेगं चलति, कुम्भकाभ्यासेन तद्गतिर्मन्दायते, सूक्ष्मतां च प्रपद्यते। तद्गतेः सूक्ष्मतया अन्तःकरण-वृत्तयः स्तम्भिता जायन्ते ॥ ५० ॥

तथा च—

**वाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥**

वाह्याभ्यन्तरविषयाणां यत्र परित्यागः सा चतुर्थी दशा विज्ञेया। प्राणायामक्रियागतयश्चतुर्धा विभक्तुं शक्यन्ते—रेचक-पूरक-कुम्भकानां तिस्रो गतयः, तद्भिन्ना चैका। योगशास्त्रस्य तेषु तेषु ग्रन्थेषु प्राणायाम-क्रियायाः सहिता, सूर्यभेदी, भ्रामरी, शीतली, भस्त्रिका, उज्जायी, मूर्च्छा, केवली चेत्यष्टौ नामानि समुपलभ्यन्ते। एतद्गतयः सूत्रत्रयोक्तोपायान

निर्विभ्रतिं। अर्थात् कुत्र चित् रेचक-कुम्भकयोः नियमबद्धताविधानम्, कुत्र चन च कुम्भक एव समधिको विचारः, क चन साधने कुम्भकस्य परामवस्थामधिगत्य उभाभ्यामपि पूरक-कुम्भकाभ्यामुपरत्या शान्तेर्दशायाः प्राप्तिर्लक्ष्यभूता निर्धारिता।

प्राणायामसम्बद्धाः केचिद् विषयाः पूर्वस्मिन् पादेऽपि प्रदर्शिताः। अदसीयं सविस्तरज्ञानं शब्दान् द्वारीकृत्य भवितुं नार्हति। तद्धि क्रिया-सिद्धस्य श्रीगुरुदेवस्य क्रियोपदेशादेव लब्धुं शक्यते।

सूत्रतात्पर्यमेतद् यत् रेचक-पूरक-कुम्भकरूपप्राणवायोः सुकौशलपूर्ण-प्रक्रियानुष्ठानेन प्राणापानक्रियागतिच्छेदे संवृत्ते साधकस्य अन्तःकरणं स्थैर्यमासाद्य बाह्याभ्यन्तरविषयशून्यतां प्रपद्यते। प्राणायामस्येयं चतुर्थी दशा रेचक-पूरक-कुम्भकानामुत्कृष्टा वेदितव्या॥ ५१॥

प्राणायामसाधन-परिणामं निर्दिशति—

**ततः क्षीयते प्रकाशावरणम्॥ ५२॥**

ततः=प्राणायामसिद्धया, प्रकाशस्य=ज्ञानस्य, आवरणम्=मलम्, क्षीयते=प्रणश्यति। चाञ्चल्यमेव अन्तःकरणस्य ज्ञानावरणकारकम्। चञ्च-लायां बुद्धौ ज्ञानप्रकाशोऽपि प्रक्षीण एव। तस्याः स्थिरतायां तु स्वरूपाधिगमो बोभूयते। आन्तःकरणिकवृत्तिषु शान्तिमापद्यमानासु बुद्धेस्तमोमलमपसरति, सा च परिपूर्णतामासादयति। मनोवायुवीर्याणामैक्यं पूर्वसूत्रेषु समुप-वर्णितम्। प्राणायामसिद्धौ सत्यां प्राणापानगतिरोधेन प्राणवायौ सुस्थिरे मनसो वायोश्च अन्योन्यसम्बन्धात् अन्तःकरणं स्थिरत्वमासादयति। वृत्तीनां स्थैर्यात् मलापसरणेन बुद्धिर्नितरां प्रकाशते॥ ५२॥

फलान्तरं व्याचष्टे—

**धारणासु च योग्यता मनसः॥ ५३॥**

प्राणायामसाधनेन अन्तःकरणशुद्ध्या मनसः एकाग्रतासम्पादिका धारणाशक्तिः प्रवर्धते। सूत्रस्यास्य एतत्तात्पर्यं यत् प्राणायामसाधनादर्वाग्

योगी बहिर्जगत्येव बम्भ्रम्यते। परन्तु प्राणायामसिद्ध्या साधको मनोराज्यरूपेऽन्तर्जगत्यपि स्वाधिकारं संस्थापयति। प्राणायामः किल तदनन्तरप्राप्तस्य प्रत्याहारस्यैव केवलं न साहाय्यमनुतिष्ठति, प्रत्युत मनोयोग्यतामुन्नमयन् धारणाया अपि सहायको जायते ॥ ५३ ॥

क्रमप्राप्तं पञ्चमाङ्ग-प्रत्याहारस्वरूपं निर्दिशति—

**स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

इन्द्रियाणां स्वविषयपरित्यागपूर्वकं चित्तस्वरूपानुकरणमेव प्रत्याहारः। तन्मात्राशक्तिं द्वारीकृत्य इन्द्रियसंलग्नं मनो विषयान् गृह्णद् यदा विषयवत् प्रतीयते, तदाऽन्तःकरणमपि बद्धतां प्रपद्यते। येन क्रियाविशेषानुष्ठानेन इन्द्रियाणि विषयेभ्यः पराङ्मुखीभूय बुद्धितत्त्वमनुसरेयुः, तत्साधनं नाम प्रत्याहार इति। यथा कूर्मो बाह्यविषयतो निजाङ्गानि सङ्कोचयति, तथैव इन्द्रियाणि यया प्रक्रियया विषयेभ्यो व्यावृत्त्य अन्तःकरणाभिमुखं प्रचलन्ति, तत्प्रक्रियानाम प्रत्याहारः।

प्राणायामसाधनवत् प्रत्याहारसाधनस्यापि बह्व्यः क्रियाः सन्ति, परन्तु क्रियासिद्धांशत्वात् ताः श्रीगुरुदेवोपदेशलभ्या विज्ञातव्याः। यथा राज्ञीं मधुमक्षिकामेव साधारणाः सर्वा अपि मधुमक्षिका अनुसरन्ति, तथैव मनसोऽनुकूलमेव इन्द्रियाणि सर्वाणि विषयेषु प्रवर्तन्ते। प्रत्याहारो मनोराज्यसाधनम्। प्रत्याहारक्रियया मनस इन्द्रियसम्बन्धो विच्छिद्यते। इन्द्रियाणि चान्तःकरणे विलीयन्त इति सर्वः प्रत्याहारप्रभावः ॥ ५४ ॥

प्रत्याहार-साधनफलं दर्शयति—

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

ततः=प्रत्याहारसाधनाद् इन्द्रियाणां परमा वश्यता जायते, अर्थात् इन्द्रियाणि वश्यतां प्रपद्यन्ते। शब्दादिविषयपराङ्मुखत्वमेव इन्द्रिय-जयः।

अनादिकालत एव विषयैः सह इन्द्रियसम्बन्धसत्त्वाद् विषयेषु इन्द्रियाणां स्वत एव अप्रवर्तनमसम्भवम्। अतः स्वभावसिद्धेयं विषयवती शक्तिः इन्द्रियाणां व्यसनमित्युच्यते। एतद्व्यसनध्वंसः इन्द्रियाणां पुरुषार्थहीनतामपेक्षते।

तन्मात्राणामुत्तेजनया मनो यदा इन्द्रियैः साकं सङ्गच्छते, तदानीमेव इन्द्रियाणि विषयाभिमुखं धावन्ति। परन्तु यदा प्रत्याहारसाधनेन वशीभूतं विरक्तमन्तःकरणं विषयमुपभोक्तुम् इन्द्रियैः सह सम्बन्धमेव न स्थापयति, तदानीं स्वत एवेन्द्रियाणि पुरुषार्थहीनतां प्रपद्यन्ते। इयमेव प्रत्याहारसाधनस्य परिपूर्णावस्था। एतस्यामवस्थायां सिद्धायां विषयसम्बन्धसत्त्वेऽपि न पुनस्तानि विकृतिमापद्यन्ते। प्रत्याहारसाधनसिद्धावस्थायामस्यां साधको विषयपराङ्मुखः पूर्णरूपेण जितेन्द्रियत्वमासादयति ॥ ५५ ॥



# ३. विभूतिपादः

प्रथमपादे योगस्वरूपं विवेचितम्। द्वितीयपादे च योगसाधनानि, तदवान्तरभेदाङ्गप्रत्यङ्गानि वर्णितानि। पादेऽस्मिन् सूत्रकारस्तत्फलाफल-वर्णनं प्रक्रामति। यमनियमादिरूपबीजतः प्रादुर्भूतः क्रियायोगस्वरूपो महान् कल्पवृक्षः। आसन-प्राणायामादयस्तदङ्कुराः। प्रत्याहारादयस्तस्य कुसुमानि। धारणा-ध्यानप्रभृतीनि च तत्फलान्यवगन्तव्यानि। अतः साधनपादे यम-नियमाऽऽसन-प्राणायाम-प्रत्याहार-साधनानि वर्णयित्वा साम्प्रतं क्रमप्राप्तं धारणा-स्वरूपमाह—

**देशबन्धश्चित्तस्य धारणा॥ १॥**

देशे = अन्तर्जगतः स्थानविशेषे, बन्धः = स्थापनं चित्तस्य 'धारणा' प्रोच्यते। प्रागुक्तसाधनसमूहैः बहिर्जगद् विजित्य साधकः प्रत्याहार-साधनेन अन्तर्जगति विचरति। अन्तर्जगतः स्थानविशेषेषु स्वाधिकार-स्थापनं धारणा समाम्नायते।

प्राणायामादिवद् एतस्या अपि अनेके साधनभेदाः श्रीगुरुदेवदया-लभ्याः सन्ति। स्थूल-सूक्ष्मभेदेन धारणाऽपि द्विविधा। नाभिप्रभृतिशरीरा-ङ्गेषु क्रियमाणा स्थूला, सूक्ष्मपञ्चमहाभूतेषु समनुष्ठीयमाना च सूक्ष्मा। बाह्याभ्यन्तरभेदेन पुनस्तस्या भेदद्वयम्। प्रथमाधिकारिहितसाधनार्थं बहिर्वस्तुषु अभ्यस्यमाना बाह्यधारणा। पूर्वोक्ता च किल अन्तर्धारणा वेद्या। धारणायां साफल्यमुपगतस्य योगिनः पौनःपुन्येन प्रत्याहारसाधनं नावश्यकम्, यतोऽसौ बहिर्जगद्भ्यः समुपरतोऽन्तर्जगत्येव निजान्तःकरणं संस्थापयितुमर्हतामधिकरोति। धारणावस्थायां सिद्धायां समाधिपथे बहिर्विषया नैव बाधां प्रकुर्वते। धारणा-साधनं समाधि-सौधप्रवेशे प्रथमं द्वारमवगन्तव्यम्॥ १॥

ध्यानं निरूप्यते—

**तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥**

ध्येयाकारे चित्तवृत्तिस्थैर्यं ध्यानमुच्यते। धारणाक्रियाभ्यासानन्तरं तेषु तेषु ध्येयवस्तुषु मनस एकताततास्थापनं ध्यानम्। अर्थात् ध्येयावलम्बनेन तदनुपमज्ञानस्य स्थायिसम्बन्धविधानं ध्यानम्। पूर्वसाधनवद् ध्यानस्याप्यनेके भेदाः श्रीगुरुदेवगम्या एव।

पूर्वमुपवर्णितानां योगमार्गाणां यथा चत्वारो भेदास्तथैव स्थूल-ज्योति-विन्दु-ब्रह्मनाम्ना ध्यानस्यापि चातुर्विध्यम्। स्थूलध्यानसाधको योगी स्वोयेष्टदेवस्य सर्वाङ्गसुन्दरां स्थूलमूर्तिं स्वहृत्पटले निरीक्षमाणोऽन्तःकरणे तन्मूर्तौ धारणामुत्पादयति। तत्र ध्येयाकारधारिणी मनसो वृत्तिरेव ध्यानम्। सगुणत्वात् ज्योतिर्ध्याने विन्दुध्याने चेयमेव रीतिराश्रीयते। परन्तु ब्रह्मध्यानप्रकारस्तद्विलक्षण एव। सर्वाभ्यर्हित-ब्रह्मध्यानानुष्ठानावसरे योगिराजः प्रथमं सच्चिदानन्दमयं भावत्रयमनुसृत्य स्वकीयमन्तःकरणं ब्रह्मधारणया संयुनक्ति। ततश्च त्रिभावमय्या ब्रह्मधारणया संयुक्तमन्तःकरणं त्रिभावावलम्बनेन लीनं सद् ब्रह्मस्वरूपध्याने सामर्थ्यं लभते।

ध्यानसाधनमेतत् समाधिप्रवेशे द्वितीयं द्वारम्। अर्थात् ध्यानसाधने सिद्धे समाधिभूमिरासाद्यते ॥ २ ॥

इदानीं समाधिं वर्णयति—

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः ॥ ३ ॥**

ध्येयमात्रस्फूर्तियुक्तं तदेव ध्यानं स्वरूपशून्यं सत् समाधिनाम्नाऽभिधीयते। ध्यातृ-ध्यान-ध्येयानां पृथक् पृथगवभासो ध्यानलक्षणम्। एतत्त्रितयस्य स्वतन्त्रसत्ताविनाशः समाधिरुच्यते।

साधारण्येन समाधेस्तिस्रो दशा वेदितव्याः—साधारणसमाधिदशा प्रथमा, सविकल्पसमाधिदशा द्वितीया, तृतीया च निर्विकल्पसमाधिदशेति। अवस्थात्रयमिदम् एकतः समनन्तरं क्रमशः समुदयति।

समाधेः प्रथमावस्थायां ध्यानस्वरूपा स्वतन्त्रा वृत्तिर्ध्येयरूपेण प्रतीयते। अर्थात् ध्यानस्वरूपं तदानीं न प्रतीयते। ध्यातर्य्येव ध्येयस्वरूपावेशः किल समाधिप्रथमदशायां वोभूयते। सम्प्रज्ञातसमाधिनामक-द्वितीयावस्थायां त्रिपुट्या विद्यमानत्वेऽपि साधकोऽगम्यविषयान् परिज्ञातुं प्रभवति। निर्विकल्पनामक-समाधेस्तृतीयदशायां कैवल्यमधिगम्यते। प्रथमोक्त-साधारणसमाधिगतो मानवोऽग्रिमभूमिद्वयेऽग्रेसरति।

अयं प्राथमिकः साधारणसमाधिः सर्वत्रैव मानवे समुदेति। काव्य-भावभावितः कविः कदाऽपि अगम्यविषयानपि साक्षात्कृत्य विलिखति। कस्य चिच्चेतसि वक्ष्यमाणलक्षणसंयमं विधाय योगी प्राथमिकसमाधि-द्वारैव परकीयमन्तःकरणं निरीक्ष्यते। सर्वविधयोगसिद्ध्यधिगमे प्रथमः समाधिरेव साफल्यमधिगच्छति।

सगुणोपासनायाः सर्वविधध्यानपद्धत्या प्राप्तसमाधेर्नाम 'महाभावः' इति। हठयोगस्य वायुनिरोधद्वारा समधिगतः समाधिः 'महाबोध'नाम्ना समाम्नातः। लययोग-प्रणालीं द्वारीकृत्य नादबिन्दोरेकीकरणेन समनुष्ठीय-मानो 'महालय'-नाम्ना विश्रुतः। समाधिस्वरूपत्रयमपीदं सविकल्पसमाधौ अन्तर्भवति। ज्ञानमय-राजयोग-साहाय्येन आत्मज्ञानोपलब्धिजनितो विकल्पशून्यः समाधिः 'निर्विकल्प'संज्ञया समाख्यातः।

प्रथमः समाधिः संयममूलकः, द्वितीयश्चैकतत्त्वमूलकः। प्रथमसमाधे-रनुभवो न जायते, किन्तु तत्कार्यं भवति। द्वितीयश्च समाधिरनुभूयते। परमयं विकल्पशून्यश्चिरस्थायी च न भवति। विकल्परहितस्तृतीयः समाधि-श्चिरं स्थितिशाली भूत्वा अद्वैतदशामाविष्करोति। सूत्रेऽत्र प्रथमश्रेणी-दशावधारणार्थमेव एतादृशं समाधिलक्षणं व्याकृतम्॥ ३॥

त्रयाणां सह प्रयोगेण किं फलमित्युच्यते—

**त्रयमेकत्र संयमः॥ ४॥**

पूर्वोक्तानां त्रयाणाम् = धारणा-ध्यान-समाधीनाम्, एकत्र अनुष्ठानं संयमः समाम्नातः। अर्थात् क्व चनैकत्र विषये त्रयाणामेकत्र समावेशः

संयम उच्यते। एकतत्त्वस्य विवृतिः प्रदर्शितपूर्वा। तया साकं समाधिसम्बन्धोऽपि व्याकृतः। इदानीं संयमस्वरूपं निर्णीय समाधिना तत्सम्बन्धं निर्दिशति। एकतत्त्वाभ्यासेन द्वैतभानं प्रणश्यति, ततश्च सविकल्पतो निर्विकल्पसमाधिमासादयता साधकेन अद्वैतमात्मस्वरूपमुपलभ्यते। एकतत्त्वेन अन्तःकरणवृत्तयो निरुद्धतां प्रपद्यन्ते, अन्तःकरणं च द्वैतभावं सर्वथा परिजहाति। परन्तु संयमसम्बन्धनिबन्धनः साधारणः समाधिः धारणाध्येय-ध्यानविशिष्ट एव। अन्यथाऽलौकिक्यो योगसिद्धयः किमिव समधिगम्येरन्। अतः समाधिरयं द्वैतभावपूर्णो ज्ञातव्यः।

स्मर्यते चात्र—

संयमश्चैकशक्तिश्च शक्तिद्वयमलौकिकम्।
पुरो वो वर्णितं देवा मया सम्यक्तयाऽनघाः॥
जायते संयमस्तत्र धारणाभूमितो ध्रुवम्।
ध्यानभूम्यास्तु भो देवा एकतत्त्वं प्रजायते॥
त्रयं हि धारणाध्यानसमाधीति क्रियात्मकम्।
दृश्याश्रयात्प्रयुक्तं सन्निर्जराः! संयमो भवेत्॥
यदा त्वात्मानमुद्दिश्य त्रयमेतत्प्रयुज्यते।
एकतत्त्वं तदोदेति ह्येषा वैदान्तिकी श्रुतिः॥" इति।

एकतत्त्वमूलकः समाधिः सविकल्पो निर्विकल्पो वा भवेत्, किन्तु तत्र धारणा-ध्यानभूमिसम्बन्धाभावाद् इदं सिद्ध्यति यदेकतत्त्वं ध्यानात्परं समुदेति। परन्तु संयमेन धारणासम्बन्धसत्त्वात् संयमक्रिया धारणाभूमेराविर्भूय धारणा-ध्यान-समाधिभूमिभिः तिसृभिर्मिलित्वा पूर्णबलशालिनी फलमुत्पादयति। संयमः कथमनुष्ठीयते, तेन च कथमिव दिव्यफलोदय इत्यग्रिमसूत्रैर्वक्ष्यते॥ ४॥

संयमाभ्यासफलं निर्वक्ति—

**तज्जयात् प्रज्ञालोकः॥ ५॥**

तस्य जयेन प्रज्ञायाः प्रकाशो जायते। संयमस्य परिपूर्णरूपेणाभ्यासात् समाधिविषयकबुद्धिः प्रकाशते। संयमस्थैर्येण पूर्णज्ञानमयस्य परमात्मनः कृपया समाधिविषयिणी दिव्या बुद्धिरधिगम्यते। बुद्धिरियं भ्रमशून्या योगसिद्धिजनिकेति हेतोः संयमेनैव समुदेति ॥ ५ ॥

संयम-प्रयोगविधिं निर्दिशति—

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

तस्य = योगस्य, भूमिषु संयमस्य विनियोगो विज्ञेयः। खण्डद्वय-संयुक्ताया अट्टालिकायाः प्रथमखण्डमतिक्रम्यैव मानवो द्वितीयखण्ड-मधिरोहति। तथैव योगी योगस्य प्रथमां भूमिं विजित्य द्वितीयामुत्तमां भूमिमासादयति। भगवतः कृपाबलेन उच्चतरभूमिमधिकृतवता साध-केन निम्नतरा समासाद्यते। तात्पर्यमिदं यद् योगावस्थायां योगेनैव परो योगः समधिगम्यते। अर्थात् समुन्नतायां भूमौ भगवत्प्रकाशरूप-समाधिज्ञानमेव संयमक्रियासंयुक्तं सत् निम्नावस्थातः समुन्नतां दशामधि-गमयति। सुतरां धारणा-ध्यान-समाधिरूपं भूमित्रयमेव संयमक्रियायाः प्रयोगस्थानम्। संयमक्रिया किल विषयधारणातः प्रकटीभूय विषयाकार-वृत्तितश्च ध्यानभूमिं ततश्च समाधिभूमिमासाद्य सिद्धिं प्रयच्छति। संयमक्रिया हि धारणाभूमौ अङ्कुरायते, समाधिभूमौ च सिद्धिफलं प्रसूते ॥ ६ ॥

अष्टस्वङ्गेषु त्रितयवैशिष्ट्यं विविनक्ति—

**त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥**

पूर्वेभ्यः = यम-नियमा-ऽऽसन-प्राणायाम-प्रत्याहारेभ्यः त्रयमेतद् धारणा-ध्यान-समाधिनामकम् अन्तरङ्गमवगन्तव्यम्।

विभूतिपादेऽत्र कथं त्रयाणामेव समावेशो नान्येषामिति सन्देहो निराक्रियते। तथा हि—योगसाधनस्य अष्टाङ्गत्वाद् अष्टानां क्रिया-भूमीनां सद्भावः स्वतः सिद्ध्यति। अष्टाङ्गेषु यमादयः पञ्च बाह्यजगद्-विजयार्थकाः। अन्तर्जगता साकं न तेषां कोऽपि साक्षात् सम्बन्धः।

प्रत्याहारेण योगी साधको वहिर्जगद् विस्मृत्य अन्तर्जगति उपढौकते। अतः पूर्वे पञ्च अन्तर्जगतः क्रियायां कस्यामपि नैव साक्षात्सम्वन्धवन्तो विद्यन्ते। धारणाध्यानसमाधिनाम्न्यः तिस्रो भूमय एव अन्तर्जगत्सम्वन्धवत्यो वेदितव्याः। संयमेन सह तासामेव सम्वन्धः। संयमक्रियाविस्तृतिः धारणा-ध्यान-समाधिभूमिपर्यन्तमवसीयते। अष्टस्वप्यङ्गेषु पञ्चानां पूर्वोक्तानां वहिर्जगता सम्वन्ध इति द्वितीयपादे वर्णितम्। परन्तु धारणा-ध्यान-समाधीनां त्रयाणाम् अन्तर्जगता विशिष्टसम्वन्ध इति विभूतिपादेऽत्र सम्प्रज्ञातसाधनस्वरूपे वर्णनमुपक्रान्तम्। तात्पर्यमेतद् यद् योगाङ्गेषु प्रथमप्रोक्तानि पञ्चाङ्गानि वहिरङ्गसाधनानि, अन्तिमानि च त्रीणि सम्प्रज्ञातयोगसाधनस्य अन्तरङ्गरूपाणि॥ ७॥

असम्प्रज्ञातसमाधिना तत्सम्वन्धं निरूपयति—

## तदपि वहिरङ्गं निर्वीजस्य॥ ८॥

निर्वीजस्य = असम्प्रज्ञातसमाधेः तदपि वहिरङ्गमवगन्तव्यम्। यथा योगाङ्गप्रोक्तानि प्रथमपञ्चाङ्गानि वहिर्जगत्सम्वन्धनिवन्धनत्वात् अन्तर्जगतो धारणा-ध्यान-समाधीनां वहिरङ्गभूतानि, तथैव धारणा-ध्यान-समाधिरूप-संयमक्रियया सम्पादिता सम्प्रज्ञातयोगदशा निर्वीजस्वरूपा असम्प्रज्ञात-योगावस्थाया वहिरङ्गरूपा अवगन्तव्या। सम्प्रज्ञातयोगे सविकल्पसमाधौ ध्यातृ-ध्यान-ध्येयावभाससत्ता तिष्ठति। तत्र अवलम्वनसत्त्वात् प्रकृतिवीज-सद्भावः। परन्तु असम्प्रज्ञातयोगरूपनिर्विकल्पसमाधौ वीजस्यापि विनाशो जायते। अतो निर्वीजासम्प्रज्ञातसमाधेः सवीजः सम्प्रज्ञातसमाधिः वहि-रङ्गतां प्रपद्यते। स्मर्यते चात्र—

"प्रोद्वोधयति जीवेषु नानाशक्तिर्हि संयमः।
ऐशीनैवात्र सन्देहो नाऽलं मोचयितुं त्वसौ॥
अविद्यापाशसन्नद्धान् जीवांस्तान् पाशवन्धनात्।
एकतत्त्वं तु शक्नोति भक्तान् दृश्यप्रपञ्चतः॥

हठादाकृष्य तेभ्यो हि शिवत्वं दातुमद्भुतम् ।
साधनं संयमोपेतं योगस्याभ्युदयप्रदम् ॥
केवलं त्वेकतत्त्वस्य साहाय्यात् साध्यते तु यत् ।
साधनं तद्धि योगस्य निःश्रेयसकरं ध्रुवम् ॥
एतदेवास्ति योगस्य रहस्यं श्रुतिमूलकम् ।
योगस्य साधनानां हि तत्त्वज्ञानप्रकाशकम् ॥" इति ।

तात्पर्यमिदं यत् सम्प्रज्ञातसमाधिनैव संयमक्रियाफलसम्बन्धः, न निर्विकल्पसमाधिना । मोक्षस्वरूपायाः परायाः सिद्धेरधिगमस्तु निर्बीज-समाधेरुदर्कः । परन्तु सर्वविधा दिव्यैश्वर्यरूपिण्योऽपराः सिद्धयः सम्प्रज्ञात-समाधिसम्बद्धा वेद्याः । अतोऽवस्थेयं निर्बीजसमाधेर्बहिरङ्गभूतेति मुमुक्षुभिः योगिभिः न कदापि विस्मरणीयमिति ॥ ८ ॥

निर्बीजसमाधेरन्तरङ्गभूतो निरोधपरिणाम उच्यते—

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

यदाऽन्तःकरणं स्वाभाविकैर्गुणैः अभ्याससंस्कारवशवर्तित्वेन स्वविधेय-व्यापृतं सन् नरीनृत्यते, तदानीं तदवस्था व्युत्थानसंस्कारसम्बद्धा प्रोच्यते । यदा चैकतत्त्वाभ्यासेन तत् स्वाभाविकं स्वीयं चाञ्चल्यं दूरी-करोति, तदानीं तद्दशा निरुद्धसंस्कारान्तर्गता आम्नायते ।

व्युत्थानदशायां निरोधावस्था तिरोदधाति । निरोधावस्थोदये च व्युत्थानसंस्कारा विलीयन्ते । एतदुभयदशामध्यवर्तिनि अन्तःकरणे जाय-मानाया दशाया नाम 'निरोधपरिणाम'इति । यदा चान्तःकरणं चञ्चलरूप-व्युत्थानसंस्कारतः चाञ्चल्यविरहित-निरोधसंस्कारस्वरूपं धत्ते, एतद्दशा-द्वयमध्ये अन्तःकरणवृत्तिषु निरुद्धास्वपि तद्बीजप्रणाशो न जायते । अतः सबीजावस्था 'निरोधपरिणाम'शब्देन समाख्यायते । अर्थात् यदाऽन्तःकरणे व्युत्थानसंस्काराणां लयो निरोधसंस्काराणामाविर्भावश्च जायते, तेन च

अवस्थाद्वयसंयुक्तमपि तन्निरुद्धवत् प्रतीयते, तदानीम् अन्तःकरणदशेयं 'निरोधपरिणाम'नाम्ना प्रोच्यते।

निरोधपरिणामावस्थायां प्रपन्नो निर्बीजसमाधौ वर्तमानो जीवन्मुक्तो योगिराजः केवलं प्रारब्धमेव उपभुङ्क्ते। तदानीमेकतत्त्वसिद्ध्या ऋतम्भरायाः प्रज्ञायाः समुदयेन ज्ञानाग्निना सर्वेऽपि सञ्चिताः क्रियमाणाश्च संस्काराः प्रणश्यन्ति। अर्थात् सञ्चितैः सम्बन्धः प्रणष्टः, क्रियमाणाश्च न सङ्गृह्यन्ते। केवलं निरोधपरिणामं द्वारीकृत्य समागताः शरीरोत्पादकसंस्काराः अन्तःकरणे तिष्ठन्ति, तत्फलं च भुज्यते॥ ९॥

निरोध-परिणामफलमुच्यते—

**तस्य प्रशान्तवाहिता संस्कारात्॥ १०॥**

निरोधसंस्काराद् अन्तःकरणे शान्तिः प्रवहति। निरोधसंस्कारावस्थायां योगिराजस्य न प्राक्कालीनकार्यकलापे आसक्तिः, नापि च समुत्पत्स्यमानाः वासना एव तिष्ठन्ति। यत आत्मज्ञानेन आसक्तिनाशे पूर्वसम्बन्धो नश्यति, वासनाक्षयेण च भाविनी समीहाऽपि नोदेति। तदानीं निर्विकल्पसमाधिस्थितस्य योगिराजस्य निरोधपरिणामजनिताः क्रमप्राप्ताः शारीरिकप्रारब्धभोगजन्याः संस्कारा एव कार्यमनुतिष्ठन्ति। एतादृश्याः सर्वोत्तमज्ञानस्वरूपाया ऋतम्भरायाः प्रज्ञायाः समुदयेन तमोरजसी विलीयेते, तेनान्तःकरणे ज्ञानपरमानन्दपरिपूर्णा शान्ति-मन्दाकिनी निरवच्छिन्नरूपा प्रवहति॥ १०॥

असम्प्रज्ञातसमुद्भूत-निरोधपरिणामं वर्णयित्वा साम्प्रतं सम्प्रज्ञातोत्पन्नसमाधिपरिणामं व्याचष्टे—

**सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः॥ ११॥**

चित्तस्य सर्वार्थतायाः क्षयः, एकाग्रतायाश्च उदय एव समाधिपरिणामः प्रोक्तः। संयमलक्षणं तदुपयोगित्वं च वर्णयित्वा निर्बीजसमाध्यधिगमाय निरोधपरिणामं तत्फलं च मुमुक्षोर्योगिनो लक्ष्यं स्थिरीकर्तुं समभिधाय

सबीजसमाधौ संयमसाहाय्येन प्राप्तव्यस्य समाधिपरिणामस्य समुपवर्णनं प्रक्रामति सूत्रकृन्महर्षिः।

विविधविषयसंस्कारैः समुत्पन्ना अन्तःकरणचञ्चलतैव 'सर्वार्थता' प्रतिपाद्यते। सर्वार्थता एकाग्रता च उभयमेव अन्तःकरणस्य गुणस्वरूपम्। सर्वार्थतायां विलीनायामन्तःकरणे एकाग्रता समुदेति। एवं सर्वार्थतायाः क्षयेण एकाग्रतायाश्च समुदयेन अन्तःकरणे समुत्पद्यमान-परिणामोदय एव समाधिपरिणामो व्याह्रियते। समुन्नतभूम्यधिगतं ज्ञानमेव साधकम् अत्युन्नततरां श्रेष्ठभूमिं प्रापयतीति पूर्वमेव प्रतिपादितम्। एवमेकाग्रतायाः समुन्नतभूमिमासादयद् अन्तःकरणं स्वत एव समाधिभूमिमधिगच्छति। तदानीं निरोधपरिणाममप्राप्य वासनाजनितसंस्कारबीजाश्रयेण सविकल्पसमाधिदशायाम् अन्तःकरणे प्रादुर्भूतः परिणाम एव समाधिपरिणामः प्रोच्यते। स एव ऐशीनां सिद्धीनां मूलहेतुः ॥ ११ ॥

समाधिपरिणामं द्वारीकृत्य सिद्ध्यधिगमाय समाधिपरिणामानन्तरं परिणामान्तरस्वरूपं निर्दिशति—

## ततः पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता-परिणामः ॥ १२ ॥

ध्यान-धारणाभ्याम् एकतत्त्व-संयमयोरुत्पत्तिः। एकतत्त्वसाहाय्येनैव अन्तःकरणं वासनाबीजविरहितं निर्विकल्पसमाधिं प्रसूते। परन्तु धारणाभूमित एव सिद्धिवासनाबीजं सहैव नीयमाना संयमक्रिया समुत्पद्य ध्यानभूमितः समाधिभूमिमासाद्य एकाग्रता-समाधिपरिणामाभ्याम् ऐशीः सिद्धीर्योगिने प्रयच्छति।

ऐश्यः सिद्धयो ह्यनेकविधाः, 'अपरासिद्धि'नामतोऽपि ताः समाम्नाताः। सकामा योगिनो यां सिद्धिं कामयन्ते, तत्स्वरूपाधिगमहेतुभूतां सुकौशलपूर्णां धारणामन्तःकरणे स्थापयन्तो धारणा-ध्यान-समाधिरूपसंयमक्रियासाहाय्येन ते समाधिशक्तियुक्ता एकाग्रतापरिणामद्वारा अपराः सिद्धीरधिगन्तुं सामर्थ्यं लभन्ते। एकाग्रतापरिणामश्च शान्तोदितप्रत्ययतुल्यता-

संयुक्त आविर्भवति। एकाग्रतापरिणामे सिद्धिं समीहमानस्य योगिनोऽन्तः-करणं निस्तरङ्गजलाशयवत् समानवृत्तिसर्वार्थताविरहितं सत् शान्तिमापद्यते। दशेयं 'शान्तप्रत्यय'नामतोऽभिधीयते। सिद्धिसमीहाजनितवासनाबीजवेगजायमानसिद्धेः अभिमुखीभूतान्तःकरणदशैव 'उदितप्रत्यय'-नामतो व्याह्रियते। युगपदवस्थाद्वयं संधृत्य एकाग्रतापरिणामसाहाय्येन योगिनः ऐशीः सिद्धीः समधिगच्छन्ति॥ १२॥

एकाग्रतापरिणामान्तर्गता अन्ये परिणामा वर्ण्यन्ते—

**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः॥ १३॥**

एतेन स्थूलसूक्ष्मभूतेषु इन्द्रियेषु धर्मलक्षणावस्थानां परिणामा अपि प्रोक्ताः। पूर्वसूत्रोक्तान्तःकरणपरिणामे एव स्थूलसूक्ष्मभूतेन्द्रियत्रिविध-परिणामा अन्तर्भवन्तीति वेद्यम्। अन्तःकरणोत्पन्न-व्युत्थाननिरोधरूप-धर्मस्य आविर्भाव-तिरोभावस्वरूपं परिवर्तनमेव 'धर्मपरिणाम' उच्यते।

अन्तःकरणसम्बद्धः लक्षणपरिणामस्त्रिविधः—अनागतलक्षणपरित्याग-पूर्वकम् अतीतलक्षणानुसरणं 'भूतलक्षणपरिणाम'नाम्ना प्रोच्यते। भूत-लक्षणपरिणामेऽत्र अतीतलक्षणपरिणामः अन्यकालपरिणामतो नाभिन्नः। यतोऽत्र वर्तमानलक्षणपरिणामस्य अनागतलक्षणपरिणामस्य चांशः तिष्ठत्येव। एवमेव 'वर्तमानलक्षणपरिणामः' 'अनागतलक्षणपरिणाम'श्चापि अवगन्तव्यः। यदि च समाधिदशां निरोधदशां वा प्राप्तं योगिनश्चित्तं चञ्चलतां प्रपद्येत, तर्हि भूत-भविष्यद्-वर्तमानभेदेन तदवस्थात्रयं बोभवीति। यस्मिन् क्षणे निरोधसंस्कारोदयेन व्युत्थानसंस्कारबलं क्षीयते, तदवस्थैव तृतीया बोद्धव्या। एवं किल धर्मिण्यन्तःकरणे उत्पत्ति-स्थिति-लयक्रियां धारयन्त-स्त्रयोऽपीमे धर्मलक्षणावस्थापरिणामा बोभूयन्ते। त्रिष्वपि परिणामेष्वेषु नैव शून्यतामधिगच्छति अन्तःकरणमित्यवधेयम्।

यथा त्रिगुणमयप्रकृत्यधीनस्य अन्तःकरणस्य उपर्युक्तास्त्रयः परिणामाः स्वतः सिद्ध्यन्ति, तथैव त्रिगुणात्मकत्वात् सर्वेऽपि प्राकृतिकाः पदार्थाः परि-णामिनः। यथा चित्ते धर्मलक्षणावस्थाभेदेन परिणामत्रयम्, तथैव समस्ते-

ष्वपि स्थूलसूक्ष्मभूतेषु इन्द्रियेषु च धर्मधर्मिभावतो धर्मलक्षणावस्थानामानस्त्रिविधाः परिणामा बोद्धव्याः। यथा पृथ्वीरूपधर्मिणि घटरूपविकारो धर्मपरिणाम आख्यायते, यतस्तत्र पिण्डाकार-धर्मतिरोभावपूर्वकं घटाकारभावः प्रादुर्भवति। घटस्य अनागतलक्षण-त्यागपुरस्सरं वर्तमानलक्षणवतो घटरूपधर्मस्य 'लक्षणपरिणामः', अथ च वर्तमानलक्षणवतो घटस्य नूतनत्वं क्षणे क्षणे च पुरातनत्वम् 'अवस्थापरिणाम'नामतो व्याख्यायते। अयमेव भूतेषु त्रिविधपरिणाम-दृष्टान्तोऽवधेयः।

एवमेव इन्द्रियेष्वपि विमर्शोऽनुष्ठेयः। इन्द्रियाणां नीलादिविषयपरिज्ञानं धर्मपरिणामः। नीलादिज्ञानस्य या हि वर्तमानलक्षणवत्ता स्वीकृतिः, तन्नाम लक्षणपरिणामः। वर्तमानदशायां तदस्फुटत्वं स्फुटत्वं च, तन्नाम अवस्थापरिणाम इति।

एवमेव अन्तःकरणस्य पूर्वोक्तत्रिविधपरिणामवत् स्थूलसूक्ष्मेषु समस्तभूतेषु इन्द्रियेषु च त्रिविधः धर्मलक्षणावस्थानामानः परिणामा बोभूयन्ते।

वस्तुत एक एव परिणामो धर्मधर्मिभेदेन अनेकधा विभिद्यते। अर्थात् धर्म एव रूपान्तरं प्राप्नोति। सुवर्णमयपात्रं त्रोटयित्वा तेनैव अलङ्काराणां पदार्थान्तरस्य वा निर्माणरूपपरिणामेन केवलं पदार्थस्वरूपे एव परिवर्तनं जायते, सुवर्णस्वरूपे नाणीयानपि भेद इति।

ननु एकस्मिन्नेव व्यक्तिविशेषे भूत-भविष्यद्-वर्तमानलक्षणसम्भवाद् अध्वसङ्कारता-दोषः सम्भवेत्?

समाधत्ते—ते परिणामा एकस्मिन्नेव काले न जायन्ते, प्रत्युत यथाक्रममेव सम्भवन्ति। यथा कुत्रापि मानवे रागोत्पत्तिदशायां क्रोधो नास्तीति न वक्तुं शक्यते। तथापि राग-क्रोधयोः समकालम् आविर्भावो न दृश्यते। यथा कश्चित् कामुकः कस्यामपि स्त्रियामनुरक्तः अन्यस्त्रीषु विरक्ततां न व्रजति, तथैव पूर्वोक्तपरिणामेषु सङ्करदोषो न भवितुं शक्नुयात्। यतः परिणामः किल धर्मिणो धर्म एव, न धर्मलक्षणे सम्भवः, धर्मपरिणामस्तु एक एवेति॥ १३॥

यत्र धर्मे एतावन्तः परिणामास्तल्लक्षणमुच्यते—

**शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥**

शान्तोदिताव्यपदेश्यापरपर्याय-भूत-वर्तमान-भविष्यद्धर्मेषु अनुपाती अनुगतो धर्मी बोद्धव्यः। स्वीयकार्यमनुष्ठाय अतीतमार्गे प्रविष्टः 'शान्त' उच्यते। अर्थात् वर्तमानकाले नैव तेन किमपि क्रियते, न वा भविष्यति तस्य किमपि कर्तव्यमवशिष्यते। भग्नो घटः, अङ्कुरितं वा बीजं निदर्शनमत्र अवधेयम्। मृत्पिण्डस्य शान्तधर्मो घटः, अङ्कुरस्य च शान्तधर्मो बीजम्। यश्च भविष्यति न प्रकटितः, किन्तु वर्तमाने मार्गे स्वीयं विधेयमनुतिष्ठति, स 'उदित'संज्ञां लभते। यथा घटकाले घटः, बीजकाले च बीजम्; उभावपि उदितधर्माणौ बोद्धव्यौ। मृत्पिण्डे बीजे वा या किल प्रच्छन्ना शक्तिः, यया च भविष्यत्काले मृदा घटो बीजाच्च वृक्षः समुत्पद्यते, सैव 'अव्यपदेश्य'धर्माख्यया समाम्नाता। अथवा सञ्चिते धने शक्तिरस्ति, किन्तु न तया किमपि कार्यं सम्पद्यते, साऽपि अव्यपदेश्य-धर्मस्वरूपिणी।

नियमितकार्यकारणरूप-शक्तिसंयुक्तो धर्मः, तत्त्रिविधधर्म-ग्रहणशीलश्च धर्मी प्रोक्तः। यथा मृत्तिकारूपेण धर्मिणा प्रथमं चूर्णरूपो विकारः समुत्पद्यते, ततश्च पिण्डरूपता, ततो नु च घटस्वरूपता। निर्माणमापद्यमानेन चूर्णेन निर्मितं वर्तमानदशाप्राप्तं मृत्पिण्डम् अतीतावस्थावता चूर्णेन, अनागतावस्थावता घटेन विभिन्नतां भजति, परन्तु तत् मृत्तिकातो न विभिद्यते; यतः सा सर्वत्र उपादानरूपेण तिष्ठत्येव। अतश्चूर्ण-पिण्ड-घटरूपाणां धर्माणां विभिन्नत्वेऽपि अभिन्नरूपेण सर्वत्रैवानुगता मृत्तिका धर्मिशब्दवाच्या।

सूत्रस्यैतस्य प्रयोजनमिदं यत् सिद्धिं समीहमानो योगी संयमक्रियायां प्रवर्तमानो धर्मधर्मिणोरन्योन्यभिन्नतामवधारयेत्। अन्यथा धर्मधर्मिभावपार्थक्यबोधाभावेन भ्रमाच्च अन्योन्यसम्बन्धपरिज्ञानेन संयमसमुत्पन्ना ज्ञानदृष्टिर्विनश्येत्। विपदैतया योगिनं रक्षयितुमेव एतत्सूत्राविर्भाव इति॥ १४॥

एकस्य धर्मिणोऽनेकपरिणामोत्पत्तिहेतुं ब्रूते—

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

क्रमभेद एव परिणामभेदे हेतुः। धर्मिण एक एव परिणामः सर्वेऽपि वा परिणामाः समकालमुत्पद्यन्ते इति मीमांसायाम् एतत्सूत्राविर्भावः। क्रमपरिवर्तनेन परिणामपरिवर्तनमपि अवश्यम्भावि । यथा पूर्वं मृत्परमाणवः, पुनश्च मृत्पिण्डम्, तेन च घटोत्पत्तिः। पुनर्घटस्य भेदे कपालः, तेन च कपालखण्डाः, ते च पुनः परमाणुरूपं धारयन्तो मृत्स्वरूपं लभन्ते। तथैव पूर्ववृत्तिः उत्तरवृत्तेः पूर्वकारणत्वं भजन्ती क्रममनुसृत्य धर्मान्तरपरिणामं धारयति।

घटस्य अनागतभावापेक्षया वर्तमानभावः 'क्रमः' प्रोच्यते। वर्तमानभावाद् अतीतभावोऽपि क्रम एव। परन्तु अतीतभावस्य क्रमो नास्ति, यतः क्रमोऽसौ पूर्वापरसम्बन्धं निर्विभर्ति। घटपरिणामवत् पूर्वसूत्रोक्तानाम् अतीतादिपरिणामानां हेतुः क्रमपरिणाम एव ज्ञातव्यः। अर्थात् प्रकृतितरङ्गपरिवर्तनम्, अन्तःकरण-सुखदुःखादिधर्मपरिवर्तनं चोभयमेव क्रमनियमं निर्विभर्ति ॥ १५ ॥

संयमलक्षणं तद्विधिं च निरूप्य संयमोत्पन्नसिद्धयो वक्ष्यन्ते—

## परिणामत्रयसंयमादतीतानागतज्ञानम् ॥ १६ ॥

पूर्वप्रतिपादितेषु धर्म-लक्षणा-ऽवस्थापरिणामेषु संयमेन अतीतस्य अनागतस्य च परिज्ञानं योगिनो जायते। संयमस्वरूपमुक्तपूर्वम्। एवं हि सिद्धिं कामयमानेन साधकेन त्रिषु अपि परिणामेषु संयममनुतिष्ठता कालज्ञानं समासाद्यते । अर्थात् धर्मपरिणामसंयमेन भूतज्ञानम्, लक्षणपरिणामसंयमेन वर्तमानज्ञानम्, अवस्थापरिणामसंयमेन च भविष्यत्कालज्ञानं समधिगत्य योगी त्रिकालदर्शी भवितुमर्हति, सदसद्विषयं चानुसन्दधानो भाविनः प्रत्यूहान् अपाकर्तुं तीव्रं पुरुषार्थमाचरन् दृष्टं कर्म स्रष्टुमर्हति।

उक्तं चापि—

"सर्वास्वभ्युदयस्यापि वीजेषु योगसिद्धिषु ।
सत्सायुज्यदशाप्राप्तौ बाधिकास्ता न साधिकाः ॥" इति ।

तात्पर्यमिदं यत् सिद्धयो मुमुक्षूणां कृते बाधिका एव, न साधिकाः । ताभिः सकामसाधकस्य अभ्युदयोऽवश्यम्भावी । अन्यच्च, ताः प्रबलयोगान्तरायविनाशे समर्थाश्च । त्रिकालज्ञानाधिगमेन सर्वेऽपि योगविघ्ना निराकर्तुं शक्यन्ते । सिद्धिषु त्रिकालज्ञानस्य सर्वोत्कृष्टत्वात् तद्वर्णनं प्रागेव समनुष्ठितम् ॥ १६ ॥

द्वितीयां सिद्धिं व्याचष्टे—

**शब्दार्थप्रत्ययानामितरेतराध्यासात् सङ्करस्तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम् ॥ १७ ॥**

शब्दश्च अर्थश्च प्रत्ययश्च तेषामितरेतराध्यासात् सङ्करो घनिष्टं सम्मिलनम् , तत्र संयमेन सर्वप्राणिनां रुतस्य परिज्ञानं जायते ।

शब्दार्थप्रत्ययविवेकतो वाणी किल अक्षरेष्वेव अर्थयुक्ता वोभवीति । यतो वास्तविकीम् अक्षरयोजनामन्तरेण न शब्दार्थः स्फुटीभवति । श्रोत्रं वाक्यध्वनिमाकर्ण्य तं निजान्तःकरणे प्रवेशयति, ततश्च बुद्धिर्ध्वनिक्रमाववोधेन शब्दार्थं गृह्णाति । न च शब्दाक्षराणि समकालमेव उत्पद्यन्ते । प्रथमाक्षरे स्वाववोधमुत्पाद्य प्रणष्टे द्वितीयमक्षरमाविर्भवति । एवमेव प्रत्येकाक्षरस्य आविर्भावः । सर्वाण्यपि अक्षराण्येतानि स्वीयैः सहकारिभिः अक्षरैः सम्वध्नन्ति ।

यथा 'गौः' इत्युच्चरितशब्दे गकारः, औकारो विसर्गश्चेति त्रयः स्व-स्वक्रमोच्चरिताः सन्तः शब्दस्वरूपं धृत्वा स्वीयां शक्तिं परस्परं मेलयित्वा यं किलैकं ध्वनिविशेषं समुत्पादयन्ति, तेनैव ध्वनिविशेषेण जीवविशेषस्य परिज्ञानं जायते । यथा प्रत्येकाक्षरीय-ध्वनिव्यष्टितः समुत्पन्नसमष्टिरूपगोशब्दस्य ध्वनिना सम्वन्धस्तथैव गोशब्दध्वनिना गोरूपस्य जीवस्यापि

सम्बन्धः। अर्थात् गोशब्दोच्चारणमात्रेणैव गोस्वरूपस्य प्राणिनो बोधो जायते। 'गामानय' इत्युक्तः कोऽपि मूर्खो गोरूपशब्दश्रवणद्वारा शीघ्रमेव गामानयति। परन्तु गोशब्दे कियन्तो वर्णाः सन्तीति पृष्टोऽसौ नैव किञ्चिदुत्तरति। यथा व्यष्टिरूपवर्णस्य ध्वनिना सम्बन्धस्तथैव समष्टिरूपशब्दध्वनिना शब्दज्ञानसम्बन्धः। अतः शब्दे अक्षरे ज्ञाने च परस्परमभेदात् शब्दविभागे संयमस्यानुष्ठानेन योगिना सर्वभूतरुतज्ञानं कर्तुं शक्यते।

यथा मानवो जीवविशेषस्तथैव अन्येऽपि प्राणिनः। मानवे तु ज्ञानाधिक्यरूपो भेदः। यथा मनुष्यो वाचा स्वीयामन्तर्वृत्तिं प्रकाशयति, तथैवान्येऽपि प्राणिनः। यथा अङ्गस्फुरण-छिक्काप्रभृतिभिः प्राकृतैरिङ्गितैर्जीवस्य भविष्यज्ज्ञानं जायते, तथैव नानाजीवोच्चरित-ध्वनिद्वारेणापि भविष्यज्ज्ञानं बोभूयते। यथाकालं जीवैर्ज्ञानकृताः स्वकीया मनोवृत्तयः प्रकाश्यन्ते, परन्तु बुद्धेरभावाद् बहिःप्रकृतिशक्तिवशीभूतास्ते यथासमयं प्राकृतिकानि इङ्गितानि प्रकाशयन्ति। इयं हि प्रकृतीङ्गितप्रकाशशक्तिः गुणभेदमनुसृत्य विशिष्टेषु प्राणिषु विशिष्टस्वरूपेण बोभवीति। अतो जीवोच्चारितध्वनिविभागसंयमेन योगिभिः प्राणिनः स्वाभाविकेन ध्वनिना तदीयान्तःकरणभावो ज्ञायते, अस्वाभाविकेन च ध्वनिना भविष्यन्तीनां घटनावलीनामनुमानं क्रियते।

स्वाभाविकास्वाभाविकभेदेन मनुष्योच्चारितशब्दो द्विविधः। प्रणवो बीजमन्त्रादयश्च स्वाभाविकाः, अन्ये च लौकिकाः साधारणशब्दा अस्वाभाविकाः परिज्ञेयाः। इयानेव भेदो यद् अन्तःकरणानुभूताः प्रणवादिशब्दाः, किं वा अन्तःकरणभावद्वारा विशिष्टस्वभावतः प्राकट्यमुपगताः शब्दाश्च स्वाभाविका बोद्धव्याः। बाह्यविषयमनुभूय तदर्थयोग्य-शब्दनिर्माणपूर्वकं व्यवहारसमागता गोप्रभृतिशब्दा अस्वाभाविकाः। पूर्वत्र प्रत्ययस्वरूपज्ञानस्य भावस्य वाऽनुभवः आभ्यन्तरविषयतः सम्पद्यते। द्वितीये तु शब्दसृष्टिकाले विषयानुभवो बाह्ये जगति बोभूयते।

परन्तु ज्ञानम्, अर्थः, शब्दश्च अथवा भावो वृत्तिः शब्दश्चेति क्रममनुसृत्य शब्देन तत्सम्बन्धयुक्तभावस्य ज्ञानस्य वा बोधो जायते।

मानवोच्चारितशब्दस्य ध्वनिवैचित्र्यसंयमेन तत्क्षणमेव योगिभिः मानवचित्तस्यानेके भावा एकस्यैव शब्दस्य विभिन्नोच्चारणपद्धत्या अवगम्यन्ते। अस्वाभाविके शब्द एव नियमोऽयं सम्भवति। विविधजीवजन्तुशब्दा अपि तथैव बोद्धव्याः।

अन्ये प्राणिनो यदा कामक्रोधादिजनित-स्वीयस्वाभाविकदशायां विद्यमाना यं शब्दमुच्चारयन्ति, स हि तेषां स्वाभाविकः शब्दः। यदा च ते समष्टिप्रकृतिप्रेरणया विशिष्टे देशे काले च शब्दविशेषमुच्चारयन्ति, तदानीं तेषामयमस्वाभाविकः शब्दः। एतैरेवास्वाभाविकैः शब्दैः शकुनादीनां सम्बन्धः शास्त्रेषु निर्धारितः। यथा मानवानां स्वाभाविकेऽस्वाभाविके च शब्दे संयमेन शब्दार्थप्रतिपादकज्ञानस्य शब्दद्वारा प्रणोदितभावस्य वाऽनुभवो लोकैः क्रियते, तथैव विविधप्राणिनां तदीयस्वाभाविकशब्दं द्वारीकृत्य तदन्तःकरणभावपरिज्ञानं किं वा तदीयास्वाभाविकशब्दद्वारा मूलप्रकृतेः इङ्गितज्ञानं योगिना कर्तुं शक्यते। शब्दस्य गुरुत्व-लघुत्व-देशकालोच्चारणरीत्यादिभिः साकं चित्तसंयममनुतिष्ठता पूर्वोक्तसन्धिषु जीवप्रकृतौ संयममारोपयता च योगिना साधकेन सकलजीवभाषा-परिज्ञानं क्रियते ॥ १७ ॥

तृतीया सिद्धिर्निर्दिश्यते—

**संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् ॥ १८ ॥**

संस्काराणां प्रत्यक्षेण पूर्वजातिज्ञानं सञ्जायते।

पूर्वजन्मसंस्काराः प्रबला मन्दाश्चेति द्विविधाः। यान् द्वारीकृत्य कर्मविपाकाः समुपस्थाय प्रसह्य कर्माणि कारयन्ति, ते प्रबला ज्ञातव्याः। ते च संस्कारा मन्दाः परिज्ञातव्याः, येषां द्वारेण इच्छारूपिणी वासना समुपस्थाय जीवान्तःकरणे क्लेशमुत्पादयति। पूर्वजन्म-कर्मफलस्वरूपेषु संस्कारेषु संयमेन पूर्वजन्मज्ञानम्, परसंस्कारसंयमेन च परजन्मज्ञानं योगिना कर्तुं शक्यते। यतः संस्काराः कर्मजन्याः, अर्थात् ते किल कृतकर्मणां छायारूपचिह्नविशेषाः।

यथा वैज्ञानिकाः यन्त्रद्वारा मानवानां छायारूपचिह्नानां धारणशक्ति समुत्पाद्य 'फोटोग्राफ'-नाम्नि यन्त्रे मनुष्यमूर्तिं यथावत् प्रकाशयन्ति, तथैव योगिजनैरपि संस्कारेषु संयमेन संस्कारकारणरूपाणां कर्मणां याथातथ्येन परिज्ञानं कर्तुं पार्यते।

यथा वा वटवीजे वटवृक्षस्य सर्वोऽप्याकारः अप्रकाशितरूपेण वर्तते, तथैव कर्मबीजस्वरूपसंस्कारेषु कर्मणां सम्पूर्णमपि स्वरूपं निहितं तिष्ठति। अतो योगिनो यदि स्वीयां ज्ञानशक्तिं द्वारीकृत्य मानवीयवर्तमानजीवनपर्यालोचनां कुर्वन्तः तदीयजीवनस्वरूपाणि अङ्कुरितकर्माणि तदीया वृत्तीर्वा अवलोक्य समन्विष्टसंस्कारेषु संयमेन तत्पूर्वजातिपरिज्ञानं कर्तुं शक्नुवन्ति।

यथा वृक्षाद् वीजं वीजाच्च वृक्षः समुत्पद्यते, तथैव संस्कारकर्मणां कार्य-कारणपरम्परा वोध्या। विवेकतः समन्विष्यमाणसंस्कारेषु संयमः अर्थात् केन कर्मणा संस्कारोऽयं समुत्पन्न इति विवेको योगिनोऽन्तःकरणे स्वयमेव उदेति॥ १८॥

चतुर्थीं सिद्धिं व्याहरति—

## प्रत्ययस्य परचित्तज्ञानम्॥ १९॥

प्रत्ययस्य = ज्ञानस्य, संयमेन परकीयचेतसो ज्ञानं जायते। सर्वाण्यपि अन्तःकरणानि समानजातीयानि। सर्ववस्तुपरिज्ञानं च ज्ञानेनैव जायते। अन्तःकरणस्थं सर्वमपि ज्ञानं सजातीयमेव। केवलमहङ्कारेणैव स्वतन्त्रवत् प्रतिभाति। एतेनैव कारणेन एकस्य ज्ञानस्य परकीयज्ञानग्रहणे सामर्थ्यं न दृश्यते। परन्तु ज्ञाने संयममनुतिष्ठन् योगी स्वीयान्तःकरणं परकीयान्तःकरणसम्वद्धं विधाय परेषामन्तःकरणभावं ग्रहीतुं शक्नोति।

एवं वुद्धिसंयमेन योगिना परचित्तज्ञानं कर्तुं शक्यते। स्वरूपज्ञानं परमात्मसम्वद्धम्, तटस्थज्ञानं तु जीवान्तःकरणसम्वद्धं विज्ञेयम्। स्वरूपज्ञानम् आत्मस्वरूपधर्मः, तटस्थज्ञानं च जीवान्तःकरणधर्मः। अन्तःकरणस्य मनोवुद्धिचित्ताहङ्काराख्य-चतुर्विभागसत्त्वेऽपि वुद्धेः प्राधान्यमास्ते। अतोऽन्तःकरणे ज्ञानव्यापकता नित्यं स्थिता। तटस्थज्ञाने त्रिपुटेः स्वाभाविक-

सम्बन्धस्य विद्यमानतया जैवान्तःकरणगुणपरिणामम् अनुसृत्य अन्तःकरणावच्छिन्नज्ञानस्थितिः। फलतः कस्यापि जीवविशेषस्य अन्तःकरणभावं जिज्ञासमानो योगी तदीयज्ञानविशेषे संयमं विदधन् योगयुक्तः तज्जीवान्तःकरणवृत्तान्तं ज्ञातुमर्हति ॥ १९ ॥

तत्र वैशिष्ट्यं प्रदर्शयति —

**न च तत्सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥**

ज्ञानसंयमेन परचित्तज्ञानं जायत इति पूर्वसूत्रे प्रतिपादितम्। परन्तु एतत्सूत्रेण सूत्रकृन्महर्षिः स्पष्टयति यत् तेन परकीयचित्तपरिज्ञाने जातेऽपि न सर्वांशतः पूर्णरूपेण परकीयान्तःकरणज्ञानं सम्भवति। तेन समष्टिरूपान्तःकरण-साधारणज्ञानमुदेति। परन्तु विशेषज्ञानस्य कृते स्थानान्तरेऽपि संयमस्य प्रयोजनीयता समापतति।

योगी यदा संयमं द्वारीकृत्य परकीयमन्तःकरणं प्रविशति, ततश्च स्वीयं संयमं विस्तारयति, तदैवाऽसौ सुविस्तृतं ज्ञानं कर्तुमर्हति। सुतरां योगपरायणः साधकः प्रथमं ज्ञानसंयमद्वारा परकीयमन्तःकरणं प्रविशति। पुनस्तद्विषयेषु संयमं कुर्वाणः परकीयचित्तस्य सुविस्तृतं परिज्ञानं कर्तुं पारयति। 'एतेन व्यक्तिविशेषेण एतत् पापकर्म कृतं न वे'ति परिज्ञातुमिच्छुर्योगी तद् व्यक्तिज्ञानसंयमेनैव ज्ञातुं शक्नोति। परन्तु यद्यसौ तस्य पापनिरतव्यक्तिविशेषस्य पापकर्मसम्बन्धे देश-काल-पात्रविचारतः समधिकं ज्ञातुमीहेत चेत्तर्हि तत्कर्मसम्बन्धयुक्तविषयान्तरेषु च संयमवान् भवेत् ॥ २० ॥

पञ्चमीं सिद्धिं प्रतिपादयति—

**कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगेऽन्तर्धानम् ॥ २१ ॥**

कायरूपसंयमेन तद्ग्राह्यशक्तिस्तम्भे जाते परकीयचक्षुःप्रकाशस्य असम्प्रयोगात् योगिनोऽन्तर्धानं जायते। पाञ्चभौतिकमिदं शरीरं रूपव-

न्नेत्रजन्यज्ञानविषयम्। अर्थात् रूपद्वारैव शरीरं चक्षुर्ग्राह्यं भवति। अतः स्वीयशरीरगतरूपे संयमेन तदीयशरीरग्राह्यशक्तिर्नान्यस्य नेत्रपथमायाति। एवंप्रकारतो यदा द्रष्टुर्दृक्शक्तिः स्तम्भिता जायते, स्वयमसौ द्रष्टा नामुं योगिनं द्रष्टुं पारयति। अतः स्वीयकायरूपसंयमेन योगी परकीयदृष्टितोऽन्तर्दधाति।

संसारेऽत्र दृक्शक्तिस्तम्भनप्रक्रिया प्रायशो दृश्यते। कदा चिद् उन्मीलितनेत्रोऽपि पुमान् स्तम्भितदृष्टिशक्तिर्न किञ्चिदपि समीक्षते। ऐन्द्रजालिकक्रियासु प्रायः एतद् विलोक्यते। इन्द्रजाल-क्रीडाप्रदर्शकः अनेकपदार्थसंयोग-वियोगरूपिणीं क्रियां प्रदर्शयन् इन्द्रजालविद्यया दर्शकदर्शनानि स्तम्भयति, येन द्रष्टारो नैव तत्तत्पदार्थसंयोग-वियोगकार्यकलापान्वेषणे समर्था भवन्ति। यदा इन्द्रजालस्य साधारणप्रक्रियया दृष्टिशक्तिः स्तम्भिता जायते, तदानीं योगिराजमहात्मनां संयमक्रियया किं न भवितुमर्हति ?

यथा रूपविषयकसंयमेन योगिनः शरीरस्वरूपं नैव केनापि द्रष्टुं शक्यते, तथैव शब्दविषयकसंयमेन श्रोत्रग्राह्यशक्तिरपि स्तम्भिता जायते, येन श्रोत्रस्य शब्दसन्निकर्षात् योगिनः समुच्चरितशब्दमपि न कोऽपि श्रोतुमर्हति। एवमेव स्पर्श-रस-गन्धविषयेऽप्यवधेयम्। सुतरां शब्दादिपञ्चविषयसंयमेन योगिनः शरीरस्य शब्द-स्पर्श-रूप-रस-गन्धविषयानपि समीपस्थः पुरुषो न द्रष्टुमर्हति ॥ २१ ॥

षष्ठी सिद्धिः प्रस्तूयते—

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा ॥ २२ ॥**

सोपक्रमं निरुपक्रमं च द्विविधं कर्म, तत्संयमाद् अपरान्तस्य मृत्योर्ज्ञानं जायते। वा = किं वा। त्रिप्रकारकेभ्यः अरिष्टेभ्योऽपि वा तत्सम्भवति।

प्रथमपादीयसूत्रैः कर्मविपाकतो ह्यायुषः स्थिरत्वं प्रतिपादितम्। येन कर्मफलेन आयुः स्थिरीक्रियते, तत् सोपक्रम-निरुपक्रमभेदेन द्विविधम्। यथा आर्द्रवस्त्रतो जलीयांशनिस्सारणेन तद्वस्त्रं शीघ्रं शुष्कतामेति, यथा

च शुष्ककाष्ठेषु पावकप्रक्षेपेण काष्ठानि द्रुतमेव भस्मीभवन्ति, तथैव यानि कर्माणि अतितीव्रतया त्वरितमेव फलमाविर्भावयन्ति, तानि 'सोपक्रम'संज्ञां लभन्ते। यथा च जलार्द्रीभूतं पिण्डीकृतं च वस्त्रं वहोः कालात् शुष्कत्वं प्रयाति, यथा वा आर्द्रेन्धनसमूहो वह्निप्रक्षेपेण वहुसमयानन्तरं भस्मतां प्रपद्यते, तथैव ये कर्मविपाकाः मन्दतया विलम्बेन फलं प्रयच्छन्ति, ते 'निरुपक्रम'संज्ञां लभन्ते। द्विविधेऽपि कर्मविपाकेऽत्र संयमेन मृत्युः कदा कुत्र कया रीत्या वा भावीति योगिना सर्वं ज्ञातुं शक्यते।

सहजम्, ऐशम् जैवं चेति त्रिविधं कर्म मीमांसाशास्त्रे स्वीकृतम्। सहजम् ऐशं चेति कर्मद्वयं मनुष्यजीवने परम्परया उपयोगितां प्रपद्यते। जैवमेव स्वाधीनं मानवीयं कर्म।

सञ्चित-क्रियमाण-प्रारब्धभेदेन जैवमपि त्रिविधम्। सञ्चितकर्मसम्बन्धो भविष्यत्कालगर्भे निभृतस्तिष्ठति। प्राधान्येन प्रारब्धे कर्मणि गौणतया च क्रियमाणकर्मणि आयुर्निर्णयार्थं योगिभिः संयमः क्रियते। प्रबलमेव क्रियमाणं कर्म सदसत्स्वरूपमायुर्वर्धयति सङ्कोचयति वा। अन्यथा दुर्वलं क्रियमाणं कर्म सञ्चिते कर्मणि सम्मिलति। अतो मनुष्याणां कानि क्रियमाण-कर्माणि प्रबलानि सन्तीति तद्गतौ संयमः क्रियते। अथ च मानवजीवने प्राकट्यमुपगच्छतः प्रारब्धकर्मणो लाघवं गौरवं चानुशीलयता योगिराजेन यदि संयमः क्रियते, तर्हि मानवीयमायुर्निर्धारयितुं शक्यते। यथा च पूर्व-ज्ञाने, ततश्च विशिष्टवृत्तिषु संयमेन जैवान्तःकरणभावः परिज्ञायते, तथैव प्रारब्धकर्मणि प्रबलक्रियमाणकर्मणि च संयमेन मृत्युकालो निश्चीयते योगिना। तदनन्तरं च तदीयानुषङ्गिक-सूक्ष्मतायां विचारपूर्वकसंयमेन मृत्युकालिक्या अवस्थाया गतेश्च ज्ञानं क्रियते।

यथा सोपक्रम-निरुपक्रमरूप-कर्मविपाकसंयमेन योगिभिः साधकैर्मृत्यु-ज्ञानं क्रियते, तथैव तेन आध्यात्मिका-ऽऽधिदैविका-ऽऽधिभौतिकेषु अरिष्टे-ष्वपि संयमेन मृत्युज्ञानं कर्तुं शक्यते।

आध्यात्मिकेन अरिष्टेन ज्ञानेन्द्रियशक्तौ आन्तरिकी निर्बलता समा-गच्छति। उदाहरणस्वरूपतः शास्त्रेष्वेवं प्रतिपादितमुपलभ्यते यत् श्रोत्रे-

न्द्रिये पिहिते यः शब्दध्वनिरेकः श्रूयते, स नैव श्रुतिगोचरः स्यात्, नेत्रेन्द्रिये च पिहिते बहूनि अन्तर्ज्योतींषि दृश्यन्ते, तानि न दृष्टिगोचराणि स्युः" इत्यादिकमान्तरिकशक्तिहीनतारूपम् आध्यात्मिकमरिष्टं विज्ञेयम्। कारणमन्तरेणैव यदि यमदूताः पितरश्च दृष्टिगोचरतामापद्येरन्, तदाऽलौकिकलक्षणमेतद् आधिदैविकमरिष्टमवधेयम्। एवं किल कारणविशेषाभावेऽपि यदि सुखप्रदलोकानां दिव्यदेवशरीराणां च दर्शनं स्यात्, तर्हि तत्तद्दैवलक्षणान्यपि आधिदैविकारिष्टेऽन्तर्भवन्ति। दैहिकव्याधिविशेषलक्षणानि, आहारव्यवहारविशेषलक्षणानि चाधिभौतिके अरिष्टेऽन्तर्गतानि। एवमेव बलवतो निर्बलत्वं स्थूलकायस्य चातिकृशत्वमित्यादीनि लक्षणान्यपि आधिभौतिकारिष्टेऽन्तर्भवन्ति।

आध्यात्मिकाधिभौतिकाधिदैविकारिष्टेषु संयमेन मृत्योर्ज्ञानं जायते। परन्तु अरिष्टान्येतानि मृत्युकाले निकटवर्तिन्येव दृश्यन्ते। अतस्ततो बहुकालात् पूर्वं मृत्युज्ञानं न सम्भाव्यते। परन्तु पूर्वोक्तसोपक्रम-निरुपक्रम-विपाकसंयमेन यथेच्छं योगिना मृत्युज्ञानं कर्तुं पार्यते इति विवेकः॥ २२॥

सप्तमी सिद्धिर्वर्ण्यते—

## मैत्र्यादिषु बलानि॥ २३॥

मैत्र्यादिषु संयमेन बलानि प्राप्यन्ते। मैत्री, मुदिता, करुणा, उपेक्षेति चतस्रो मानसिक्यो भावना अभ्यर्हिताः समाम्नाताः। धर्मात्मनि मैत्री, सुखिनि मुदिता, दुःखिजने करुणा, पापपरायणे चोपेक्षा योगिभिरनुष्ठेयेति पूर्वमेव प्रतिपादितम्। एवमभ्यस्यन् योगी योगमार्गेऽग्रेसरति। चतसृष्वपि संयमेन साधको योगी क्रमशो मैत्रीबलम्, मुदिताबलम्, करुणाबलम्, उपेक्षाबलं च समधिगच्छति। तदानीं योगिनोऽन्तःकरणे न किमपि प्रतिबन्धनं स्थातुमर्हति।

आत्मबलं किल सर्वबलमूलमाम्नातम्। "नायमात्मा बलहीनेन लभ्यः" इति श्रुतिरपि आत्मज्ञाने आत्मबलं सर्वोपरि मन्यते। एतादृगात्मज्ञानाधिगमाय यस्यात्मबलस्य आवश्यकत्वम्, तद्धि विशुद्धं तेजः प्रतिपाद्यते।

या किल शक्तिरन्तःकरणस्य इन्द्रियाभिमुखतां निवारयन्ती अन्तःकरणं स्वरूपाभिमुखं प्रकुरुते, सैव तेजः आत्मबलं वा प्रणिगद्यते। पूर्वोक्तश्रेणीनां शुद्धशक्तिषु संयमं विदधतः, तासु च नैजमन्तःकरणं प्रतिष्ठापयतो योगिनः न कदापि कथमपि केनापि तच्चित्तमधः पातयितुं शक्यते। एतदात्मबलं योगिना समधिगम्यते ॥ २३ ॥

अष्टमीं सिद्धिं वर्णयति—

## बलेषु हस्तिबलादीनि ॥ २४ ॥

बलेषु संयमेन हस्तिबलादीनि प्राप्यन्ते। बलं द्विविधम्—आत्मिकं शारीरिकं च। आत्मबलप्राप्तिसिद्धिः पूर्वं निरूपिता। इदानीं स्थूलदैहिक-बलप्राप्तिसिद्धिर्वर्ण्यते। समानमेकरूपमपि बलं प्रकृतिभेदाद् भिद्यते। सिंहानां करीणां खेचरपक्षिणां जलचरग्राहादीनां च बलं प्रकृतिमनुसृत्य भिद्यते। यादृशबलस्य आवश्यकत्वम्, तादृशप्राणिबलेषु संयमेन तथा-विधं बलमधिगम्यते। वायोः सर्वबलाधारत्वात् तत्र संयमेन बलाधिक्यं प्राप्यते। वायुसंयमस्य परमहिताधायकत्वेऽपि विशिष्टपशुजातीयबलाधि-गमाय तत्पशुबलदशापर्यालोचनपूर्वकं तत्तत्पशुविशेषबलेषु संयमेन योगिना गजसमानबलमधिगम्यते ॥ २४ ॥

नवमीं सिद्धिं निर्णयति—

## प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥

प्रथमपादे प्रतिपादितायाः साम्यावस्थायुक्ताया ज्योतिष्मत्याः प्रवृत्तेः प्रकाशं सूक्ष्मादिवस्तुषु विन्यस्य तत्र संयमेन सूक्ष्म-गुप्त-दूरस्थपदार्थाना-मवबोधो जायते। पूर्णप्रकाशस्वरूपस्य सत्त्वगुणस्य परिपूर्णप्रकाशेन पूर्णं ज्ञानमुदेति। अतः सात्त्विके तेजसि संयमेन तत्साहाय्येन च योगी, अति-गुप्तातिसूक्ष्मातिदूरस्थानामपि पदार्थानां सम्यग् बोधमनुष्ठातुं प्रभवति। अर्थात् सात्त्विकप्रकाशरूपा ज्योतिष्मतीप्रवृत्तिरेव साम्यावस्थारूपसत्त्व-गुणस्वरूपिणी। तत्साहाय्येन चान्विष्यन् योगी साधकः सूक्ष्मातिसूक्ष्मं

परमाणुमपि द्रष्टुमर्हति। भूमौ निहितान् अतिगुप्तपदार्थानपि परिज्ञातुं शक्नोति। अतिदूरवर्तिवस्तून्यपि विज्ञातुं प्रभवति।

योगसाधनस्य क्रियासिद्धांशमनुसृत्य मन्त्र-हठ-लय-राजाख्याभिर्योग-साधनं चतुर्धा विभक्तम्। मन्त्रयोगे मनःकल्पितमूर्तिध्यानम्, हठयोगे मनः-कल्पितस्य स्थूलज्योतिषो ध्यानम्, लययोगे विशिष्टसाधनानि द्वारीकृत्य सत्त्वगुणमयसूक्ष्मप्रकृतिसमुत्पन्न-ज्योतिष्मन्नामविन्दुध्यानम्, राजयोगे च प्रज्ञासमुत्पन्नमात्मध्यानं व्यवस्थापितम्। लययोगप्रतिपादितानि विविध-साधनान्यनुसृत्य स्वीयाभ्यन्तरराज्यशारीरिकद्विदलस्थाने शुद्धं तेजःपूर्णं विन्दुं योगी परिपश्यति। सा किल ज्योतिष्मती प्रवृत्तिः विन्दुरूपेण समाविर्भूता यदा स्थिरायते, सैव विन्दुध्यानस्य सिद्धावस्था।

सकामो योगी स्वीयां समीहामनुसृत्य तद्विन्दुसहायतया स्वशरीर-स्थानां विभिन्नसूक्ष्मनाडीषट्चक्रादीनां नानापीठानां दर्शने सामर्थ्यं लभते। एवं हि सकामोऽसौ योगी यथेच्छं तद्विन्दुविस्तृतिमुपढौकमानः स्वीयसंयमशक्तेः साहाय्येन ज्योतिष्मत्प्रवृत्तिसहयोगितया च अनेकान् गुप्तविषयान् जलमग्नं धरागर्भस्थं विविधं दृश्यसमूहं चावलोकयितुं प्रभवति ॥ २५ ॥

दशमी सिद्धिरुच्यते—

## भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥

सूर्ये संयमेन भुवनज्ञानं जायते। अर्थात् सूर्यस्य द्विविधरूपे संयमात् स्थूलसूक्ष्मलोकानामवगतिर्वोभूयते। प्राधान्येनायं मृत्युलोक एव स्थूलो लोकः, सप्त स्वर्गलोकाः सप्त पातालाख्याश्च सूक्ष्मलोका उच्यन्ते। अन्यान्य-निकटस्थ-ब्रह्माण्डपरिज्ञानमपि सूक्ष्मलोकतो नातिरिच्यते। ऊर्ध्वस्थसप्त-लोकेषु प्रथमो भूर्लोकश्चतुर्धा विभक्तः। स्मर्यते चात्र—

"अहं चतुर्दशानां हि भुवनानां स्वधाभुजः।
पञ्चानां चैव कोषाणां सम्बन्धादद्य वो ब्रुवे ॥

प्राधान्यं देववृन्दस्य श्रूयतां सुसमाहितैः।
दैवसृष्टिरहस्यं स्यात् ज्ञातं येन यथार्थतः॥
ब्रह्मविष्णुमहेशाख्यं त्रिमूर्तिं त्रिगुणात्मकम्।
यदाऽहं पितरो धृत्वा स्वशक्तेरवलम्बनात्॥

आददे सगुणं रूपं तिस्रस्ता एव मूर्तयः।
प्राधान्यं सर्वदेवेषु धरन्त्योऽलं भवन्ति ते॥
ब्रह्माण्डे किल प्रत्येकं मुख्या देवा न संशयः।
आवहन्तस्त्रिदेवाख्यां प्राशस्त्यं यान्ति सर्वथा॥

अस्य मूर्तित्रयस्यास्ते प्रतिब्रह्माण्डवर्तिनः।
नैव भेदो मया सार्धं वस्तुतः कश्चिदप्यणु॥
एतदेवाधिदैवं हि मुख्यं मूर्तित्रयं मम।
प्रोच्यते पितरो विज्ञैः प्रतिब्रह्माण्डमीश्वरः॥

ब्रह्मण्याध्यात्मशक्तिर्मे ह्यधिदैव्यपि भाति वै।
लोकस्रष्टृत्वतो वोऽयं नायकोऽस्ति तथाऽप्यहो॥

तथा शिवेऽधिभूतायामाधिदैव्याञ्च पूर्णतः।
शक्तौ विकासितायां हि सत्यामपि स्वधाभुजः॥
नायको ज्ञानदातृत्वाद् ऋषीणामेव मन्यते।
संविकाशितयोः शक्त्योः पूर्णाध्यात्माधिभूतयोः॥

विष्णौ सत्योस्तथाप्येष वर्तते देवनायकः।
दैवशक्तिकदम्बस्य केन्द्रीभूतो यतोऽस्त्ययम्॥
पितरो वोऽधिकारोऽस्ति स्थूले जगति केवलम्।
पिण्डपुञ्जेऽपि मर्त्यानां पिण्डेष्वेव विशेषतः॥

केवलं ज्ञानिजीवेषु त्वधिकारस्तथाऽस्त्यलम्।
ऋषीणां नात्र सन्देहः किन्तु देवगणस्य वै॥
ब्रह्माण्डानां हि सर्वेषां भागेष्वास्तेऽखिलेषु च।
अधिकारोऽस्त्यतस्तेषां देवानां सर्वमान्यता॥

पितरः पञ्चकोषाश्च भुवनानि चतुर्दश।
समष्टिव्यष्टिरूपायां पिण्डब्रह्माण्डसंहतौ॥
ओतप्रोतस्वरूपेण संतिष्ठन्ते न संशयः।
मम ब्रह्माण्डरूपस्य विराड्देहस्य कल्यादाः॥
लोकाः सप्तोद्ध्र्वगा नाभिमुपर्युपरि सन्त्यहो।
अधोऽधः सप्त वर्तन्ते ध्रुवं नाभिं च संस्थिताः॥
अतः समष्टिरूपेऽस्मिन् ब्रह्माण्डे वै चतुर्दश।
भुवनानि प्रधानानि विद्यन्ते नात्र संशयः॥
पञ्चकोषास्तु तिष्ठन्ति व्याप्ता गौणतयाऽत्र हि।
जीवदेहस्वरूपेषु कोषाः पिण्डेषु पञ्च च॥
प्रधानाः सन्ति तेषां हि सम्बन्धाच्च चतुर्दश।
भुवनान्यप्रधानानि संतिष्ठन्ते निरन्तरम्॥
अतो मे ज्ञानिनो भक्ता ऐशीं शक्तिं समाश्रिताः।
स्वपिण्डेष्वपि तिष्ठन्तः सूक्ष्मैर्नानाविधैर्द्रुतम्॥
संस्थापयितुमर्हन्ति देवलोकैः सहान्वयम्।
अन्यान्यसूक्ष्मलोकेषु निवसन्तोऽप्यतस्तथा॥
संस्थापयितुमर्हन्ति स्वाधिपत्यं स्वधाभुजः।
देवासुरगणाः सर्वे जीवपिण्डेष्वनुक्षणम्॥
पितरः पञ्चकोषा हि सर्वपिण्डप्रतिष्ठिताः।
आवृण्वन्तो विराजन्ते मत्स्वरूपं न संशयः॥
मध्यमासु कनिष्ठासु तथोच्चैर्देवयोनिषु।
सर्वास्वप्यवतिष्ठन्ते पञ्चकोषा न संशयः॥
एतावांस्तत्र भेदोऽस्ति नूनं निम्नासु योनिषु।
पञ्चकोषा विकाशन्ते नैव सामान्यतोऽखिलाः॥
निखिलानां तु कोषाणां मर्त्यपिण्डेषु निश्चितम्।
विकाशः सर्वतः सम्यग् जायते नाऽत्र संशयः॥

ततोऽपि देवपिण्डेषु विकाशन्ते हि शक्तयः।
अधिकं खलु पञ्चानां कोषाणां नात्र संशयः॥

पाञ्चकौषिकभूमीनां समानानां स्वभावतः।
सम्बन्धः सर्वपिण्डानां भूमिभिः सह वर्त्तते॥

ऋषयोऽतो भवन्तश्च ममोपासकयोगिनः।
देवाः शक्तिविशेषैश्च विधातुं शक्नुवन्त्यलम्॥

कार्यं कोषविशेषस्य पिण्डेष्वन्येषु चैकतः।
नैवात्र संशयः कश्चित् सत्यं जानीत सत्तमाः॥

वसन्ति देवाः पितरः ऊर्ध्वलोकेषु सप्तसु।
संतिष्ठन्तेऽसुराः सर्वे ह्यधोलोकेषु सप्तसु॥

तमोमुख्यतया सृष्टेरसुराणां हि सप्तमे।
लोकेऽस्त्यसुरराजस्य राजधानी त्वधस्तने॥

दैव्याः सत्त्वप्रधानत्वात् सृष्टे राजानुशासनम्।
उच्चैर्देवेषु लोकेषु नैवावश्यकमस्त्यहो॥

अस्त्यतो देवराजस्य राजधानी तृतीयके।
ऊर्ध्वलोके स्थिता नित्यं नात्र कार्या विचारणा॥

विशेषतोऽसुराः सर्वे सदा प्राबल्यसञ्जुषः।
कुर्वाणा विप्लवं दैवे राज्ये सृष्टेः प्रबाधितुम्॥

सामञ्जस्यं विचेष्टन्ते नितान्तं सन्ततं बहु।
अतोऽपि देवराजस्य राजधानी तृतीयके॥
ऊर्ध्वलोके स्थिता नित्यं विद्यते पितरो ध्रुवम्।
उन्नतेषूर्ध्वलोकेषु प्रवेशोऽप्यस्त्यसम्भवः॥

असुराणामतोऽप्येषु देवराजानुशासनम्।
नावश्यकत्वमाप्नोति विशेषेण कदा चन॥

विभिन्नोपासकेभ्यो हि स्वरूपं सगुणं धरन्।
सालोक्यं चैव सामीप्यं सारूप्यं पितरस्तथा॥

दातुं मोक्षं च सायुज्यं नानारूपैर्हि सप्तमे ।
ऊर्ध्वलोके तथा षष्ठे विराजेऽहमनुक्षणम् ॥

उन्नतेपूर्ध्वलोकेषु सात्त्विकेपु स्वधाभुजः ।
राजानुशासनस्यातः का वार्ता वर्तते खलु ॥

शव्दानुशासनस्यापि नास्ति तेषु प्रयोजनम् ।
विचित्रो मध्यवर्त्यस्ति मृत्युलोको विभूतिदाः ॥

यथा गार्हस्थ्यमाश्रित्य पुष्टाः स्युः सर्वे आश्रमाः ।
मृत्युलोकं समाश्रित्य भुवनानि चतुर्दश ॥

स्वातन्त्र्यं पूर्णमत्रास्ति कर्मसम्पादने यतः ।
मृत्युलोकप्रतिष्ठाऽतो विद्यते निखिलोपरि ॥

यद्यप्युत्पद्यते मोक्षफलमुद्यान उत्तमे ।
मृत्युलोके न सन्देहस्तद्वीजं किन्तु लभ्यते ॥

आर्यावर्तप्रदेशे हि कर्मभूमिस्वरूपिणी ।
विशुद्धे याज्ञिके रम्ये सर्वर्तुव्रातशोभिते ॥

का वार्ताऽतोऽस्ति देवानामवतारीयविग्रहम् ।
आविर्भवितुमिच्छाम्यप्यार्यावर्तेऽहमाश्रयन् ॥

मृत्युलोकस्य भूलोकान्तर्गतस्यास्ति विस्तृतिः ।
महती नात्र सन्देहस्तद्विभागश्चतुर्विधः ॥

एको वः पितृलोकोऽस्ति मृत्युलोको द्वितीयकः ।
प्रेतलोकस्तृतीयोऽस्ति चतुर्थो नरकाभिधः ॥

भूलोके भवतामेष लोकः स्वर्गः सुखप्रदः ।
वस्तुतो नात्र सन्देहो विधातव्यः स्वधाभुजः ॥

कर्मभूर्मृत्युलोकोऽस्ति कर्मक्षेत्रं च यं जगुः ।
प्रेतलोकस्तथैवास्ते लोकोऽपि नरकाभिधः ॥

दुःखदावानलज्वालापूरितौ भीषणावलम् ।
प्रेतलोकोऽस्ति संश्लिष्टो मृत्युलोकेन सर्वथा ॥

भुवर्लोकादयोऽन्ये वो लोकादूर्ध्वमवस्थिताः ।
अस्त्यतश्चोर्ध्वलोकानामधोलोकव्रजस्य च ॥

वैलक्षण्येन सार्धं वः सम्यक् परिचयो न हि ।
यद्यस्यां हि चतुर्लोक्यां धर्मराजानुशासनम् ॥

वरीवर्त्येव विस्तीर्णं नास्ति कोऽप्यत्र संशयः ।
दृढं प्रकुर्याच्चेद् यत्नं पितरो यूयमन्वहम् ॥

यमदण्डस्य साहाय्यमन्तरेणैव तर्ह्यलम् ।
कृतार्था भवितुं सृष्टेः सामञ्जस्यस्य रक्षणे ॥

दण्डेनैव प्रजाः सर्वाः कर्तुं धर्मपरायणाः ।
यत्नो यद्यपि वर्तेत निस्सन्देहं शुभावहः ॥

किन्त्वहो येन यत्नेन प्रजाः सर्वाः कदा चन ।
दण्डार्हा एव नैव स्युः सयत्नो ज्ञानिसन्निधौ ॥

प्रजाकल्याणवृद्ध्यर्थमधिकं स्यात् सुखप्रदः ।
नास्ति कोऽप्यत्र सन्देहः सत्यमेतद् ब्रवीमि वः ॥

मृत्युलोकाधिकारोऽस्ति सर्वलोकहितप्रदः ।
यतो देवासुरैः सर्वैः पितरः कर्मभूमितः ॥

मानवाल्लोकतो गत्वा प्राप्यन्ते चोक्तयोनयः ।
भोगावसानजे जाते पाते तेषां स्वलोकतः ॥

भूयोऽप्यभ्युदयं प्राप्तुं मृत्युलोकोऽयमेव वै ।
भवेदाश्रयणीयो हि सर्वथैव न संशयः ॥

अस्त्यङ्ग प्रेतलोकस्तु मृत्युलोकस्य निश्चितम् ।
मृत्युलोकेन सम्बद्धौ लोकौ च द्विविधौ परौ ॥

ऊर्ध्वाधःसंस्थितौ पितृनरकाख्यौ यथाक्रमम् ।
आश्रये मृत्युलोकस्य संस्थितौ नात्र संशयः ॥

आशाते खलु तौ यस्माद् भोगलोकावुभावपि ।
मृत्युलोकव्यवस्थातो जायन्तेऽतः स्वधाभुजः ॥

स्वतो व्यवस्थितानीह भुवनानि चतुर्दश।
पूर्णधर्मस्वरूपस्य विकाशेन निरन्तरम्॥
आत्मज्ञानप्रकाशस्य सहजं स्थानमुत्तमम्।
नन्वार्यावर्त एवास्ते कर्मभूमिर्न संशयः॥" इति।

ज्योतिःशास्त्रमिदं प्रमाणयति यद् विभिन्नग्रहोपग्रहाणां केन्द्रभूतः सूर्य एव। एतस्यैव प्रकाशेन स्वर्ग-मर्त्य-पातालादीनि सौरजगन्ति प्रकाशितानि भवन्ति। यथा स्वीयसौरजगतः केन्द्ररूपः स्वकीयः सूर्यो वर्तते, तथैव बहूनां सौरजगतां केन्द्रस्वरूपः एको महान् सूर्यो वर्तते। एवमेव अगणितबृहत्सौर-जगतामपि एकः केन्द्रभूतो विराट् सूर्यो वेदितव्यः। एवमुत्तरोत्तरं विसृति-मापन्नोऽनन्तः सृष्टिप्रवाहः। यतो हि पूर्वापर-विराट्सूर्येण बृहत्सूर्यसम्बन्धः, तेन चास्मदीयस्य सूर्यस्य सम्बन्धः, अथ च अस्मदीयसौरजगतो ग्रहोप-ग्रहाणामस्मत्सूर्यत एव सम्बन्धो वरीवृत्यते, अस्मद्दृष्टिगोचरीभूतो रविरेव अस्मत्सौरजगतः केन्द्रभूतः, त्रिभुवनतेजःशक्तिप्रकाशकश्च ; अतो योगिना तत्रैव संयमं कुर्वता भूर्भुवःस्वर्लोकस्थितानां समस्तभुवनानां ग्रहोपग्रहा-दीनां च सम्यक् परिज्ञानं कर्तुं शक्यते।

अध्यात्माधिदैवाधिभूतभेदेन त्रिविधं सूर्यस्वरूपम्, ज्योतिषामपि ज्योतिः, ज्योतिष्मत्याः प्रवृत्तेः कारणस्वरूपः शुद्धः प्रकाश एव अध्यात्म-सूर्योऽवगन्तव्यः। सूर्यमण्डलान्तर्वर्तिनी अधिदैवशक्तिरेव अधिदैवसूर्य-स्वरूपा विज्ञेया। अस्मद्दृग्गोचरीभूतं स्थूलं रविमण्डलमेव सूर्यस्य अधि-भूतस्वरूपमाम्नातम्।

परिदृश्यमानः संसारोऽप्ययं स्थूलसूक्ष्मभेदेन द्विविधः—अस्मद्धरायाः प्रत्येकग्रहोपग्रहे च विद्यमानो लोक एव स्थूलः, उपरिस्थिताः सप्त लोकाः सप्त पातालाश्च सूक्ष्मलोकेऽन्तर्भवन्ति। सूर्यस्य अध्यात्मस्वरूपे संयमेन जागतिकसमस्तज्ञानं समधिगम्यते। अधिभूतस्वरूपसंयमाय सैव रीतिरनु-सर्तव्या, यया ज्ञानसंयमात् परचित्तज्ञानं जायते। यथा तत्र योगी परचित्त-साधारणस्थूलज्ञानाधिगमाय संयमनुतिष्ठति, विशिष्टज्ञानावाप्तये च प्रकारान्तरतः सूक्ष्मराज्ये संयमं विधत्ते, तथैव समुन्नतो योगी सिद्धिलाभ-

समीहया पूर्वं स्वब्रह्माण्डीय-सूर्यमण्डले संयममनुष्ठाय साधीयसीं योग्यतामधिगत्य ततश्च सूर्यस्य अध्यात्मस्वरूपसंयमात् सूक्ष्माणि जगन्त्यपि परिद्रष्टुमर्हति ॥ २६ ॥

एकादशी सिद्धिर्वर्ण्यते—

## चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥

चन्द्रमसि संयमेन नक्षत्रव्यूहस्य परिज्ञानं जायते। स्वीयसूर्येण साकं तारागणानां प्रत्यक्षसम्बन्धो नास्ति। यद्येवं स्यात् तर्हि सूर्यसंयमेनैव नक्षत्राणामपि अवगतिर्भवेत्। नक्षत्रराशिभिः साकं चन्द्रमसः कोऽपि विलक्षणः सम्बन्धो वरीवृत्यते। अत एव चन्द्रमसि संयमेन योगी नक्षत्रपरिज्ञानं कर्तुं पार्यते।

भूमिरियं होराद्वयं प्रत्येकराशिं विलोकयन्ती एकस्मिन् वासरे द्वादशराशीन् परिक्रामति। परमुपग्रहोऽयं चन्द्रः प्रतिदिनमेकवारं धरायाः परिक्रमां विधत्ते, स्वकीये केन्द्रे ह्यनेकवारं भ्राम्यति च। सुतरामसौ एकेन दिवसेन राशिनामनेकवारं दर्शनमनुतिष्ठति। अत एव चन्द्रलोके संयमेन योगिना राशिचक्रज्ञानमनायासेनैव अनुष्ठातुं शक्यते। राशिविषये चन्द्रमस एतदेव वैशिष्ट्यम्।

ज्योतिःशास्त्रसिद्धान्तमनुसृत्य निश्चितमिदं यत् सर्वग्रहोपग्रहापेक्षया शशी राशावेकत्र स्वल्पकालं यावत् तिष्ठति, अनया रीत्याऽपि प्रत्येकताराव्यूहस्वरूपस्य राशेः आकर्षण-विकर्षणशक्त्या साकं चन्द्रमसोऽतिघनिष्ठः सम्बन्धः। अतस्तदाकर्षणशक्तेः अवलम्बनेन ताराव्यूहान्वेषणे चन्द्रसाहाय्यं नितरां सौविध्याधायकमवगन्तव्यम् ॥ २७ ॥

द्वादशी सिद्धिर्वर्ण्यते—

## ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥

ध्रुवे संयमेन तारागतिज्ञानमासाद्यते। यथा स्वकीयेन वासरमणिना साकं ग्रहाणां सम्बन्धः, तथैव ध्रुवापरपर्यायेण महासूर्येण नक्षत्राणां सम्बन्धः। अतो ध्रुवसंयमेन नक्षत्रगतिज्ञानं जायते।

ध्रुवो निश्चलो ह्युत्तरदिशि विराजते। यदि च प्रकृतिनियममनुसृत्य ग्रहोपग्रह-महासूर्य-नक्षत्र-धूमकेतुप्रभृतयः सर्वे एव ग्रहाः स्वस्वरीत्या स्वकीये मार्गे परिभ्राम्यन्ति; एतच्च परिभ्रमणं नियति-दुर्दमनीय-नियमसिद्धम्। किन्तु ध्रुवलोकोऽयम् अस्मत्सौरजगदपेक्षया एतावन्महद्दूरे विराजते, यदस्माभिश्चलोऽप्ययं निश्चलवदनुभूयते। यथाऽस्माभिः दूरदेशस्थिता पावकशिखा चञ्चलाऽपि अचञ्चला ज्योतिर्मयी च विभाव्यते, एवमेव ध्रुवेऽप्यवगन्तव्यम्।

परन्तु नक्षत्राणां ध्रुवेण साकं निकटवर्ती सम्बन्धः। प्रत्येकनक्षत्र-राश्यन्तर्गता यावन्त्यस्ताराः सन्ति, ताः सर्वा अपि एकैकस्य ब्रह्माण्डस्य सूर्यस्वरूपा अवगन्तव्याः। अस्मदाश्रयीभूत-ब्रह्माण्डस्य चतुर्दिक्षु अनेकानि ब्रह्माण्डानि समुज्ज्वलन्ति। अत एव अस्मद्धरया सह राशि-नक्षत्राणां घनिष्ठः सम्बन्धः। परितोऽस्मद्ब्रह्माण्डं बम्भ्रम्यमाणा ब्रह्माण्डसमूहाः सहैव मिलित्वा गोलाकाररूपं बिभ्रतो महासूर्यस्वरूपं ध्रुवं समन्ततो भ्राम्यन्ति। अतो ध्रुवलोकेन सार्धमस्मत्पृथिव्या अस्मदाश्रयीभूत-ब्रह्माण्डस्य वा यादृशः सम्बन्धः, तादृशस्ताराभिरपि वर्तते। अतो निखिलकेन्द्र-स्वरूपध्रुवलोकसंयमेन सम्यक्तया नक्षत्राणां गतिज्ञानमवश्यम्भावि॥ २८॥

त्रयोदशी सिद्धिरुच्यते—

## नाभिचक्रे कायव्यूहज्ञानम्॥ २९॥

नाभिचक्रे संयमेन कायव्यूहस्य परिज्ञानं जायते। शरीरेऽत्र सप्तसु स्थानेषु कमलस्वरूपाणि सप्तचक्राणि विलसन्ति। एषु षट्सु चक्रेषु साधनया सिद्धौ अधिगतायां सप्तमं चक्रमुपढौकमानो मुक्तिं लभते। अतश्चतुर्विध-योगेषु लययोगसाधकाः षट्चक्रभेदनक्रियामेव प्रधानस्वरूपां मन्यन्ते। षट्सु चक्रेष्वेषु नाभिनिकटस्थिते तृतीये चक्रे संयमेन योगी शरीरस्य विशिष्टं ज्ञानं कर्तुं पारयति।

देहेऽत्र के के पदार्थाः प्राधान्येन विलसन्ति, किञ्च वात-पित्त-कफात्मकं दोषत्रयम्, रस-रक्त-मांस-मेदो-ऽस्थि-मज्जा-शुक्रादयश्च के सप्त

धातवः, धमन्यश्च किंस्वरूपाः? इत्यादिकं सर्वमपि नाभिचक्रसंयमेन योगिना साधकेन परिज्ञातु शक्यते। नाभिस्थानमेव प्राणवायोः, अपानवायोः, उद्‌र्ध्वशक्तेः, अधःशक्तेश्च मध्यस्थानम्। अतः केन्द्र-स्थानेऽत्र संयमेन समस्तानां शारीरिकपदार्थानामवगतिः सम्यक्तरत्वेन भवितुमर्हति।

"पित्तं पङ्गु कफः पङ्गुः पङ्गवो मलधातवः।
वायुना यत्र नीयन्ते तत्र गच्छन्ति मेघवत्॥"

इत्यायुर्वेदशास्त्रोक्तदिशा वायोरेव प्राधान्यम्। वायुविकारत एव नानाधातुविकाराः प्रादुर्भवन्ति। अतो जीवनी शक्तिर्वायुं निर्विभर्ति। एतस्या जीवनशक्तेरधऊद्‌र्ध्वगतिकेन्द्ररूपे नाभिचक्रे संयमेन जीवनशक्ति-गतिज्ञानाधायकानां शारीरिकपदार्थानामवगमः सम्यग्रूपेण भवितु-मर्हति॥ २९॥

चतुर्दशी सिद्धिरुदाह्रियते—

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः॥ ३०॥**

कण्ठकूपे संयमेन क्षुत्-पिपासयोः निवृत्तिर्जायते। सकामसाधकहिताय नानाविधसिद्धीनां वर्णनं शास्त्रेषु उपलभ्यते। सिद्धीनामनेकेषु भेदेषु सत्स्वपि त्रयस्त्रिंशद्‌भेदाः शास्त्रकारैः समाम्नाताः। तास्वष्टौ सिद्धयो मुख्या वक्ष्यन्ते। त्रयस्त्रिंशत्-सिद्धीनां नामानि प्रोक्तानि स्मृतिशास्त्रे—

"अणिमा लघिमा प्राप्तिः प्राकाम्यं महिमा तथा।
वशित्वं गरिमेशित्वे तथा कामावसायिता॥
दूरश्रवणमेवालं परकायप्रवेशनम्।
मनोयायित्वमेवेति सर्वज्ञत्वमभीप्सितम्॥
वह्निस्तम्भो जलस्तम्भः चिरजीवित्वमेव वा।
वायुस्तम्भः क्षुत्पिपासा-निद्रास्तम्भनमेव च॥
कायव्यूहश्च वाक्सिद्धिर्मृतानयनमीप्सितम्।
सृष्टिसंहारकर्तृत्वं प्राणाकर्षणमेव च॥

प्राणानां च प्रदानं च लोभादीनां च स्तम्भनम्।
इन्द्रियाणां स्तम्भनं च वुद्धिस्तम्भनमेव च।
कल्पवृक्षत्व - सत्यानुसन्धाने ह्यमरत्वकम्॥" इति।

एषु क्षुत्पिपासा-जयकारिण्योः सिद्ध्योः प्राप्तेरुपायः सूत्रेऽत्र वर्णयति।

उदरे वाय्वाहारप्रवेशार्थं यत् कण्ठच्छिद्रं तदेव 'कण्ठकूप'नाम्ना निर्दिष्टम्। तत्र संयमेन क्षुधः पिपासायाश्च निवृत्तिर्जायते। यथा नाभिसमस्थाने तृतीयं चक्रं तथैव कण्ठकूपसमानस्थाने पञ्चमं चक्रं स्थितमास्ते। चक्रेणैतेन क्षुत्पिपासयोः घनिष्ठः सम्वन्धः। अतः कण्ठकूपस्थितचक्रे संयमेन योगी क्षुधं पिपासां च जयति॥ ३०॥

पञ्चदशी सिद्धिर्निरूप्यते—

## कूर्मनाड्यां स्थैर्यम्॥ ३१॥

कूर्मनाड्यां संयमेन स्थैर्यमासाद्यते। क्रियासिद्धांशविषया गुरुदेवदयावगम्या इति पूर्वमेव प्रतिपादितम्। इडा-पिङ्गला-सुषुम्नाप्रभृतीनां स्थानानि गतयश्च, कूर्मनाडीनां स्थानं षट्चक्रविशेषविवृतिश्चेति सर्वेऽपि क्रियासिद्धांशाः गुरुदेवकृपां विभ्रति।

यद्यपि प्रत्यक्षपदार्थाः प्रत्यक्षं शब्देनापि वक्तुं शक्यन्ते, किन्तु प्रत्यक्षतः प्रदर्शनेन अभ्रान्तोऽनुभवो जायते। पूर्वोक्तकण्ठकूपे कच्छपाकृतिः एकानाडी वर्तते, सैव कूर्मनाडीत्यभिधीयते। तया किल शारीरिकगतेर्विशिष्टः सम्वन्धः। अत एव तस्यां संयमेन शरीरं स्थैर्यमासादयति। शरीरस्य स्थैर्येण मनोऽपि स्थिरायते।

कण्ठ-कूपसमस्थाने मेरुदण्डस्थितं पञ्चमं चक्रम्। तदुपरि सन्निकट एव कूर्मनाडीस्थानम्। कूर्मो मन्दराचलमिव शिरोधारणे एतस्याः सहायकत्वम्। एतस्याः साहाय्येन वहुविधलययोगक्रियाः योगशास्त्रे समुपवर्णिता निभाल्यन्ते। शरीरत्यागकाले मृत्युसमये समुपस्थिते योगिनो धैर्यप्रदानाय क्रियाकलापाः आज्ञाचक्र-कूर्मनाडीसाहाय्येनैव समनुष्ठीयन्ते।

मेरुदण्डस्य शरीरधारणशीलत्वात् तत्र धृतिमुत्पादयितुं कूर्मनाडीशक्तिः सर्वाभ्यर्हिता अवगन्तव्या ।

अतो मस्तिष्केन, मेरुदण्डेन, सकलशरीर-वायवीयशक्त्या च साकं विशिष्टसम्बन्धसत्त्वात् कूर्मनाडीसंयमेन स्थूले सूक्ष्मे च शरीरे स्थैर्य-मुत्पद्यते । सर्पा गोधा वा स्वीयं विवरमासाद्य चञ्चलतां क्रूरतां च परित्यजन्ति, तथैव योगिमनः कूर्मनाडीं प्रविशदेव स्वीयां स्वाभाविकीं चञ्चलतां परिजहाति ॥ ३१ ॥

षोडशीं सिद्धिं निर्वक्ति—

## मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥

कपालज्योतिषि संयमेन सिद्धा दृश्यन्ते । मस्तकाभ्यन्तरकपालनिम्न-भागे 'ब्रह्मरन्ध्र'नामकमेकं छिद्रमास्ते । तत्र मनसः स्थापनेन दृष्टिगोचरी-भूते ज्योतिषि संयमेन योगिभिर्महात्मनां सिद्धानां दर्शनमधिगम्यते । यः किल सात्त्विकः प्रकाशो वर्णितपूर्वः, स च ब्रह्मरन्ध्रेऽपि परिदृश्यते । रन्ध्रेऽत्र प्रकाशांशो नित्यं विराजते । बहिःप्रकाशनित्यत्वेन सह अन्तः-प्रकाशनित्यतायाः नित्यसम्बन्धः ।

ऐशीं विभूतिं धारयन्तो जीवकोटित उपरताः महात्मानः केवलं सृष्टि-मङ्गलकामनयैव सिद्धाश्चतुर्दशभुवनेषु विराजन्ते, त एवात्र सूत्रेऽभि-प्रेताः । यथा उपरिस्थसप्तभुवनेषु देवाः भूर्लोकान्तर्गत-पितृलोके पितरश्च विराजन्ते; तथैव ज्ञानराज्यप्रवर्तका ऋषयोऽपि चतुर्दशसु भुवनेषु निवसन्ति । एतेषां गतिः सर्वत्रैव अप्रतिहता । एतादृशाः सिद्धमहात्मानो महर्षिकोटीमाटीकमाना उच्चलोके निवसन्तोऽपि स्वेच्छया भुवनान्तरेष्वपि भ्राम्यन्ति । समष्टिव्यष्टिविचारतो ब्रह्माण्ड-पिण्डयोः एकत्वसम्बन्धात् तद्दर्शनं ब्रह्मरन्ध्रज्योतिषि कर्तुं शक्यते । बाह्याभ्यन्तरज्योतिषोः सम्बन्धाद् ब्रह्मरन्ध्रस्थितज्योतिषि संयमेन साधकेन योगिना सिद्धा महात्मानो दृश्यन्ते ॥ ३२ ॥

सप्तदशी सिद्धिरुदाह्रियते—

## प्रातिभाद्वा सर्वम् ॥ ३३ ॥

योगसाधनमनुतिष्ठता योगिना ध्यानावस्थायामेका ज्योतिर्मयी तारा दृश्यते, तन्नाम 'प्रातिभ' इति। ज्योतिर्मय्यां प्रातिभ-तारायां संयमेन योगिजनेन परिपूर्णं ज्ञानमधिगम्यते। शास्त्रेष्वेवं प्रमाणितं यत् चञ्चल-बुद्धयो मानवाः प्रातिभदर्शनं नानुष्ठातुमर्हन्ति। भगवतः श्रीगुरुदेवस्य च कृपया योगमार्गे साधकोऽग्रेसरन् बुद्धेः स्थैर्यमासादयति। प्रातिभदर्शनं स्थिरबुद्धित्वस्य पूर्वलक्षणम्। अतः प्रातिभसंयमेन योगिना द्रुतमेव पूर्णं ज्ञानमासाद्यते।

योगयुक्तसाधकस्य मनसः स्थिरत्वलक्षणं नादश्रवणमेव। स्थैर्यमभ्युपगते योगिनो मनसि तत्पिण्डे प्रणवध्वनिरूपो नादः श्रूयते। एवमेव यदा योगिनो विशुद्धा बुद्धिः सत्त्वगुणमधिगच्छति, तदानीमेव भाग्यशालिना तेन प्रातिभदर्शनमनुष्ठीयते। तदीयान्ताराज्ये च प्रातिभस्थिरता सम्पद्यते। यथा मनःस्थैर्यलक्षणीभूत-नादश्रवणेन परमोच्चकोटिक-सिद्धिसम्बन्धः, तथैव प्रातिभस्थिरतया बुद्धिसम्बन्धिनीनां सिद्धीनां सम्बन्धः। स्थिरे प्रातिभेऽत्र संयमेन योगिना यथाक्रमं ज्ञानराज्यस्य सर्वा अपि सिद्धयो अधिगन्तुं शक्यन्ते। इमामेव प्रातिभसिद्धिं द्वारीकृत्य पूज्यचरणा महर्षयो मन्त्रद्रष्टृत्वं प्रपेदिरे, ज्ञानराज्यं च करतलामलकवत् परिददृशुः ॥ ३३ ॥

अष्टादशी सिद्धिरुदीर्यते—

## हृदये चित्तसंवित् ॥ ३४ ॥

हृदये संयमेन चित्तस्य ज्ञानं जायते। षट्चक्रेषु चतुर्थं चक्रं हृदय-समस्थाने तिष्ठति। 'हृत्कमल'मपि तदीयं नाम। कमलेनैतेन अन्तःकरणस्य विलक्षणः सम्बन्धः। अत्र संयमेन निजान्तःकरणस्य सम्पूर्णोऽवबोधो योगिना अनुष्ठातुं पार्यते। पूर्वस्मिन् सूत्रे द्विदलस्थस्य प्रातिभस्य दर्शनेन तत्र संयमेन च बुद्धिराज्यविषयकज्ञानाधिगममार्गं प्रदर्श्य सूत्रेणैतेन महर्षिणा हृदयचक्रसंयमेन मनोराज्यविज्ञानाधिगतेरुपायो निर्दिश्यते।

चित्तं मनश्च अन्योन्यसम्बद्धम्। चित्ते नूतनाः प्राचीनाश्च सर्वे कर्मसंस्कारास्तिष्ठन्ति। अतश्चित्तस्य नृत्यमानत्वे मनोऽपि नृत्यति। मानसिकक्रियासु चित्तस्य प्राधान्यम्। निजसूक्ष्मशरीराङ्गत्वे सत्यपि तत्पूर्णस्वरूपं महामायामायया जीवेन नैव परिज्ञातुं शक्यते। चित्तेन साकं विलक्षणसम्बन्धवति चक्रेऽत्र संयमेन योगी स्वचित्तस्य परिपूर्णं ज्ञानं कर्तुं शक्नोति॥ ३४॥

ऊनविंशीं सिद्धिं निर्णयति—

**सत्त्वपुरुषयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः परार्थान्यस्वार्थसंयमात् पुरुषज्ञानम्॥ ३५॥**

बुद्धिः पुरुषश्च परस्परं भिन्नौ, तयोरभिन्नतया भोगोत्पत्तिः। परार्था बुद्धिः, तद्भिन्ने स्वार्थे अर्थाद् अहङ्कारशून्ये चित्प्रतिबिम्बे संयमेन पुरुषज्ञानं जायते। सत्त्वतमसोः प्राधान्येन वैधर्म्यभावाधिकतया पुरुषतोऽत्यन्तभिन्ना बुद्धिः। सत्त्वगुणयुक्तायामपि बुद्धौ आत्मनः प्रतिबिम्बसत्त्वादपि परिणामादिविकारवशवर्तितया बुद्धितत्त्वं कूटस्थपुरुषाद् अत्यन्तभिन्नम्। एवमत्यन्तासङ्कीर्णयोः बुद्धिपुरुषयोः यत् परस्परप्रतिबिम्बसम्बन्धद्वारेण अभेदज्ञानम्, तदेव पुरुषनिष्ठ-भोगशब्देन आख्यायते। बुद्धेर्दृश्यत्वात् तदुपभोगस्वरूपः प्रत्ययपदार्थः पुरुषहेतुकः। परार्थभिन्नस्वार्थप्रत्ययमूलके बुद्धिप्रतिबिम्बितचित्सत्ताम् अवलम्बमाने चिन्मात्रस्वरूपे संयमेन योगी नित्यशुद्धबुद्धमुक्तस्वभावं विज्ञातुं पारयति।

प्रकृतिः पुरुषश्च उभावपि स्वतन्त्रस्वरूपौ। एतयोरुभयोः सम्बन्धत एव दृश्यरूपं जगदुत्पद्यते। तदेव द्वैतरूपबन्धनकारणम्। पुरुषो निर्लिप्तो निर्विकारश्च। पराधीनायाः परिणामिन्याः लिप्तायाः विकारमय्याः प्रकृतेः प्रथमपरिणामभूतं महत्तत्त्वं बुद्धिपदवाच्यमवगन्तव्यम्। महत्तत्त्वरूपिणी बुद्धिरेव निर्लिप्तं पुरुषं बन्धनदशां प्रापयति। महत्तत्त्वस्वरूपा बुद्धिः पुरुषस्वरूपतो नितरां भिन्नाऽपि अघटनघटनापटीयस्याः प्रकृतेः स्वभावत

एव उभयोरभेदः प्रतीयते, तदैव भोगरूपबन्धनदशायाः समुत्पत्तिः। एतदेव सृष्टिरहस्यं बन्धनदशायाश्च वैज्ञानिकं स्वरूपम्।

महत्तत्त्वस्वरूपाया बुद्धेः स्वातन्त्र्यात् सा परार्थैव मन्यते। यतः प्रकृतिपरिणामाः पुरुषकृत एव बोभूयन्ते। पुरुषस्वार्थदशा तद्भिन्ना। अविद्याप्रादुर्भूतभोगपरार्थदशाविलक्षणा विद्याकृपासमुत्पन्ना जैवाहङ्कार-शून्या चिद्विलासस्यैका स्वाभाविकी दशैव 'स्वार्थदशा'शब्दवाच्या अवगन्तव्या। बुद्धिमलिनभावविरहितायां शुद्धभावमय्यां जैवाहङ्कृति-रहितायाम्, आत्मज्ञानसम्भृत-चिद्भावदशायां ज्ञानपूर्वकं संयमेन पुरुषस्य स्वरूपावबोधो जायते।

सिद्धिरियं सर्वाभ्यर्हिता, परायाः सिद्धेर्जननी च। उक्तमपि स्मृतौ—

"अतो विज्ञवरा अत्र प्रकृतेर्मे दशाद्वये।
मम सिद्धिस्वरूपस्य विकाशोऽपि द्विधा भवेत्॥
अपरा सिद्धिरेकाऽस्ति द्वितीया च पराभिधा।
नैकोक्तसिद्धिरूपाणि नानारूपाणि बिभ्रती॥
सिद्धिर्मेऽस्त्यपरा नाम्नी नात्र वः संशयो भवेत्।
ज्ञानाधिकारिणो विप्राः पूज्या सिद्धिः पराभिधा॥
चिन्मयी सात्त्विकी नित्या हिताऽद्वैतविधायिनी।
स्वरूपानन्दसन्दोहद्योतिनी सा प्रकीर्तिता॥" इति॥३५॥

पूर्वसूत्रप्रतिपादितायाः परासिद्धेः उपयोगिनीं योग्यतामधिगतवता योगिना व्युत्थानदशाप्राप्तौ याः सिद्धयोऽधिगम्यन्ते, तन्निर्देशः क्रियते—

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते॥ ३६॥**

पूर्वसूत्रेषु स्वार्थसंयमजनित-सिद्धिवर्णनमनुष्ठाय इदानीं सूत्रकृता महर्षिणा तदवान्तरफलानि वर्ण्यन्ते। पूर्वनिर्धारितपद्धत्या अहङ्काररहित-चिन्मात्रस्वार्थप्रत्यये संयममनुतिष्ठता योगिनाऽग्रेसरता प्रातिभादयः सिद्धयोऽधिगम्यन्ते।

अतीतानागत-विप्रकृष्ट-सूक्ष्मातिसूक्ष्म-पदार्थज्ञानसम्पादिका प्रातिभसिद्धिः। श्रावणसिद्ध्या च दिव्यश्रवणज्ञानस्य परिपूर्णता जायते। वेदनासिद्धिः दिव्यस्पर्शज्ञानपरिपूर्णत्वं प्रयच्छति। आदर्शसिद्ध्या दिव्यपदार्थाः परिदृश्यन्ते। आदर्शसिद्धिः दिव्यस्य दर्शनस्य परिज्ञानं करोति। आस्वादसिद्ध्या दिव्यरसज्ञानपरिपूर्णता जायते। वार्तासिद्ध्या च दिव्यगन्धज्ञानपरिपूर्णत्वमधिगम्यते। एताः सिद्धयः स्वार्थसंयमस्य आनुषङ्गिकं फलम्।

निष्कर्षोऽयं यत् योगसाधनेन स्वरूपज्ञानस्वरूप-पुरुषज्ञानोपलब्धौ जातायां पूर्वसंस्कारजन्यां व्युत्थानदशामधिगतवता योगिना पूर्वोक्ताः सिद्धयः स्वत एव प्राप्यन्ते। एताश्च स्वाभाविका विज्ञेयाः। स्वरूपज्ञानमधिगतवतः पुरुषोपलब्धौ सामर्थ्यवतः आत्मज्ञानिनो योगिराजस्य दशात्रयवर्णनं शास्त्रेषु उपलभ्यते। तिस्रोऽपि दशाः पूर्वसंस्कारजन्या भवन्ति। एतदवस्थातारतम्यमनुसृत्य पूर्वोक्तव्युत्थानदशा-तारतम्यमपि जायते। एतत्सिद्ध्यधिगतिः प्रारब्धसंस्कारजनिता विज्ञेया॥ ३६॥

योगिनं सावधानं कर्तुमुच्यते—

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः॥ ३७॥**

पूर्वोक्ताः सिद्धयः समाधिजन्ये मुक्तिपदे उपसर्गभूताः = विघ्नकारिण्य इत्यर्थः। मानवजीवानामैश्वर्यादीनि, देवानां दैव्यः सिद्धयश्च, सर्वमप्येतत् प्रकृतेरेव विचित्र-विलसितम्। भिन्नरुचिर्हि लोकः। तिष्ठन्तो वासना नूनमेव पूरयितव्या। अतः चञ्चलचेतसो योगिनः सिद्धिमपेक्षन्ते। तदर्थमेव दयामयेन महर्षिणा सूत्रकृताऽध्यायेऽत्र अनेके सिद्धिभेदाः समुपवर्णिताः। विशेषतो व्युत्थानदशायां योगिभिः पूर्वनिर्दिष्टाः स्वाभाविकसिद्धयः स्वत एव प्राप्यन्ते। ताः सर्वा अपि प्रकृतिपरिणामप्रादुर्भूताः क्षणभङ्गुराः समाधेः नित्यानन्दशुद्धाद्वैतदशायां प्रत्यूहकारिण्य एव। अतो महर्षिणा सूत्रकारेण योगिराजं सावधानीकर्तुं सूत्रमेतदाविष्कृतम्।

यद्यपि स्वरूपोपलब्धौ सत्यां योगिराजः प्रकृति-लीलया न पुनर्ग्रस्यते, परन्तु व्युत्थानदशाजनितासु पूर्वोक्तसिद्धिषु समाकृष्टः सन् स जडभरतवद् विपन्नो भवितुमर्हति। अतः प्राधान्येन समुन्नतयोगिनं सावधानीकर्तुं सिद्धान्तोऽयं निर्णीतः।

वस्तुतस्तु लौकिक्योऽलौकिक्यश्च सर्वविधा अपि सिद्धयो मुमुक्षुभिः हेयैवाऽऽस्ते। यथा चोक्तं योगशास्त्रतात्पर्यं श्रीधीशगीतायाम्—

अघट्यघटनायां या प्रकृतिर्मे गरीयसी।
जगद्विमोहिनी सैव महामाया पराभिधा॥
महतो ज्ञानिनश्चैवं योगिनोऽपि तपस्विनः।
सिद्धिसार्थैरनेकैर्हि मोहयन्ती निरन्तरम्॥
आवागमनचक्रेऽस्मिन् स्वविलासात्मके मुहुः।
मोक्षमार्गं च रुन्धाना घूर्णयेत समन्ततः॥
ब्राह्मणाः! प्रकृतिर्मेऽसौ महामाया पराभिधा।
किन्तु मे ज्ञानिनो भक्तान् मोहितुं न कदाप्यलम्॥
कुलाङ्गनानां साध्वीनामङ्गानामिव दर्शनम्।
ज्ञानिनां मम भक्तानां भवेत् सिद्धिप्रकाशनम्॥
पुरुषांश्चापरान् कांश्चिद् यथा काश्चित् कुलाङ्गनाः।
दर्शनाय निजाङ्गानां न क्षमन्ते कदा चन॥
भवन्त्युत्कण्ठिताः किन्तु सर्वथा जनसंसदि।
दर्शनाय निजाङ्गानां निर्लज्जाः कुटला मुहुः॥
सर्वसामर्थ्यवन्तोऽपि मद्भक्ता ज्ञानिनस्तथा।
सिद्धिं स्वां नैव भो विप्राः! द्योतयन्ते कदा चन॥
योगिनो भक्तिहीनाश्च लक्ष्यहीनास्तपस्विनः।
साधका उग्रकर्माणो ज्ञानहीनास्तथा द्विजाः॥
स्वीयाः सिद्धिर्वणिग्वृत्त्या सम्प्रकाश्य पतन्त्यलम्।
प्रकाश्याः सिद्धयो नैव सर्वथाऽतो महात्मभिः॥

कदाचिद् भ्रातरः पुत्रा आत्मीयाः स्वजना उत ।
दैवादनिच्छयेक्षेरन् यथाऽङ्गानि कुलस्त्रियः ॥
ज्ञानिनां मम भक्तानां सिद्धीनां वैभवं तथा ।
प्रकटत्वं हठाद् याति दैवाल्लोके कदाचन ॥" इति ॥३७॥

विंशी सिद्धिर्वर्ण्यते—

**बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥**

बन्धनस्य शिथिलतया संयमं द्वारीकृत्य प्रचारस्य संवेदनाच्च अर्थात् प्रवेशनिर्गममार्गयोः या नाड्यस्तासां ज्ञानेन च चित्तस्य परशरीरे प्रवेशः सम्भवति। चाञ्चल्यमधिगतवतोऽस्थिरस्य मनसः शरीरे द्वन्द्वाशक्तिजन्यं बन्धनं जायते । समाधेरधिगत्या क्रमशः स्थूलशरीरात् सूक्ष्मशरीरस्य बन्धनं शैथिल्यमाप्नोति, संयमसाहाय्येन चेतसो गमनागमनमार्गीय-धमनीनां परिज्ञानेन स्वत एव सूक्ष्मशरीरस्य कुत्रापि प्रापणरूपायाः प्रवेशक्रियायाः, तस्य कुतश्चित् समानयनरूपनिर्गमक्रियायाश्च परिज्ञानं योगिनो जायते। तदानीं यथेच्छं योगी स्वशरीराद् विनिर्गम्य परशरीरे प्रवेष्टुमर्हति ।

योगी साधकः पूर्वं सविकल्पसमाधौ अग्रेसरन् वितर्क-विचाररूप-समाधिभूमिमतिक्रमन् यदा अस्मितानुगतं समाधिमासादयति, तदैव परकायप्रवेशयोग्यतामधिकरोति। तदा यम-नियमादिसमुत्पन्नम् आत्मबलं समधिगम्य शारीरिके द्वन्द्वासक्ती विजयमानोऽवशिष्टसिद्धिवासनो निजा-सनजयेन स्थूलशरीरं विजित्य प्राणायामेन प्राणांश्च जित्वा प्राणमय-कोषहितं सूक्ष्मदेहं विद्यमानस्थूलदेहात् निस्सार्य प्राणशक्तिद्वारा परकीय-कायप्रवेशस्य ततो निर्गमस्य च योग्यता योगिना लभ्यते ।

यथा राज्ञी मधुमक्षिका यत्रैव गच्छति, तत्रान्या अपि मधुमक्षिकाः सहैव गच्छन्ति, तथैव परकीयशरीरप्रवेशकाले जीवेन साकं तदीयानि

इन्द्रियाण्यपि गच्छन्ति। परस्य काये प्रविष्टो योगी तत्र स्वशरीरवद् व्यवहरति, यतश्चित्तमात्मा च व्यापकं वस्तु। भोगतृष्णाया विनाशे सर्वत्रैव आनन्दोऽनुभूयते, यतो भोगसाधक-कर्मशैथिल्यात् सर्वत्रैव सुखाधिगमः। एवंरीत्या संयमेन बन्धनशैथिल्ये सति योगिना परकायप्रवेशशक्तिरासाद्यते ॥ ३८ ॥

एकविंशी सिद्धिरुदीर्यते—

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥**

उदानस्य वायोर्विजयेन जल-पङ्क-कण्टकादिपदार्थानां स्पर्शाभावो मृत्युश्च साधकस्य योगिनो वशमेति ॥ ३९ ॥

द्वाविंशी सिद्धिरुच्यते—

**समानजयाज्ज्वलनम् ॥ ४० ॥**

समानस्य वायोर्जयेन शरीरं ज्योतिर्मयं जायते। शारीरिकी तेजःशक्तिरेव जीवनक्रियासाम्यावस्थाहेतुः। अतः सा शक्तिः समानवायोरधीना विज्ञेया। संयमद्वारा समानवायोर्विजयेन योगी तेजःपुञ्जमयो जायते। समानो वायुः समत्वमुत्पादयति।

यत्र समत्वम्, तत्रैव सर्वाः शक्तयः समाकृष्यन्ते। यथा मर्यादावान् समभावापन्नो जलनिधिः पृथ्वीस्थितान् जलराशीन् नदीरूपतः समाकर्षति, यथा च समदर्शी भगवान् सूर्यः स्वीयसमभावापन्नकिरणैः इतस्ततो विकीर्णान् असमभावापन्नान् रसान् आकर्षति, तथैव पिण्डस्थितः समानो वायुर्यथार्थस्वरूपतो वियुज्यमानः चतुर्दिक्षु विकीर्णां तेजःशक्तिं समाकृष्य योगिनः शरीरं तेजोमयं विधत्ते। यथा दैवशरीरतस्तेजोमयाः किरणाः प्रकाशन्ते, तथैव योगी समानवायुविजयेन दैवं तेजः समधिगच्छति ॥ ४० ॥

त्रयोविंशी सिद्धिरुदीर्यते—

**श्रोत्राकाशयोः सम्बन्धसंयमाद् दिव्यं श्रोत्रम् ॥ ४१ ॥**

श्रोत्राकाशयोः आश्रयाश्रयिरूपसम्बन्धसंयमात् दिव्यश्रोत्रमधिगम्यते। निखिलानामपि प्राणिनां कर्णेन्द्रियाधार आकाश एव, तथैव समस्तशब्दाधारोऽपि स एव। आकाशादेव एकस्थानसमुच्चरितः शब्दः स्थानान्तरं गच्छति। यतो द्वयोरपि मध्ये आकाशातिरिक्तं किमप्यन्यत् नास्ति। अतः शब्दाधार आकाश एवेति सिद्ध्यति। कर्णेन्द्रियस्य आकाशसम्बन्धादेव शब्दः श्रूयते। पिहिते श्रवणेन्द्रिये आकाशसम्बन्धाभावान्न शब्दः समाकर्ण्यते। अत इदं निश्चीयते यद् आकाशात् कर्णेन्द्रियस्य साक्षात् सम्बन्धः, आकाशस्य च आवरणराहित्यमपि सिद्ध्यति। आकाशस्य सर्वव्यापित्वे नास्ति सन्देहलेशोऽपि। एवञ्च कर्णेन्द्रियाकाशयोः आश्रयाश्रयिभावसम्बन्धे संयमेन योगिना दिव्या शक्तिरधिगम्यते।

सूक्ष्मादतिसूक्ष्मो निगूढादपि निगूढः अतिदूरवर्त्यपि शब्दः श्रूयते योगिना, यतो हि शब्दो भूतो भवत् भविष्यच्च आकाशसम्बद्ध इति नास्ति संशयलेशः। आकाशस्य शब्दगुणत्वं प्रसिद्धम्। दाहिकया शक्त्या साकं यथा पावकसम्बन्धः, तथैव शब्देन सह आकाशसम्बन्धो विद्यते। गुणिन्येव गुणस्थितिः। उभयोरपि दिव्यलौकिकशब्दयोराधार आकाश एव। आकाशस्य सूक्ष्मातिसूक्ष्मसीम्ना सह पिण्डस्थितश्रोत्रेन्द्रियस्य साक्षात् सम्बन्धः। उभयोरेव सीमस्थिताश्रयाश्रयिसम्बन्धे संयममनुतिष्ठन् योगी सूक्ष्मातिसूक्ष्मं दिव्यं श्रवणं स्वत एव प्राप्स्यतीत्यत्र न सन्देहः॥ ४१॥

चतुर्विंशी सिद्धिरुदाह्रियते—

**कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम्॥ ४२॥**

शरीराकाशयोः सम्बन्धे संयमेन लघुतूलादि-पदार्थधारणया च आकाशे गमनं सम्भवति। यत्र यत्र शरीरं गच्छति, तत्र तत्र सर्वव्यापिन आकाशस्य स्थितिः सिद्ध्यति। चलनादिरूप-क्रियाकलापे आकाशः अवकाशं प्रयच्छति। शरीराकाशयोः व्याप्यव्यापकभाव-सम्बन्धः। सर्वभूतापेक्षया आकाशः सूक्ष्मो व्यापकश्च। अतो योगी स्थूलशरीराकाशयोः

सम्बन्धे संयममनुतिष्ठन् तदानीमेव लघुतरतूलादिपदार्थेषु धारणामां कुर्यात्, तदा क्रिययैतया तस्मिन् लघुत्वसिद्धिर्जायते। अर्थात् योगी यथेच्छमाकाशे भ्राम्यति, तिष्ठति च। अनयैव सिद्ध्या महात्मानो वियति विचरन्तः स्थानात् स्थानान्तरं गन्तुं प्रभवन्ति ॥ ४२ ॥

पञ्चविंशी सिद्धिर्निर्दिश्यते—

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥**

स्थूलशरीरतो वहिः अकल्पिता शरीराश्रयापेक्षाहीना मनसः स्वाभाविकी वृत्तिः 'महाविदेहा' प्रतिपाद्यते। तया चाहङ्कृतिर्नश्यति। तस्यां वृत्तौ संयमेन प्रकाशावरणं तिरोदधाति। अर्थाद् अन्तःकरणसात्त्विकतायाः आच्छादका अविद्यादिकर्मक्लेशा विलीयन्ते।

निष्कर्षोऽयं यद् यावत् शरीराहङ्कारस्तिष्ठति, तावन्मनसो बाह्यवृत्तिरपि तिष्ठत्येव। परन्तु यदा शरीराहङ्कारपरित्यागपूर्वकं स्वतन्त्रभावेन सा वहिर्विचरति, तदैव योगिनोऽन्तःकरणं मलरहितं निस्सङ्गं च जायते। शरीरसम्बद्धा मनसो बाह्यवृत्तिः 'कल्पिता'नाम। परन्तु शरीरापेक्षाविरहिता निराश्रया मनसः स्वाभाविकी बाह्यवृत्तिः 'अकल्पिते'त्युच्यते। तत्र च कल्पितां परित्यज्य 'अकल्पितां' 'महाविदेहा'ख्यां वृत्तिं साधयन् तत्सिद्धौ च प्रकाशस्वरूपाया बुद्धेः सम्पूर्णः प्रकाशः सञ्जायते। तदानीम् अहङ्कारसमुत्पन्नानां क्लेशकर्मविपाकानां सम्बन्धतः साधको विमुच्यते। तमोरजस्समुत्पन्नानि आवरणानि समूलं विनश्यन्ति। इयमतीव समुन्नता अवस्था।

पूर्वसूत्रेषु महर्षिणा सूत्रकारेण यथेच्छं स्थूलशरीरस्य नयनप्रयोजकाः सिद्धयो वर्णिताः। एतेन च सूत्रेण समीहानुसारं अन्तःकरणस्य नयनसिद्धिर्निरूपिता। महर्षिणा सूत्रकृता सिद्धयः सर्वा अपि त्रिधा विभक्ताः। प्राक् किल प्रथमप्रकाराः सिद्धीर्वर्णयित्वा तासु च योगिनो प्रसक्ततां निषिद्ध्य तदनन्तरं मध्यमप्रकाराः सिद्धयो वर्णिताः, अग्रे चोत्तमसिद्धीनां विविधोपाया वक्ष्यन्ते ॥ ४३ ॥

षड्विंशी सिद्धिराख्यायते—

**स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद् भूतजयः ॥ ४४ ॥**

पञ्चतत्त्वानां स्थूलम् , स्वरूपम् , सूक्ष्मम्, अन्वयः, अर्थवत्त्वं चेति अवस्थाविशेषाः सन्ति। तेषु संयमेन भूतानां पञ्चानामपि जयो जायते। सृष्टिप्रकाशिन्या अनादिकारणरूपायाः प्रकृतेर्विस्तारस्वरूपाणि पञ्चभूतानि। सृष्टिरियं पञ्चभूतविस्तारमात्रम्। अत एवैतेषां जयेन प्रकृतिजयः सम्पद्यते।

सूक्ष्मेक्षिकया निरीक्ष्यमाणे पाञ्चभौतिकी सृष्टिः पञ्चधा विभक्तुं शक्यते। तथा हि—१. स्थूलावस्था, २. स्वरूपावस्था, ३. सूक्ष्मावस्था, ४. अन्वयावस्था, ५. अर्थवत्त्वावस्था चेति। दृश्यमानैव स्थूलावस्था। द्वितीया स्थूले गुणरूपेण दृष्टा ; यथा तेजसि उष्णत्वम्। तन्मात्राणामवस्था तृतीया। सत्त्वरजस्तमसां व्यापकत्वदशैव चतुर्थी। फलदायिनी च पञ्चमी अवस्था।

प्रकारान्तरेणापि विविच्यते—अनुभूयमानानि पञ्चभूतानि प्रथमावस्था। उष्णतया तेजोऽनुभवो द्वितीया। भूतानां तन्मात्रानुभवस्तृतीया ; यथा शब्देन आकाशानुभवः। तत्त्वख्यातिप्रकाशक्रिया स्थितिस्वभावगुणश्चेति अतिसूक्ष्मावस्था चतुर्थी । सूक्ष्मातिसूक्ष्म-भोगमोक्षदायिनी शक्तिमती अवस्थैव पञ्चमी।

आसु आद्यं दशात्रयं स्थूलस्वरूपम् , अन्तिमं च दशाद्वयं सूक्ष्मम्। स्थूलस्वरूपं साधारणबुद्धिगम्यम् , सूक्ष्मं च योगबुद्ध्याऽवगम्यते। यदा योगी एतद्दशापरिज्ञानपूर्वकं संयमेन भूतानां विजयं प्रकुरुते, तदानीं स्वत एव प्रकृतिस्तदधीनतां प्रपद्यते। यथा गावः स्ववत्सान् स्वतो दुग्धं पाययन्ति, तथैव पञ्चभूतविजयेन वशीभूता प्रकृतिः स्वयमेव योगिनं सेवते। यथा सर्वशक्तिमतो भगवतः, किं वा तदीयसाक्षाद्विभूतिस्वरूपाणां ब्रह्मविष्णुमहेशानां प्रकृतिरधीनतां भजते, तथैव सा योगिनोऽप्यधीना जायते। ऐश्यः सिद्धय इमाः प्रख्यायन्ते। सविस्तरवर्णनमस्य अग्रे विधास्यते ॥ ४४ ॥

भूतजयस्य फलमुच्यते—

**ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४५ ॥**

पञ्चभूतविजयानन्तरं योगिनोऽणिमादिसिद्धीनाम् अधिगतिर्जायते। अष्टौ सिद्धयः, तथा हि—

"अणिमा महिमा चैव लघिमा गरिमा तथा।
प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः॥" इति।

१. इच्छयैव शरीरस्य अणुतासम्पादनम् अणिमा। २. महत्त्वसम्पादनं महिमा। ३. स्थूलस्यापि शरीरस्य लघुत्वसम्पादनं लघिमा। एतयैव सिद्ध्या योगिनो वियति भ्राम्यन्ति। ४. देहस्य यथेच्छगुरुत्वसम्पादनं गरिमा। ५. स्वेच्छयैव लोकाल्लोकान्तरगमनं प्राप्तिः। एतत्सिद्धिबलेन ग्रहोपग्रहेषु सूर्य-महासूर्यादिलोकेषु च योगिनो गन्तुं शक्नुवन्ति। ६. यथेच्छं सर्वपदार्थाधिगतिरेव प्राकाम्यम्। एतया सिद्ध्या त्रिलोके कोऽपि पदार्थो योगिदुर्लभो न भवति। ७. पञ्चभूतानां स्ववशीकार एव वशित्वसिद्धिः। एतया सिद्ध्या योगिनः पञ्चभूतैर्यथेच्छं कार्याणि कारयितुं प्रभवन्ति। स्वयं कस्यापि वशेऽविद्यमानाः सर्वानपि स्ववशे कुर्वन्ति। ८. सर्वेषामपि भौतिकपदार्थानाम् उत्पत्तिस्थितिप्रलयविधायिनी शक्तिः किल ईशित्वम्। सिद्ध्यैतया योगिनो नूतनां सृष्टिमपि कर्तुं सामर्थ्यवन्तो जायन्ते। इमा अष्टौ सिद्धय ईश्वरीयाः। एताभिर्योगिन ईश्वरस्वरूपतां प्रपद्यन्ते। ईश्वरानुकम्पयैव सर्वाभ्यर्हिताः सिद्धय एताः समधिगम्यन्ते।

ननु सिद्धिभिराभिः किं योगी द्वितीय ईश्वरो जायते? अत्रोच्यते—योगी द्वितीय ईश्वरो न भवति, परन्तु तद्गतो भूत्वा परमेश्वरे सम्मिलति। अतोऽसौ परमेश्वरनियमविरुद्धं नाचरति, ऐशीं विभूतिं द्वारीकृत्य योगिना यत् किमपि क्रियते, तत्सर्वमपि परमेश्वराज्ञानुकूलमेव मन्तव्यम्। सिद्धीरेताः प्राप्य योगिना सर्वं कर्तुं पार्यते। पाषाणे प्रवेष्टुं शक्यते, आवरणरहिते वियत्यपि तिरोहितेन भूयते। पञ्चान्यपि भूतानि क्लेशदानि न भवन्ति। माता प्रकृतिः परमं पितरं परमेश्वरमिव योगिनं सदैव सेवते।

भूतजयेन कायसम्पदपि अधिगम्यते, तदग्रे वक्ष्यते। तदानीं भूतजयिना योगिना रूपादिशरीरधर्मानभिघातोऽपि समधिगम्यते। अर्थात् पृथिव्यादि-पञ्चभूतानि योगिनः कामपि शारीरिकीं क्रियां न निरोद्धुं पारयन्ति। स शिलायां प्रवेष्टुमर्हति। जलं तम् आर्द्रं कर्तुं न शक्नोति। पावकः तदीयं शरीरं न दहति। न च वायुः प्रकम्पितं शुष्कं वा कर्तुमर्हति। इमाः सर्वा भूतजयकृताः सिद्धयो ज्ञेयाः॥ ४५॥

पूर्वोक्ता कायसम्पद् वर्ण्यते—

**रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत्॥ ४६॥**

रूपम्, लावण्यम, बलम्, वज्रतुल्यदृढत्वं चेति कायसम्पदः सन्ति। भूतजयेन योगी प्रकृत्या मुक्तः तज्जयेन च यामद्भुताम् ऐशीं शक्तिमधिगत्य अन्तःकरणबलमासादयति, तत्सर्वं पूर्वस्मिन् सूत्रे प्रतिपाद्य सूत्रकारो महर्षिः पञ्चभूतजयेन योगिना साधकेन या किल शारीरिकी विशिष्टयोग्यता समधिगम्यते, तद्वर्णनमारभते।

स्थूलशरीरस्य दिव्यसौन्दर्यधारणं 'रूपलावण्य'शब्देन समाख्यायते। यद् विलोक्यैव देवाः मानवाः पशुप्रभृतयश्चान्ये प्राणिनोऽपि मुग्धतां भजन्ते, योगी तादृशं सर्वाभ्यर्हितं बलमधिगच्छति, येन प्रकृतिरपि वशतामभ्युपैति। तादृशबलस्य संसारे तुलनैव न विद्यते। वज्रसंहननत्वस्य तात्पर्यमिदं यत् योगिनः शरीरं सर्वविधशस्त्र-महातीव्रवज्रवत् सुदृढं सम्पद्यते। एतादृशं दिव्यशरीरं योगी समधिगच्छति।

पूर्वसूत्रप्रोक्तसिद्धीः आविर्भावयितुं योगिराजेन स्वेच्छाशक्तेः संयमस्य च प्रयोगः क्रियते। किन्तु एतत्सिद्धिसमधिगमो योगिप्रयत्नानपेक्षः। पूर्वोक्ताः सिद्धयो येन योगिराजेन आसाद्यन्ते, तेन एतत्सूत्रप्रतिपादितोऽधिकारः स्वत एव लभ्यते। अत एवैतस्य सूत्रस्य स्वातन्त्र्येणाविर्भावः॥ ४६॥

सप्तविंशी सिद्धिरुदीर्यते —

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः॥ ४७॥**

ग्रहणम् , स्वरूपम् , अस्मिता, अन्वयः, अर्थवत्त्वं चेति इन्द्रियाणां पञ्चवृत्तयः । तेषु संयमेन इन्द्रिय-जयो जायते ।

१. सामान्यतो विशेषतश्च शब्दादयो बहिर्विषया 'ग्राह्याः' प्रोच्यन्ते । तेषु ग्राह्यविषयेषु गच्छन्ती इन्द्रियवृत्तिरेव 'ग्रहण'शब्देन उच्यते । २. विचारमन्तरेणैव अकस्मात् संगृहीतविषयेषु मनसः प्रथमविवेक एव स्वरूपवृत्तिः । ३. तादृशावस्थायाम् अहङ्कृतिमिश्रितो भाव एव अस्मितावृत्तिः । ४. सदसत्सामान्य-विशेषादिविचारशालिन्या बुद्धेर्वृत्तिः अन्वयः प्रोच्यते । ५. नानाविषयान् प्रकाशयन्ती स्थितिशीला साहङ्कारा सर्वेन्द्रियव्यापिका वृत्तिरेव पञ्चमी अर्थवत्त्ववृत्तिरवगन्तव्या । एतासु इन्द्रियपञ्चवृत्तिषु संयमेन तद्वशवर्तितासम्पादनेन इन्द्रियगणस्य पूर्णो विजयो बोभूयते ।

पूर्वोक्तेन्द्रियजयाद् भिन्नोऽयं विषयः । पूर्वसूत्रवर्णितम् इन्द्रियदमनं सामान्यमवधेयम् । परमेतद्रीत्या समधिगता सिद्धिर्विलक्षणैव । अनया योगी न केनापि विषयेण विचालयितुं शक्यते । स च जितेन्द्रियतायाः पूर्णामवस्थाम् अधिकरोतीति ॥ ४७ ॥

इन्द्रिय-जयस्योदर्कं निरूपयति—

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

इन्द्रियजयानन्तरं योगिना मनोजवित्वम् , विकरणभावः, प्रधानजयश्च समधिगम्यते । १. मनसो गतिरिव शरीरगतिप्राप्तिरेव 'मनोजवित्व'-मुच्यते । अर्थात् मनो यथा अनन्तयोजनव्यवहितदेशे द्रुततरमेव गच्छति, तथैव शरीरस्यापि सामर्थ्यप्राप्तिः मनोजवित्वम् । २. शरीरसम्बन्धपरित्याग-पूर्वकम् इन्द्रियवृत्तिप्राप्तिः 'विकरणभाव' उच्यते । अर्थात् यथाभिलषित-देशकालविषयादिषु शरीरं विनैव चक्षुरादीन्द्रियाणां गमनं विकरणभावः प्रोच्यते । एतेन योगिना एकत्र स्थाने स्थितवता अन्येषां दूरवर्तिस्थानानां दृश्यं द्रष्टुं पार्यते । ३. प्रकृतिविकार-मूलकारणजयो हि 'प्रधानजयत्व'-माख्यायते । एतेन सर्ववशित्वमधिगम्यते ।

एवं मनोजवित्वेन, विकरणभावेन, प्रधानजयेन च योगिना पूर्णरूपेण सिद्धयः समासाद्यन्ते। 'मधुप्रतीक'नाम्नीयं दशा। पूर्वसूत्रोक्तसमुन्नत-सिद्ध्यधिगमेन सिद्धिरियं स्वत एवोपलभ्यते। अत एव महर्षिणा सूत्रकृता एतत्सूत्रोक्तसिद्धिप्राप्तेः उपायो न निर्दिष्ट इति तत्त्वम्॥ ४८॥

अष्टाविंशी सिद्धिर्निदिश्यते—

**सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च॥ ४९॥**

बुद्धि-पुरुषयोः पार्थक्यज्ञानवता सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं चाधिगम्यते। पूर्वोक्तसूत्रेषु विविधाः सिद्धीः वर्णयित्वा सूत्रकारेण महर्षिणा निर्णीयत इदं यत् स्वान्तःकरणस्वच्छतया स्वयमेव परमात्मनो निर्मलः प्रकाशः प्रादुर्भवति, योगिना च बुद्धिरूपे दृश्ये पुरुषस्वरूपे द्रष्टरि च स्थितस्य सात्त्विकभेदस्य सुस्पष्टतयाऽनुभवः क्रियते। तदानीमसौ निखिलभावानां स्वामी सकलविषयाणां परिज्ञाता च सम्पद्यते। योगिराजो यदा स्वीयेन्द्रियाणि विजित्य तत्स्वामितां प्रपद्यते, तदानीं स्वत एवासौ महात्मा बुद्धेस्तत्परपारस्थितस्य पुरुषस्य च पार्थक्यापरोक्षानुभूतौ सामर्थ्यं लभते। इयमेव 'परासिद्धि'राख्यायते।

परा अपरेति भेदेन सिद्धिर्द्विविधा। विषयसम्बधिन्य उत्तममध्यमाधमा अपराः सिद्धयो मुमुक्षुभिर्हेयाः। स्व-स्वरूपानुभवोपयोगिनी परा सिद्धि-राख्यायते। परासिद्धेरुपयोगिन्यः सिद्धय एव योगिराजस्य उपादेयाः।

सिद्धिपथपथिकान् विमोहयितुम् उभयतः पन्थानम् उत्तमोत्तमभोग-वस्तूनि विद्यन्ते। यदि साधकपथिकः तीव्रवैराग्यसंयुक्तो मनसः सुदृढ-तया पन्थानमुभयतो भ्रमोत्पादकेभ्यो विक्षिप्तैश्वर्येभ्यो मुखं परावर्तयन् तानि नावलोकयति तर्हि स्वत एव शान्तिमयं तत्स्थानं प्राप्नोति, यत्रागमनेन निखिला अपि मनोवासनाः पूर्णतामापद्यन्ते, साधकश्च भगवद्दर्शन-सामर्थ्यं लभते। सत्त्वगुणप्रभावेण रजस्तमोमले अपसारिते, अन्तःकरणे च

स्वच्छतामधिगते ऋतम्भराख्या पूर्णज्ञानमयी बुद्धिरुदयति। मलमलीमसे अन्तःकरणे भगवत्साक्षात्कारो न जायते। मलराहित्यात् स्वच्छमन्तःकरणं भगवद्दर्शनसमर्थं जायते। योगिनोऽवस्थेयं 'विशोका' शोकरहिता समाम्नाता॥ ४९॥

विशोकावस्थायाः परिणाम उच्यते—

**तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्॥ ५०॥**

विवेकख्यातिजनितवैराग्येण दोषबीजे प्रणष्टे कैवल्याधिगमः। साधन-वैराग्याभ्यां पक्षाभ्यामुड्डीयमानः साधको हंसो विशोकावस्थामधिगत्य आत्मदर्शनसामर्थ्यं लभमानः तीव्रवैराग्यकारणात् मार्गोपलब्धे विविध-चाकचिक्ये यदा ग्रस्तो न जायते, तदा शनैः शनैः भगवत्साक्षात्कार-कृपाया अधिकारी भवन् मुक्तिस्वरूपं कैवल्यपदमासादयति। यदा योगी पूर्वोक्तामवस्थामधिगत्य क्लेशरूपकर्मभ्यः पृथग्भूत्वा परिपूर्ण-सत्त्वरूपिणीम् अभ्रान्तां बुद्धिं प्राप्य जीवावस्थातः अवस्थान्तरमासाद्य च स्वकीयान्तः-करणसङ्कल्पविकल्पविरहितः पूर्णानन्दमधिगच्छति, तदानीं पुनरसौ अधि-भूताधिदैवाध्यात्मरूपे तापत्रये न कदापि ग्रस्तो भवति, परमकल्याण-स्वरूपं कैवल्यपदं चासादयति।

उत्तमः, मध्यमः, अधमश्चेति साधकस्त्रिविधः। साधनपथेऽग्रेसरन् सिद्धिभोगी साधकोऽधमः। सिद्धिरवलोकमानोऽपि तद्भोगपराङ्मुखो मध्यमः। यस्तु कथञ्चिदपि सिद्धिर्नेक्षते, नैव च समीहते स उत्तमः। अतः परवैराग्ययुक्तः उत्तमसाधक एव मुक्तिपदस्य सर्वाभ्यर्हितोऽधिकारी। तेनैव त्वरितं मुक्तिपदमासाद्यते॥ ५०॥

समाधिभूमि-विघ्नान् वर्णयति—

**स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्॥ ५१॥**

स्थानिनाम् = उच्चस्थानप्राप्तदेवानाम्, उपनिमन्त्रणे = समीपमागत्य प्रार्थनायाम्, सङ्गस्य = आसक्तेः, स्मयस्य = अभिमानस्य, करणम् = अनुष्ठानं न युज्यते, यतस्तेन पुनरनिष्टप्राप्तिः सम्भवेत्यर्थः।

कालिपकः मधुप्रतीकः भूतेन्द्रियजयी, अतिक्रान्तभावनीयश्चेति योगी चतुर्विधः। अष्टाङ्गयोगसाधनतः अग्रेसरन् योगी 'कालिपक' उच्यते। ऋतम्भराप्रज्ञाप्राप्तश्च 'मधुप्रतीकः'। भूतेषु पूर्णाधिकारवान् 'भूतेन्द्रियजयी', कैवल्यभूमिमुपढौकमानश्च 'अतिक्रान्तभावनीयः' प्रख्यायते।

चतुर्थावस्थायाः सप्तभूमयः। प्रथमत एव योगिनो विघ्नभयं विद्यत एव। अतो वैराग्यमन्तरेण साधकोऽग्रेसर्तुं नार्हति। परन्तु चतुर्थावस्थायाः सप्तभूमिभ्यः साधकस्य विशिष्टं भयमास्ते। शास्त्रेष्वेतत् समुपलभ्यते यत् अतिक्रान्तभावनीयदशायां देवा योगिसम्मुखमागत्य बहुविधान् दिव्यपदार्थान्, नानाविधभोग्यवस्तूनि, मनोहारिणीः स्त्रियः, सुन्दरं स्थानम्, बहुप्रकाराः सिद्धा ओषधीश्च प्रदाय स्वात्मसात्कर्तुमभिलषन्ति। यदि योगी तेषु तेषु पदार्थेषु ग्रस्तोऽभिमानयुक्तश्च तैरेव समधिगतपदार्थैरात्मानं कृतकृत्यं मन्यते, तर्हि तदधोगतिर्दुर्निवारा। अन्यथा परवैराग्ययुक्तोऽसौ सप्तापि भूमीरतिक्रमन् कैवल्यपदमारूढो विमुच्यते।

प्रत्येकमपि ब्रह्माण्डं चतुर्दशभुवनविभक्तम्। ऊर्ध्वस्थसप्तभुवनेषु देवानाम्, निम्नस्थसप्तलोकेषु च असुराणां निवासः। असुरा अपि देवयोनय एव। प्रत्येकेनापि पिण्डेन साकं ब्रह्माण्डवत् चतुर्दशभुवनसम्बन्धो विद्यते। मानवपिण्डे देवपिण्डेऽपि च पञ्चकोषा समाना एव। पञ्चकोषेषु आधिपत्यं कुर्वाणो योगी प्राणमयादिकोषसाहाय्येन स्वकीये पिण्ड एव देवलोकमनुभवति। समुन्नतस्य योगिराजस्य अन्तःकरणं देवलोकसम्बद्धं बोभवीति। तदानीं नानाभोगप्रदानकारिणां देवानां दर्शनं जायते। तद्दर्शनेन परवैराग्यसंयुक्तस्य योगिराजस्य चित्तं न विचलति। इयमतीव समुन्नता अवस्था वर्तते॥ ५१॥

एकोनत्रिंशी सिद्धिरुच्यते—

**क्षणतत्क्रमयोः संयमाद् विवेकजं ज्ञानम्॥ ५२॥**

यावता कालेन परमाणुः परिवर्तते, तन्नाम 'क्षण'मिति। तदवच्छिन्नप्रवाहः 'क्रमः'। तयोः संयमेन विवेकः, अनुभवसिद्धं ज्ञानमुत्पद्यते।

भौतिकपदार्थस्य सूक्ष्मातिसूक्ष्मतमो भागः 'परमाणुः' उच्यते। कालस्यापि सूक्ष्मातिसूक्ष्मतमो भागः 'क्षणम्' इत्युच्यते। यावता कालेन परमाणुरेकं पूर्वस्थानं परित्यज्य अग्रिमं स्थानं प्राप्नोति, तावत्कालविभागस्य नाम क्षणमिति। तत्परमाणुगतिप्रवाह एव 'क्रम' इति महर्षिसूत्रकृतस्तात्पर्यम्। क्षणक्रमयोरेकत्र स्थितिरसम्भवा। परन्तु क्षणादिव्यवहारवती वुद्धिरेव स्वीयस्थिरतया मुहूर्त-दिन-रात्रि-वर्षादीनां व्यवस्थां विदधाति। वस्तुतः कालो हि वस्तुशून्यं द्रव्यम्, केवलं वुद्धेः परिणाममात्रं च। वस्तुशून्योऽपि कालः सांसारिकैर्मानवैः वस्तुसमानवत् परिज्ञायते। परन्तु योगिनस्तम् अन्यथैव पश्यन्ति। क्षणेनैव क्रमज्ञानम्। कालज्ञा योगिनः तं कालं निर्दिशन्ति।

वस्तुतः काल एक एव। यतो हि वर्तमानक्षणस्य पूर्वक्षणमुत्तरक्षणं चेति भेदद्वयम्। एतदपि वक्तुं शक्यते यत् भूतक्षणस्य परिणामो वर्तमानक्षणम्, तस्य च परिणामो भविष्यत्-क्षणमिति। अतस्त्रयमपि एकरूपम्, एकस्यैव रूपत्रयं वा। एतद्विचारमनुसृत्य सर्वोऽपि काल एकस्यैव क्षणस्य परिणामभूतः। समस्तब्रह्माण्डानामपि सर्गक्रिया एकस्यैव परिणामरूपा।

एवं योगवुद्ध्या क्षणक्रमयोः संयमेन, तयोः साक्षात् ज्ञानलाभेन च विवेकस्वरूपस्य अभ्रान्तपरिपूर्णसर्वव्यापकस्य ज्ञानस्य प्राप्तिर्जायते। एतादृशज्ञानोदयेन योगिनामन्तःकरणतोऽखिलोऽपि सन्देहोऽपास्यते। अतो योगिना यथेच्छं सर्ववस्तुयथार्थरूपं परिदृश्यते। योगी यत्रैव स्वीयां ज्ञानदृष्टिं प्रसारयति, तत्रैव तस्य वुद्धिः देशकालापरिच्छिन्ना अभ्रान्ता सती प्रयाति। योगिनोऽवस्थेयं 'त्रिकालदर्शिनी' प्रोच्यते॥ ५२॥

विवेकज्ञानस्य परिणाममुदीरयति—

**जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रवृत्तिः॥ ५३॥**

पदार्थानां भेदहेतुः जाति-लक्षण-देशाः। अर्थात् एतैस्त्रिभिरेव पदार्थेषु भेदो विज्ञायते। जात्या भेदो यथा—गोमहिष्योः गोत्व-महिषीत्वरूपजातिभेदः। कुत्र चिल्लक्षणभेदेन भेदः, यथा—गोषु एका कृष्णा, द्वितीया च

रक्ता। एवं लक्षणभेदतो वस्तुभेदोऽवधार्यते। यथा—पदार्थद्वये जाति-लक्षणयोरैक्ये प्राप्तेऽपि तदनैक्यं देशप्रादुर्भूतम्। यथा—समानप्रमाणामलक्ष्योः भेदः स्थलविशेषप्रादुर्भूतः।

किन्तु यत्र एकदेशे एकजात्येकलक्षणयुक्तं परमाणुद्वयं वर्तते, तदानीं तत्र भेदभावोऽसम्भवः। किन्तु पूर्वसूत्रे यो हि विवेकज्ञानविधिः प्रदर्शितः, तस्य साहाय्येन जाति-लक्षण-देशानां पूर्णभेदज्ञानप्राप्तिः सम्भवा। अर्थात् एवंरीत्या भेदेषु संयमेन योगी तत्त्वानां सूक्ष्मातिसूक्ष्मभेदान् परिज्ञातुं शक्नोति। सूक्ष्मतत्त्वेषु यत् ज्ञानमुत्पद्यते, तस्य 'विशेष'संज्ञा अग्रे वक्ष्यते ॥ ५३ ॥

विवेकज्ञानस्य वैशिष्ट्यं निरूपयति—

**तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥**

तद्धि 'तारक'मुच्यते, येन जीवः संसारसागरमुत्तरति। पूर्वोक्तविवेकजज्ञानेन संसारसिन्धुसन्तरणात् तत् 'तारक'मुच्यते। विवेकजेन ज्ञानेन निखिलाः पदार्था याथातथ्येन ज्ञानगोचरीभवन्ति। अतस्तत् 'सर्वविषयं' 'सर्वथाविषयं' वा प्रोक्तम्। अक्रमस्य तात्पर्यमिदं यत् पूर्वोक्तविवेकज्ञानेन क्रमं विनैव जागतिकं सर्वपदार्थकार्यजातं योगी पूर्णरूपेण ज्ञातुमर्हति। अर्थात् भूत-भविष्यद्-वर्तमानकालेषु सम्भूतं सम्भविष्यन्तं सम्भवन्तं च कार्यकलापं योगी परिज्ञातुमर्हति।

एतदेव ज्ञानमासाद्य त्रिकालदर्शिनो महर्षयो वेदानां संग्रहं विभागं च चक्रिरे। एतदेव ज्ञानमधिगच्छन्तस्ते पूज्यपादा दर्शनोपवेदस्मृतिपुराण-तन्त्रादिनानाशास्त्राणि स्वां स्वां रीतिं लक्ष्यं चानुसृत्य जीवोपकाराय प्रणीतवन्तः। विवेकजं पूर्णज्ञानमेव निःसहायजीवान् संसारसागरतस्तारयित्वा भगवत्पदं प्रापयति। अतस्तस्य 'तारकं' नाम। इयमेव परा सिद्धिः॥ ५४॥

परम्परासम्बन्धेन कैवल्यहेतुभूतान् निरूप्य अन्ते साक्षात् कैवल्यसाधनं वर्णयति—

**सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥**

पूर्वोक्ततारकबुद्धेः अधिगमेन यत्फलमुदेति, तस्यैव वर्णनमिदानीं सूत्रकृता महर्षिणा क्रियते। यदा सत्त्वगुणस्य प्रबलप्रवाहाद् रजस्तमसोः मलं पूर्णरूपेणापसर्पति, तयोर्नाममात्राऽनवशेषाद् बुद्धिः विमलत्वं प्रपद्यते। पुरुषभिन्नो योऽधिकारः, स सर्वोऽपि विलयं प्रपद्यते। तदैव पुरुषः स्वीयं यथार्थस्वरूपमधिगच्छति। पुरुषस्य भोगाभाव एव मुक्तेरवस्था। दशायामत्र द्वैतस्य भानं सर्वथा विनश्यति। एकमेवाद्वितीयम् अवशिष्यते। द्वैताभावे विषयभानमपि नास्ति। विषयनिवृत्त्या सर्वक्लेश निवृत्तिः। क्लेशलयेन कर्मफलनिवृत्त्या एकमात्रपुरुषोऽवशिष्यते। सूत्रेऽत्र बुद्धिशुद्धिः, बुद्धौ वृत्त्यभावः, पुरुषशुद्धिश्च पुरुषे चित्तधर्मानारोपद्वारा स्वरूपावस्थानम्। शुद्धिद्वयस्य समतायां कैवल्याधिगमः इत्युक्तम्।

प्रकारान्तरेणापि विषयोऽयं विविच्यते—तटस्थज्ञानम्, स्वरूपज्ञानं चेति भेदाद् बुद्धिर्द्विविधा। यावदहङ्कारसम्भवस्तावत् ज्ञातृ-ज्ञान-ज्ञेयरूपां त्रिपुटीं द्वारीकृत्य अन्तःकरणवृत्तयस्तिष्ठन्ति। योगिनोऽन्तःकरणे रजस्तमसोः नाशपूर्वकं यथा यथा सत्त्वगुणो विकसति, तथा तथा त्रिपुटीलयेन बुद्धिर्विशुद्ध्यति, अन्ते च पूर्णसत्त्वगुणोदयेन त्रिपुटीनाशतः स्वरूपज्ञानमुदेति।

अन्यच्च—बुद्धिशुद्ध्यभावे अन्तःकरणवृत्तयः पूर्णरूपेण नैव विनाशमायान्ति। वृत्तीनां प्रतिबिम्बितत्वात् पुरुषः स्वरूपं नाधिगच्छति। योगिनः समुन्नतदशायां वृत्तीनामभावात् पुरुषस्य यथार्थस्वरूपं प्रकाशते। तदानीं द्रष्टा स्वीये स्वरूपेऽद्वैतभावे स्थितो जायते। दशेयं 'बुद्धिशुद्धिः', 'पुरुषशुद्धि'श्चेत्युच्यते। पुरुषस्य एतदवस्थानामैव योगसाधनलक्ष्यं 'कैवल्यपदम्'। एतदेव परमपुरुषार्थस्य चरमं फलम्। एतस्य कैवल्यपदस्य विस्तृतं विवरणमग्रे वक्ष्यते। इतिशब्दः पादसमाप्तिपरिचायकोऽवधेयः ॥ ५५ ॥



# ४. कैवल्यपादः

प्राथमिकपादत्रये यथाक्रमं समाधिस्वरूपं तदर्थसाधनम्, योगैश्वर्यं च वर्णयित्वा सम्प्रति योगस्य अन्तिमफलरूपस्य कैवल्यस्याधिगमाय कैवल्यपादं वर्णयितुमुपक्रामति। परन्तु यावत् कैवल्ययोग्यचित्तस्य क्षणिकविज्ञानातिरिक्तात्मप्रसंख्यातपराकाष्ठाप्रभृतिविषयाणां प्रतिपादनं न भवति, न तावत् कैवल्यस्य यथार्थस्वरूपनिर्णयो भवितुमर्हति। अतः पादेऽत्र तानि सर्वाणि क्रमशो निरूप्यन्ते—

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

पूर्वपादे विविधाः सिद्धयो वर्णिताः। यद्यपि ता मुक्तिपदे प्रतिष्ठमानेन योगिना मार्गे एव लभ्यन्ते, तथापि सर्वविधप्राप्तसिद्धीनां सविस्तरवर्णनं सम्प्रति सूत्रकारेण महर्षिणा क्रियते।

सिद्धिर्जन्मतः समुत्पद्यते। यथा—परमहंसशुकदेवे महर्षिकपिलादौ च जन्मत एव सिद्धिरुत्पन्ना। औषधादिद्वारेणापि सिद्धयः समुत्पद्यन्ते। यथा—रसायनप्रभृत्यौषधैः ताम्रसुवर्णनिर्माणम्, कायाकल्पकरैः औषधैश्च जरानाशपूर्वकदीर्घायुष्ट्वप्राप्तिः। मन्त्रैरपि सिद्धिः प्राप्यते। यथा—गुटिकादिसिद्धिद्वारा आकाशगमनम्, तान्त्रिकमन्त्रसाधनेन मारणम्, वशीकरणम्, उच्चाटनादिकार्यं चेति। तपसाऽपि सिद्धिरधिगम्यते। यथा—तपःसाधनेन विश्वामित्रस्य ब्राह्मणत्वाधिगमः, भक्तप्रधानस्य नन्दिकेश्वरस्य च मनुष्यतो देवत्वप्राप्तिः। समाधितः सर्वविधसिद्धिप्राप्तेः सविस्तृतं वर्णनं तृतीयपादे प्रदर्शितमेव।

औषध्या, मन्त्रेण, तपसा च प्राप्ताः सर्वा अपि सिद्धयः समाधिसिद्धेः निम्नस्वरूपा इति वक्तुं शक्यन्ते। तासां सर्वासामपि पूर्वकारणं साहाय्यकारिसाधनं च समाधिरेव। जन्मतो या सिद्धिः प्राप्यते, तस्याः पूर्वकारणं

साधनमेव। यतः शुकदेवादिभिः प्राक् साधनानि कृतानि, अतो वर्तमानजन्मनि स्वतः सिद्धिरधिगता। औषधादिद्रव्ययोगेन या सिद्धिरासाद्यते, तयाऽपि शरीरं तादृशमेवोपयोगि जायते, यादृशं समाधिना सम्पद्यते। एवमेव मन्त्रतपःसिद्धयोऽप्यवगन्तव्याः। यतो मन्त्रतपःसाधनद्वारा शनैः शनैः साधकस्य शरीरं मनश्च तादृशमेवोपयोगि भवति, यथा समाधिना भवितुमर्हति।

विषयेऽत्र शास्त्रप्रमाणानि यथा—

"जन्मौषधिपदोपास्ति - तपोमन्त्रसमाधितः।
संयमेनापि लभ्यन्ते सिद्धयोऽलौकिका द्विजाः॥
अष्टोपायाः प्रधाना हि सन्तीमे सिद्धिलब्धये।
सन्ति जातिस्मरत्वादिसिद्धयो जन्मसिद्धयः॥
या सिद्धगुटिका कायकल्पैश्चैव रसायनम्।
अन्या चैवंविधा सिद्धिरोषधीसिद्धिरुच्यते।
नैमित्तिक्यश्च या देवशक्तयो राजशक्तयः।
अन्याश्चैवंविधाः सर्वाः शक्तयः पदसिद्धयः॥
उपास्तेः सिद्धयः सन्ति देवतादर्शनादयः।
यासु सिद्धिषु लब्धासु जायतेऽभ्युदयो ध्रुवम्॥
षट्वशीकरणादीनि यानि कर्माणि सन्ति च।
अन्यान्यन्तर्भवन्त्येवं मन्त्रसिद्धौ न संशयः॥
नैवास्त्येवंविधा सिद्धिर्दैवी वा काऽप्यलौकिकी।
या संयमसमाधिभ्यां लभ्यते तपसा न वा॥
चतुर्विधा हि लभ्यन्ते सिद्धयो निश्चितं द्विजाः।
उपायैरष्टभिः प्रोक्तैर्नात्र कार्या विचारणा॥
अनन्ताः सिद्धयो याश्च लोके मच्छक्तिसम्भवाः।
विभक्ताः सन्ति ताः सर्वाश्चतुर्धैव मया पुरा॥
तासां च लब्धये नूनमुपाया अष्टनिर्मिताः।
तैरेव ताश्च प्राप्यन्ते निश्चितं विप्रपुङ्गवाः॥

कुर्वाणा लौकिकं कार्यं सन्ति याः सिद्धियोऽखिलाः ।
ता ज्ञेया निखिला विप्रा आधिभौतिकसिद्धयः ॥
या दैवकार्यकारिण्यः सिद्धयः सम्प्रकीर्तिताः ।
ता ज्ञेया आधिदैविक्यः सिद्धयो निखिलाः खलु ॥
सिद्धयो ज्ञानविज्ञानप्रकाशिन्यश्च या इह ।
नैवात्र विस्मयः कार्यो भवद्भिर्विप्रपुङ्गवाः ॥
सहजाख्या तु या सिद्धिर्वर्तते विज्ञसत्तमाः ।
एताभ्यः सर्वसिद्धिभ्यः सा नितान्तमलौकिकी ॥
ममावतारवृन्देषु स्वयमेव प्रकाशते ।
तत्त्वज्ञानैर्महात्मानो मनोनाशेन वै ध्रुवम् ॥
निर्वासनतया चैवोन्मूलयन्तः स्वजीवताम् ।
शिवरूपी भवन्तश्च समाधौ निर्विकल्पके ॥
तिष्ठन्तो यान्ति मय्येव लयमेकान्ततो यदा ।
मदिच्छया तदा तेषु सहजा कर्हिं चिद् भवेत् ॥" इति ।

सिद्धयस्तु सिद्धय एव । नात्र मुमुक्षुभिर्ध्यानं देयमिति ॥ १ ॥

यदि जन्मान्तरे परिपाकप्राप्तसुकृतिवशतः सिद्धयोऽधिगम्यन्ते चेत्तर्हि नन्दीश्वरादीनां जात्यन्तरपरिणामः अस्मिन्नेव जन्मनि कथं सम्पद्यते इति शङ्कां समाधातुं प्रोच्यते—

**जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥**

प्रकृतेरनुप्रवेशकारणात् जात्यन्तरपरिणामो वोभवीति । विस्तृतरूपेण पूर्वविवृतसिद्धिषु असाधारणपरिवर्तनेन प्रकृतौ कथमिव तादृशं परिवर्तनं सम्भवमिति शङ्कां सूत्रकृन्महर्षिः समाधत्ते ।

तथाहि—प्रकृतिपरिणामेनैव सर्वं सम्पद्यते । प्रकृतौ परिणामे सति शरीरेन्द्रियेष्वपि परिणामो नूनं भावी । शरीरोपादानकारणरूपपञ्चभूतानाम्, इन्द्रियोपादानकारणरूपसूक्ष्मतत्त्वानां चानुप्रवेशत एकस्मिन्नेव जन्मनि शरीरान्तरस्य जात्यन्तरस्य चाधिगमो नासम्भवः । यदा एकस्माज्जन्मनो

जन्मान्तरप्राप्तिर्जायते, तदानीमेकस्याः प्रकृतेः प्रकृत्यन्तरपरिवर्तनं सम्पद्यत एव। अर्थात् कोऽपि जीवो यदि प्रथमे जन्मनि मनुष्यः, परन्तु द्वितीयस्मिन् जन्मनि स वै देवोऽजायत, तदा तस्य तज्जन्मपरिवर्तनेन मनुष्यप्रकृतिः परिवर्तिता सती दैवीं प्रकृतिं प्रापत्। अतो जन्मद्वारा प्रकृतिपरिवर्तनं सिद्धमेव। यथा एकप्रकृतियोगाद् अपरा प्रकृतिः परिवर्तते, यथा विषप्रयोगेण सुन्दरमपि शरीरं गलित्वा विनश्यति, तथैव द्रव्ययोगरूपौषधिं द्वारीकृत्य मानवो निजामेकां प्रकृतिं प्रकृत्यन्तरपरिणतां कुर्वन् सिद्धिमधिगन्तुं शक्ष्यति। मन्त्रतपःसाधनादिना प्रकृतौ आधिपत्येन समाधिसिद्ध्या वा प्रकृतौ आधिपत्यतः कथमिवैका प्रकृतिः अन्यत्र प्रकृतौ परिवर्तिता क्रियत इत्यस्य प्रमाणं नितरां सरलमास्ते। विवरणमप्यस्य प्रागपि सुप्रपञ्चितमेव। अतः सर्वविधसिद्धयः प्राकृतिकपरिणामेनैव समुत्पद्यन्ते, तदसाधारणपरिणामेन च नन्दीश्वरस्येव एकस्मिन्नेव जन्मनि जातेः शरीरस्य च परिवर्तनं सिद्ध्यति।

विषयमिमं प्रकारान्तरेणपि स्पष्टयति यदेको जीवो जन्मान्तरेण मनुष्यतो देवत्वं प्रपद्यते किं वा क्षत्रियाद् ब्राह्मणत्वमासादयति, तदानीं तदीयकर्मवेगेन शरीरान्तरप्राप्तिकाले तस्य परिवर्तितदशामनुसृत्य स्थूलं शरीरमधिगम्यते। यतो हि स्थूलं शरीरं गुणाधाररूपं विद्यते। जीवानां क्रमोन्नतेरयमेव साधारणः क्रमः। योगी यदा सिद्धिर्द्वारीकृत्य स्वकीयप्रकृतौ असाधारणं परिवर्तनं चिकीर्षति, एकस्मिन्नेव जन्मनि मानवतो देवत्वस्य क्षत्रियतो ब्राह्मणत्वस्य गुणं प्राप्तुं समीहते, तदानीमिहैव जन्मनि मानससृष्टिवत् स्वकीयान्तःकरणप्रबलवेगेन निजदेहपरमाणुषु जन्मान्तरप्राप्तिवत् परिवर्तनमनुष्ठातुमर्हति। तदानीं तादृशी प्रकृतिस्तादृशा गुणाश्च स्वत एव प्राकट्यमाप्नुवन्ति॥ २॥

प्रकृतेरापूरणे धर्मादेः प्रवर्तकत्वं विद्यते न वेति शङ्कां समाधातुमुच्यते —

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्॥ ३॥**

धर्मादीनां निमित्तत्वं प्रकृतिप्रयोजकं नास्ति, आवरणनिवृत्तिः कृषकवत् विज्ञातव्या। पूर्वसूत्रे प्रमाणितं यत् सिद्धिद्वारा ऐश्वर्यमधिगम्यते। तच्च सर्वं प्रकृतिपरिणामजन्यमेव। निमित्तभूतौ धर्माधर्मौ प्रकृतिपरिणाम-प्रयोजकौ भवितुमर्हतो न वा, तयोः प्रकृत्या कः सम्बन्धः, धर्माधर्मरूपकार्येण च किं फलमिति विचारवतः पुरुषस्य शङ्काया उत्तरे महर्षिणा सूत्रकृता प्रोच्यते यत् धर्माधर्मनिमित्तं प्रकृतिप्रयोजकं नास्ति, यतः कार्येण कारणं नोत्पद्यते इति।

यथा—कश्चित्कृषक उन्नतायां निम्नायां वा प्रणाल्यां यदा जलमानेतु-मिच्छति, तदानीं तस्याः प्रणाल्या उन्नतत्वावनतत्वानुसारेण बन्धं निर्माति। तदानीं बन्धे समतलत्वमापन्ने प्रणाल्यां जलं स्वयमेव प्रवहमाण-मापतति। तथैव यदा प्रकृतेः आवरणरूपमधर्मं प्राकृतिको धर्मः कर्तयित्वा प्रकृतिपथं सरलीकरिष्यति, तदा प्रकृतिः स्वत एव कार्योपयोगिनं परिणामं धारयन्ती तदवस्थानुरूपतां प्रतिपत्स्यते। अधर्मनाशाद् धर्मसाहाय्येन प्रकृतिः परिणामं धत्ते, अतोऽधर्मनिवृत्तिकारणत्वं धर्मस्यैव। अर्थात् कस्या-श्चन सिद्धेः प्राप्तौ धर्मद्वारेण अधर्मनाशपूर्वकं प्रकृतिः सिद्धीनामैश्वर्यप्राप्तेः उपयोगिनी जायते। अत्र यथार्थतो धर्मादीनां कारणता नास्ति। धर्मः किल अधर्मनिवृत्तेः साक्षात्कारणम्; परन्तु तस्य प्रकृतिपरिणामसाक्षा-त्कारणत्वं नोपपद्यत इति॥ ३॥

अनेकशरीरैः सह अनेकचित्तप्राप्तिर्निरूप्यते—

**निर्माणचित्तान्यस्मितामात्रात्॥ ४॥**

चित्तोत्पत्तिकारिणी केवलमस्मितैवेति सूत्रभावार्थः। यदि तत्त्वज्ञाता योगी बहूनां कर्मणाम् एकस्मिन्नेव काले फलभोगाय स्वीयां सिद्धिं प्रकाशयन् अनेकदेहधारणं समीहेत, तदा तस्य एकमन्तःकरणं कथमनेकत्वं प्राप्स्यतीति प्रश्नं समाधत्ते महर्षिः सूत्रकार एतेन सूत्रेण।

केवलमस्मितैव अन्तःकरणकारणभूता समुत्पादयति अन्तःकरणम्। अर्थाद् अस्मितयैव प्राणी अन्तःकरणवान् जायते। यथा चैकोऽग्निस्फुलिङ्गः

अनेकान् अग्निस्फुलिङ्गानुत्पादयति, तथैव योगबलेन एकमन्तःकरणम् अनेकत्वं प्रपद्यते। महत्तत्त्वमधिकुर्वन् योगी यथेच्छम् अनेकानि अन्तः-करणानि स्रष्टुमर्हति। सञ्चित-क्रियमाण-प्रारब्धेषु प्रारब्धं कर्मैव मानव-पिण्डकारणम्। अत एकस्य शरीरस्यानन्तरं द्वितीयशरीरस्य उपलब्धिरिति साधारणो नियमः। किन्तु योगदर्शनसिद्धान्तमनुसृत्य यदा योगिराजः अदृष्टजन्मवेदनीयकर्माणि दृष्टजन्मवेदनीयकर्मरूपेण परिणमयति, तदानीम् एकस्मिन्नेव जन्मनि सञ्चितकर्माणि प्रारब्धकर्मरूपेण परिणमयन् सः अनेकशरीरधारण-योग्यताम् अधिकरोतीत्यत्र नास्ति सन्देहलेशः।

स्थूलं शरीरमनेकत्वं प्रपद्यते, किन्तु तत्केन्द्रमन्तःकरणं कथमनेकताम् अधिकरोतीति शङ्कायाः समाधानं सूत्रेणैतेन अनुष्ठितम्। आत्मनो व्यापकत्वमस्त्येव। केवलमन्तःकरणरूपम् आत्मनः प्रतिबिम्बधारकं यन्त्रमेव यदि नानात्वं भजते तर्हि तेषु आत्मनः प्रतिबिम्बं प्रतिफलितं भवत् अनेकत्वं प्राप्स्यत एवेत्यत्र कः सन्देहः? स्वकीयेऽन्तःकरणे संयमेन योगी स्वान्तःकरणास्थामस्मिताम् अनेकधा विभाजयितुं शक्नुयात्, तर्हि तदन्तःकरणमपि अनेकत्वं प्रतिपद्यमानं भविष्यत्येव। तेषु च चित्प्रति-बिम्बानां पृथक्त्वेन प्रतिफलितत्वात् स्वतन्त्रेषु केन्द्रेषु स्थूलसूक्ष्मशरीर-चालनोपयोगीनि कर्माणि यानि अदृष्टजन्मवेदनीयानि सन्ति, तानि दृष्ट-जन्मवेदनीयस्वरूपं धारयिष्यन्त्येव। इत्थम् अस्मितया विविधकारण-शरीरप्रादुर्भावः स्वतः सिद्ध्यति॥ ४॥

चिन्तानेकत्वे अभिप्रायानेकत्वाद् व्यवहारः कथं सिद्ध्यतीत्युच्यते—

**प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्॥ ५॥**

प्रवृत्तिभेदे सति एकमेव चित्तमनेकेषां चित्तानां प्रयोजकत्वमापद्यते, यदैको योगी सिद्धिं द्वारीकृत्य अनेकप्राणिरूपतां प्रपद्यते, तेषु प्राणिषु अनेकान्तःकरणसत्त्वाद् एष प्रश्नः समुदेति यत् सर्वेष्वन्तःकरणेषु स्वतन्त्र-रूपैः संस्कारैर्भवितव्यम्, किं वा योगी स्वयमेव केनापि प्रकारेण तेषु प्रेरणां विदध्यात्? इति।

अत्र समाधत्ते सूत्रकारः—नवीनोत्पन्नान्तःकरणेषु स्वतन्त्रसंस्काराणामसम्भवत्वमेव, किन्तु अन्तःकरणमेकम् अनेकेषामन्तःकरणानां प्रयोजकं भवितुमर्हति। अर्थात् सर्वेषाम् अन्तःकरणानाम् अधिष्ठातृरूपमेकमेव योगिनोऽन्तःकरणमास्ते। यदि योगिनः शक्त्यैव विविधशरीरेन्द्रियान्तःकरणानां सृष्टिस्तदा तदीयमन्तःकरणमेव सर्वेषु चाप्यन्तःकरणेषु कार्यारम्भकं भवेत्। अस्यामवस्थायां योगिराजः स्वीयां संयमशक्तिं द्वारीकृत्य निजकर्माशयतः सञ्चितकर्मणां बहून् अंशानाकृष्य प्रारब्धरूपे परिणमयितुमर्हति। ततश्च नूतनसमागतान् प्रारब्धकर्मराशीन् स्वेच्छाशक्त्या स्वतन्त्रानेकशरीरभोगोपयोगिविभागेषु विभक्तान् विधत्ते। सुतरां योगिराजस्य एकमेवान्तःकरणं वस्तुतः प्रथमं संयमशक्तेः, ततश्च इच्छाशक्तेः प्रयोगद्वारा स्वीयकर्मणां विभागेन बहुशरीरप्रयोजकं बोभवीति ॥ ५ ॥

परायाः सिद्धेरधिकारं प्राप्तस्य समाधिसंस्कृतचित्तस्य वैलक्षण्यं प्रतिपादयति—

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

तत्र यद् ध्यानसमुत्पन्नं तदेव चित्तं रागद्वेषविरहितं भवितुमर्हति। धारणाभूमिसमुत्पन्नः संयमः, एकतत्त्वं च ध्यानभूमिसमुत्पन्नम्। सकामो योगी यदा अपरायां सिद्धौ प्रवर्तते, तदानीं धारणासमुत्पन्नायाः धारणाध्यानसमाधिरूपसंयमशक्तेः बलेन सः अपरां सिद्धिमधिगच्छति। परन्तु निष्कामः समुन्नतो योगिराजः संयमप्रयोगमकृत्वा केवलमेकतत्त्वाश्रयेण ध्यानयोगयुक्तो भवन् समाधेः समुन्नतामवस्थामधिकरोति। इयमेव परायाः सिद्धेरवस्था। दशायामस्यां रागद्वेषयोः सद्भावोऽसम्भवः।

समाधिसिद्ध्या योगयुक्तमन्तःकरणमेव रागद्वेषादिवृत्तिविरहितं भवितुमर्हति। यतः क्लेशप्रहाणशक्तिः समाधावेव सम्भवा। अतो योगयुक्तं समाधिस्थमन्तःकरणं यदा पापपुण्यभानं सुखदुःखानुभवं प्रवृत्तिनिवृत्तिसम्बन्धं च परित्यज्य नैर्मल्यमासादयति, तदैव तत्र पूर्वोक्तसमुन्नतसिद्धीनां सद्भावः सम्भवः। अर्थात् तदैवासौ मुक्तो योगिराज ईश्वरीय-

शक्तिमधिगच्छन् ईश्वरेच्छया यथेच्छमनुष्ठातुं प्रभवति। एतादृशसमुन्नतपरासिद्ध्यधिकारवतो महापुरुषस्य जीवन्मुक्तयोगिराजस्य कृते संयमक्रियासमुत्पन्ना अपरा सिद्धिर्नावश्यकी। तस्मिन् कदाचित् कस्याश्चन सिद्धेराविर्भावः परमेश्वरसमीहया सहजसमुत्पन्न एव मन्तव्यः। इयमेका विलक्षणावस्था ॥ ६ ॥

चित्तस्येव कर्मणो वैशिष्ट्यं विविनक्ति—

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

योगिनः कर्म अशुक्लम् अकृष्णं च ; इतरेषां तु तत् त्रिविधमवगन्तव्यम्। पूर्वसूत्रेण समाधिस्थस्य योगिनोऽन्तःकरणस्य अपूर्वत्वमुपवर्ण्य, अनेन सूत्रेण सूत्रकारेण महर्षिणा समाधिस्थस्य योगिनः कर्मणामपि अद्भुतत्वमुपवर्ण्यते। प्रागैव एतन्निर्णीतं यद् बहूनां सिद्धीनामधिगतिः जन्मादिपञ्चप्रकारेण सम्पद्यते ; किन्तु समाधिस्थस्य योगिनो यदन्तःकरणवैशिष्ट्यं तदन्यत्र सिद्धिषु नैव भवितुं शक्नोति। साम्प्रतम् एतन्निर्णीयते यद् यथाविधं कर्म अन्ये जीवाः समनुतिष्ठन्ति, नैव तथाविधं परां सिद्धिं प्राप्तेन समाधिस्थेन योगिना समनुष्ठातुं शक्यते। तस्य कर्म वैलक्षण्यमावहति।

सत्त्वरजस्तमोरूपत्रिगुणभेदेन साधारणजीवानां कर्म त्रिविधमवधेयम्—शुक्लम्, मिश्रितम्, कृष्णं चेति भेदात्। पुण्यात्मसात्त्विकमनुष्याणां शुक्लं कर्म, मध्यवर्तिनां राजसिकानां मिश्रितं कर्म, निकृष्टानां तामसिकानां मानवानां च कृष्णं कर्म अभिधीयते। एतत् त्रिविधगुणविचारेणैव लोकादीनामपि सृष्टिः। यथा—शुक्लकर्मविशिष्टानाम् ऊर्ध्वलोकाः, मिश्रितकर्मणां मृत्युलोकः, कृष्णकर्मविशिष्टानां चाधोलोकाः सन्ति। गुणभेदमनुसृत्यैव कर्मणां विभागः। वासनयैव संस्काराणामुत्पत्ति-स्थितयो जायन्ते। परन्तु योगिषु नैतत्सम्भवति। यदा समाधिसाधनद्वारा योगिनोऽन्तःकरणं निर्मलत्वमुपैति, तदा तत्र वासनाराहित्यात् त्रिविधकर्मणां लेशमात्रमपि नावशिष्यते। तत्कर्मणामेका विलक्षणावस्था जायते।

अस्मितयैव अन्तःकरणेषु संस्काराः संगृह्यन्ते। अर्थाद् अस्मितयैव हेतुभूतया जीवाः शरीराद्यन्तःकरणान्तानि आत्मवन्मन्यन्ते। अतस्तदनुष्ठितकर्मसंस्काराः तदीयचित्तेषु तिष्ठन्ति। एतदेव त्रिविधसृष्टिकारणम्। परन्तु समाधिस्थजीवन्मुक्तमहात्मसु नैतादृशं सम्भवति। अस्मितानाशेन तदीयमन्तःकरणं सर्गक्रियानुपयोगित्वं प्रपद्यते। वासनाविनाशान्न तत्र संस्काराः संगृह्यन्ते। सर्वमनुतिष्ठतामपि समाधिस्थमहात्मनां कर्माणि दग्धबीजवत् नाङ्कुरोत्पत्तिसामर्थ्यं भजन्ति। अर्थात् तैरपि कर्माण्यनुष्ठीयन्ते। परन्तु संस्काराबद्धतया तदीयनिर्बीजकर्माणि तान् योगिनो नाश्रयन्ति। सबीजकर्माणि यथा जीवाननुसरन्ति, न तथा निर्बीजकर्माणि तान् योगिन इति भावः। श्रीभगवताऽपि गीतायामुक्तम्—

"कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्॥" इति।

अन्यदपि प्रतिपादितं तेनैव तत्र—

"योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥"
"ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा॥" इति च।

अत एव सूत्रेऽत्र तदीयं कर्म अशुक्लमित्युक्तम्। तदीयशुद्धबुद्ध्या तामसिककर्मणो लेशमात्रमपि नोत्पद्यत इति हेतोस्तत्कर्म अकृष्णमप्युच्यते।

भगवद्विभूतिधारणेन महात्मानोऽपि भगवत्स्वरूपतां भजन्ते। समस्तान्यपि ब्रह्माण्डानि भगवत्येव तिष्ठन्ति। ब्रह्माण्डानां निर्माता परमेश्वर एव। किन्तु ब्रह्माण्डानि तत्कर्माणि च तं नाश्रयन्ति। तथैव अस्मिताशून्यं निष्कामं जितेन्द्रियं जीवन्मुक्तं योगिगणं तत्कृतकर्माणि नाश्रयन्ति। अतो योगिनां कर्मानुष्ठानं किमपि वैलक्षण्यमावहति। तेषां शारीरिकाध्यात्मिककर्माणि, नानाविभूतिसम्बद्धानि, तत्तदैशसिद्धिप्रकाशकानि सर्व-

विधान्यपि कर्माणि वैलक्षण्येन सर्वाण्यपि तानि तदिच्छानिच्छारूप-भगवदिच्छया क्रियमाणानि संसारकल्याणसाधकानि भवन्ति, परन्तु नैव तान् लेशमात्रमपि स्पृशन्ति।

ईशकोटिमहात्मनां विषये भगवदुक्तिर्यथा—

"त ईशप्रतिमाः सन्तो भगवत्कार्यरूपतः।
संरक्ता विश्वकल्याणे सन्तिष्ठन्ते महीतले॥
विश्वमेवंविधैरेव ह्येकमात्रं स्वधाभुजः।
भवत्युपकृतं धन्यं जीवन्मुक्तैर्महात्मभिः॥
सन्ति भागवता एवं भगवद्रूपिणो ध्रुवम्।
तेषां सततयुक्तानां मयैव पितृपुङ्गवाः॥
चित्ते सर्वज्ञताबीजं भवत्यारोपितं खलु।
मत्कार्यतत्परांस्तांश्च सर्वथा मत्परायणान्॥
देशकालौ न बाधेते कथञ्चित्किल कर्हिचित्।
जीवन्मुक्ता महात्मान ईशकोटिं समाश्रिताः॥
यत् किञ्चनेह संसारे कार्यं कुर्वन्ति सन्ततम्।
कार्यं ममैव तत्सर्वं कुर्वते पितृपुङ्गवाः॥
यतोऽन्तःकरणं तेषां जैवाहङ्कारवर्जितम्।
पूर्यते समदर्शित्वनिरासक्त्यादिभिस्तदा॥
भगवत्कार्यबुद्ध्यैव निरीक्ष्यन्ते निरन्तरम्।
सर्वस्मिन् समये ते च परार्थे केवलं रताः॥" इति॥७॥

त्रिविधकर्मणां फलं निर्दिशति—

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥**

ततः = तदनन्तरं तेषां त्रिविधकर्मणां विपाकानुगुणानां वासनानाम् अभिव्यक्तिः प्राकट्यं जायते। योगिकर्मवैलक्षण्यमुदीर्य सम्प्रति महर्षिः सूत्रकारः सविस्तरं कर्मणां विवरणं निर्वक्ति। सहजम्, जैवम्, ऐशमिति त्रिविधं कर्म। उद्भिज्जादिस्वाभाविकसृष्टिप्रदं सहजं कर्म; ऐशशक्ति-

सम्बन्धनिबन्धनम् ऐशम् ; मनुष्यादिसम्बन्धयुक्तं च जैवमुच्यते। सञ्चित-क्रियमाण-प्रारब्धभेदेन जैवं कर्म त्रिप्रकारकम्। एतत्त्रितयमपि कृष्ण-शुक्ल-मिश्रभेदात् त्रिधा विभक्तम्। एषु यस्य प्राबल्यं तदेव क्रियाशीलतां भजते। अर्थात् शुक्लकर्मणः प्राबल्ये कृष्णं मिश्रितं च तिरोहिते तिष्ठतः, शुक्लस्यैव च कर्मणः फलं प्राकट्यमेति।

पूर्वं किल दृष्टादृष्टभेदेन द्विविधकर्मगतिवर्णनं सविस्तरं प्रपञ्चितम्। कर्मबीजं संस्कार इत्युच्यते। यथा बीजाद् वृक्षस्तस्माच्च बीजमुत्पद्यते, ततश्च सृष्टिधारा प्रवहति, तथैव कर्मणः संस्कारः, संस्काराच्च कर्म समुत्पद्यते। संस्काररूपबीजाद् अङ्कुरादिसमुत्पत्तिक्रम एव 'विपाक'शब्देन अभिधीयते। तस्य विपाकस्य क्रमोऽप्येवंविधः— पूर्वं वासना समुत्पद्यते, ततः प्रवृत्तिः। वासनाया अप्राबल्ये प्रवृत्तिर्नाग्रेसरति। वासनायाः प्राबल्यादेव प्रवृत्तेरग्रेसरत्वं सिद्ध्यति। स्मृतिरपि संस्कारादेव जायते। प्रवृत्तेरग्रेसरत्वे कर्मविपाकः फलं प्रसूते। अदृष्टाद् दृष्टोत्पत्तौ सर्वमिदं वोभूयते। एवं किल सत्त्वरजस्तमोविशिष्टानि शुक्ल-कृष्ण-मिश्रितकर्माणि नूतनवासनाः नवीनकर्माणि च समुत्पाद्य अग्रेसरतां प्रपद्यन्ते। एतदेव वासनारूपकर्मणाम् आनन्त्यमवधेयम्। एतद्भ्रान्तितो जीवनिःसृतिः दुःसाध्या। तद्भ्रान्तेर्निःसरणमेव मोक्ष इति ॥ ८ ॥

शक्तिभेदमनुसृत्य संस्कारोदयस्य क्रमो निर्दिश्यते —

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कारयो-रेकरूपत्वात् ॥ ९ ॥**

याः किल कर्मवासनाः जन्मदेशकालव्यवहिताः सन्ति, तासामपि क्रमपूर्वकः समुदयो जायते, यतः स्मृतिसंस्कारा एकरूपा एव सन्ति। प्रागेवोक्तमिदं यत् तीव्रतया मन्दतया च यथा कर्मणो दृष्टादृष्टत्वं जायते, तथैव शक्तिभेदमनुसृत्य सर्वाणि चापि कर्माणि स्मृतिसंस्कारदशामधिगच्छन्ति। जीवेन यत् कर्म, अनुष्ठीयते, तस्य स्मृतिः संस्कारश्च तस्य चेतसि

प्रतिफलति। यद्यपि दर्शनेऽत्र चित्तशब्देन अन्तःकरणं गृह्यते, तथापि चित्तमन्तःकरणस्यैको विभागो यत्र संस्कारबीजं सञ्चितं तिष्ठति।

सञ्चितस्य संस्काररूपबीजस्य स्मृतिस्वरूपं दृश्यं तिष्ठति, तच्च कदा चिद् उदेति, कदा चिच्च नोदेति ; यथा बहोः कालस्य वृत्तान्तं जीवो विस्मरति, किं वा जन्मान्तरकर्माणि न संस्मरति। परन्तु तत्संस्काराणां स्थायिता अवश्यम्भाविनी। एष एव स्मृतिसंस्कारयोर्भेदः।

केवलं कर्मणां शक्तिभेदमात्रेणैव दशाभेदोऽयमवगन्तव्यः। अतो महर्षिणा सूत्रकृता एतन्निर्णीयते यद् यदि चापि जन्म-देश-कालभेदेन कर्मणां पार्थक्यं बोभवीति, किन्तु स्मृतिसंस्कारदृष्ट्या एकत्वेन तानि सर्वाणि कर्माणि स्वीयक्रमानुसारेण उदयमेष्यत्येव। उदाहरणेनैतदवधेयं यद् यद्येको जीवो गुणभेदात् शुक्लं देवशरीरोपयोगि, मिश्रितं मानवयोन्युपयोगि, कृष्णं च पश्वादिशरीरोपयोगि कर्म सङ्गृह्णन् कर्माशयं पूरयति; यथा चोष्मताप्रभावेण आकाशस्थितपवनस्य तरलांश उपरि, गम्भीरांशश्च नीचैरापतति, तथैव कर्मणां शक्तितारतम्येन किमपि कर्म प्रबलं किमपि च दुर्बलं बोभूयमानं तेषु कर्मसु जन्म-देश-कालानाम् अन्तरमासाद्यते। तत्र च तीव्रो मन्दो वा संस्कारस्तु संस्कार एव। तत्समूहः स्वीये काले यथाक्रममुदयं प्राप्नोत्येव।

एकस्य जीवस्य देवयोनियोग्यं मानवशरीरोचितं वा कर्म अनेकविधं समुपस्थितमस्ति। परमेकस्मात् शरीरात् शरीरान्तरग्रहणकाले तीव्रसंस्काराः शुक्लकृष्णमिश्रितकर्मणां प्राबल्यमनुसृत्य देवत्वं पशुत्वं मानवत्वं च प्रापयन्तो जन्मदेशकालभेदान् प्राप्नुवन्ति। शुक्लकृष्णमिश्रितसंस्काराणां ये च दुर्बलाः संस्कारास्ते स्वस्वक्रमस्योदये नैजं फलं प्रकाशयिष्यन्त्येव। एवं हि संस्कारात् स्मृतेः, ततश्च संस्कारस्य, स्मृतितरङ्गानन्तरं संस्कारतरङ्गस्य, संस्कारतरङ्गानन्तरं स्मृतितरङ्गस्य च आविर्भावो बोभूयमानो जीवम् अनाद्यनन्तकर्मसमुद्रे प्रवाहयति। एष एवानन्तसृष्टेः अनन्तविस्तारः॥ ९॥

क्रमविन्यासससिद्धये वासनास्वरूपमुच्यते—

**तासामनादित्वं चाशिषो नित्यत्वात्॥ १०॥**

वासनानामनादित्वम्, स्वकल्याणेच्छाया नित्यत्वात्। पूर्वमेवेदं सिद्धान्तितं यद् यथा तरङ्गाणामाघात-प्रतिघातैः अनन्ततरङ्गा आविर्भवन्ति, ते च जलाशयमाच्छादयन्ति, पुनश्च घातप्रतिघातैः क्रमागतास्तरङ्गाः प्रादुर्भवन्तो बोभूयन्ते, तथैव वासनोत्पत्त्या दृष्टादृष्टकर्मघात-प्रतिघाततो जीवाः कर्मस्रोतसि प्रवहन्तस्तिष्ठन्ति।

ननु पूर्वापरसम्बन्धस्य अवश्यम्भावित्वात् सर्वप्रथमसमुत्पन्नवासनायाः कारणभूता काऽन्या वासनेति? प्रश्नस्यास्य समाधानायैव सूत्रकारो महर्षिर्निर्वक्ति यत् प्रत्येकजीवस्य स्वकीयकल्याणेच्छारूपवासनायाः स्वाभाविकत्वाद् वासना अनादिरेव सिद्ध्यति। 'अहं चिरजीवी भूयासम्, मम शुभं भूयात्' एतादृगात्माशीर्वादात्मिका वासना आपिपीलिकाया मानवपर्यन्तम्, मुमूर्षुवृद्धादारभ्य सद्यःप्रसूतबालकं यावत् सर्वत्रैव परिदृश्यते। एतादृश्याः स्वाभाविक्यः सर्वव्यापिकाया वासनायाः किमादिकारणमिति विचार्यमाणे इदमेव निश्चेतुं शक्यते यद् आत्माशीर्वादात्मिका वासनाऽनादिरेव। इत्थं वासनाया अनादित्वावगमात् पूर्वोक्तः प्रश्नो नोदेतुं शक्ष्यति।

केचित् सुधिय एवं सन्दिहन्ते यत् सृष्टेः किमादिकारणम्? अर्थादीश्वरः कथं सृष्टिमकार्षीत्? इत्यादि। किन्तु वासनाया अनादित्वाद् एतादृशः सन्देहो निरर्थक एव। यथा घटस्थदीपकज्योतिः घटाकाशमेव प्रकाशयति, तच्च बहिर्निःसारितं सत् बाह्यवस्तूनि चापि प्रकाशयति, तद्वद् अन्तःकरणमपि सङ्कोच-विकासभावं समासादयति। योगिनामिदमेव मतं यदन्तःकरणस्य व्यापकत्वात् तद्वासनाऽपि व्यापिका। केवलं गतेः प्रभावादियं विकासं सङ्कोचं च प्राप्नोति। प्रकृतिरिव वासनाऽप्यनादिः। वासनयैव संसारसत्ता। अतः प्रकृतिवासनयोरनादिता सिद्धा॥ १०॥

अनादित्वाद् वासनाया अभावो न भवितुं शक्नोति इति शङ्कां समाधत्ते—

**हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः॥ ११॥**

हेतुः, फलम् , आश्रयः, आलम्बनं च एभिर्वासना संगृह्यते। एतेषामभावे तस्या अपि अभावः सम्पद्यते। पूर्वसूत्रेण वासनाया अनादित्वं संसिद्ध्यति। एवञ्च तस्या अनादित्वात् तन्नाशः कथं सम्भवतीति शङ्कां निराकर्तुं महर्षिः सूत्रकारो व्याख्याति यत् मूलकारणतोऽनादित्वं वासनायाः, परमसौ हेतुफलाश्रयावलम्बनसंग्रहीता पुरस्तात् प्रवर्धते। अतस्तेषां नाशेन तस्या अपि विनाशः सुतरां सम्भव इति।

यथा स्थूलशरीरे चैतन्यस्य अजरामरत्वं सिद्धम्; किन्तु तेन सम्बद्धस्य शरीरस्य अन्नसम्बन्धाद् अन्नाभावे शरीरं नश्यति। तथैव अनादिरपि वासना हेतुफलाश्रयावलम्बनैः परिपुष्टाऽपि तेषामभावेन नाशं प्राप्नोति। वासनाया हेतुरनुभवः, तस्य कारणं रागादिकम्, तस्यापि मूलकारणमविद्या। एवं किल वासनाफलं शरीरादिकमवगम्यते। स्मृतिः संस्कारश्च वासनामाश्रयतः। बुद्धिरेव अवलम्बनभूता। एवं किल अनाद्यनन्तवासना हेतुफलाश्रयावलम्बनद्वारा जीवति। परन्तु यदा समाधिना वासनापोषकगणस्य विनाशो जायते, तदा तद्विरहेण साऽपि विनाशं प्राप्नोति। इत्थं वासनानाशेन कैवल्याधिगमो जायते।

अविद्येव वासनापि अनादिः सान्ता च। ज्ञानविहीनजीवस्य अनादिवासना सदैव जीवति। सूर्यस्योदयेन अन्धकार इव आत्मज्ञानोदयेन वासना नाशमेति। तन्नाशान्मनस्तत्त्वं विनश्यति, तदभावात् चित्तवृत्तीनां विनाशः। वृत्तिविरहितचित्ते स्वरूपोदयः स्वभावसिद्धः। एतदेव मुक्तिपदमुच्यते॥ ११॥

सद्रूपेण विद्यमानाया वासनाया कथङ्कारं विनाश इति शङ्कां निराकर्तुमाह—

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम्॥ १२॥**

वासना तत्फलं च कार्य-कारणभावतस्तिष्ठतः, परस्परं विभिद्येते चेति कथं ते ऐक्यं भजतः? अर्थादन्तःकरणं यदा प्रतिपलं वासनोत्पत्त्या तद्वासनाविलयेन च विनश्यति तदा तस्यैकत्वसंस्थानं कथं सम्भवम्?

किं वा भूतभविष्यद्वासनायां कार्यकारणभावः सदा तिष्ठति चेत्तर्हि सभूलवासनानाशेन विमुक्तिः कथं सम्भवेति शङ्कासमाहितये महर्षिः सूत्रकारो ब्रूते—

भूतो भविष्यन् वर्तमानश्च कालो गुणभेदाद् विभिन्नरूपः। परन्तु वस्तुतस्त्वसौ एक एव। यस्मिन्नन्तःकरणे स प्राकट्यं गच्छति, तदप्येकमेव। मोक्षपर्यन्तं च तस्यैकत्वं न प्रणश्यति। गुणभेदनाशेन भविष्यन् वर्तमानश्च कालो यदा भूतकाले परिणमति, तदैव मुक्तेरुदयः। यतस्तत्त्वज्ञानं द्वारीकृत्य वासनायाः प्रणाशाद् यदा वर्तमाने भविष्यति च योगिनोऽन्तःकरणे काऽपि समीहा नोत्पद्यते, तदा तत्त्वतो वर्तमानो भविष्यन् च कालो भूतकाले एव विलीयेत इत्यवधारयितुं शक्यते।

कालः किल आकाशवत् निर्लिप्तः पदार्थः। यथाऽन्यतत्त्वसम्बन्धाद् रङ्गविरहितोऽप्याकाशो नीलवर्ण इव परिदृश्यते, तथैव धर्मद्वारा त्रिविधः कालो विभिन्नः प्रतीयते, तत्त्वतस्त्वसौ एक एव। तत्समयधर्माभावात् तस्य त्रैविध्यं विनश्यति, स चैक एव तिष्ठति। व्यतीतः कालो भूतशब्देनोच्यते, यतस्तदनुभवो जातोऽस्ति। स्वीयां क्रियां कुर्वन् कालो वर्तमान इत्युच्यते। भविष्यत्काल एव अनागतशब्दप्रतिपाद्यः। त्रिविधोऽप्ययं वस्तुज्ञानविषये प्रथमं ज्ञेयः, अर्थात् कालज्ञानमन्तरेण कस्यापि वस्तुनो ज्ञानं न सम्भवति। परन्तु विचारेणैतद् अनुभूयते यद् गुणवान् कमप्यपूर्वं गुणं नोत्पादयति। अनेके गुणा एकस्मिन्नेव गुणे प्रकाशमायान्ति। तद्वद् भूतकालगुणो वर्तमानकाले वर्तमानकालगुणश्च भविष्यत्काले प्रकाशितो जायते।

सिद्धान्तेनैतेन एतन्निर्णीयते यत् प्रत्येककालः प्रत्येककाले तिष्ठति। अन्तःकरणं कालभेदेन गुणभेदं तदैवानुभवति, यदा कारणेन कार्यमुत्पद्यते। अवस्थाभेदोऽयमतात्त्विकः। भविष्यत्कालः किल केवलं भूतकालस्य परिणामोऽवधार्यः। यदि समाधिसाधनेन एतादृक् परिणामोद्भवो न स्यात्, अर्थात् वर्तमान-भविष्यत्कालौ भूतकाल एव विलीयेयाताम्, तदानीं यथा दग्धबीजं नाङ्कुराय प्रकल्पते, तथैव वासना चैका

वासनोत्पादनशक्तितत्त्वज्ञानद्वारा गतवासनायामेव विलयं गमिष्यति। परिणामक्रमादिदं सिद्ध्यति यन्मोक्षपर्यन्तं धर्मी धर्मस्य नानास्वरूपमधिगतोऽपि स्वस्यैकतां न जहाति। अर्थात् नानावृत्तीः धारयद् अन्तःकरणं कार्यकारणभावतो मोक्षदशाप्राप्तिपर्यन्तमेकमेव तिष्ठति। एतदपि सिद्धं यददो गुणविकारविरहितं भवत् कालविकारेणापि विरहितं भवति। इयमेव मनोनाशावस्था। फलतो यदा भूतकाल एव वर्तमानभविष्यत्कालजनकः, तदा चित्तविमुक्तिदशायां भूतकालतो वासनापरिणामानुत्पत्त्या स्वयमेव वासना पूर्णविलयं प्रपत्स्यते। अवस्थायामस्याम् अन्तःकरणं पूर्णरूपेण मुक्तं जायते। एतया दशया कैवल्यमधिगम्यते॥ १२॥

सम्प्रति पूर्वोक्तं धर्मस्वरूपमाह—

**ते व्यक्तसूक्ष्मा गुणात्मानः॥ १३॥**

ते व्यक्ताः सूक्ष्मास्त्रिगुणात्मकाश्च भवन्ति। सूत्रेणैतेन महर्षिणा सूत्रकृता धर्मस्य धर्मिणश्च विस्तृतं स्वरूपमुपवर्ण्यते। यस्य सत्ताया अभावेन पदार्थसत्ता प्रणश्यति, स धर्मः। एवं किल जडमारभ्य चेतनपर्यन्तं परमाणुमारभ्य ब्रह्माण्डपर्यन्तं च सर्वत्रैव धर्मसत्ता समुपलभ्यते। सर्वत्रैव धर्मस्यैव सत्तया धर्मिणः सत्ता समनुभूयते। धर्माधर्मस्वरूपमेतेन विज्ञानेन निर्णीतमास्ते। अर्थात् यस्य वस्तुनः सत्तां स्थायिनीमनुष्ठातुं या शक्तिः कार्यकारिणी जायते, सैव धर्मः। वस्तुनः सत्तानाशकारिणी शक्तिरेव अधर्मः। धर्मिणो धर्मो यदा बीजरूपेण तिष्ठति, तदाऽसौ सूक्ष्मः प्रोच्यते। यदा च वृक्षरूपेण विस्तृतिमधिगच्छति, तदा व्यक्तोऽभिधीयते।

धर्मे विद्यमानस्य मार्गत्रयस्य विस्तृता विवृतिरुक्ता पूर्वस्मिन् सूत्रे। पूर्वोक्तां रीतिमनुसृत्य प्रत्यक्षाप्रत्यक्षभावात् तौ सत्त्वरजस्तमोभिर्गुणैः साकं तत्परिणामं तत्स्वभावं च प्राप्नुतः। यतः सत्त्वरजस्तमोगुणैरेव धर्मिणि धर्मो व्यक्ताव्यक्तरूपेण दृष्टिगोचरतामापद्यते। यो यदनुगामी, स तत्परिणामं प्राप्नोति। यथा—मृदा घटसम्बन्धः, यतो हि घटः किल मृदः परिणामभूतः। एवं प्रकारेण सत्त्वरजस्तमोरूपेण गुणपरिणामेन धर्मस्वरूपं

समुदेति। अलं प्रपञ्चबाहुल्येन। निष्कर्षोऽयं यद् धर्मस्वरूपं व्यक्तसूक्ष्म-श्रेणीद्वयं स्वीकुर्वत् त्रिगुणात्मकतां भजते ॥ १३ ॥

त्रिगुणपरिणामजन्यत्वेऽपि वस्तुनः कथमेकत्वमिति शङ्कां समाधत्ते—

**परिणामैकत्वाद् वस्तुतत्त्वम् ॥ १४ ॥**

परिणामैक्याद् वस्तुतत्त्वं विज्ञायते। परां सिद्धिमधिगतस्य योगि-राजस्य बुद्धिं विशुद्धसत्त्वाभिमुखं नीत्वा एकतत्त्वसाहाय्येन निर्विकल्प-समाधिमधिगन्तुं गुणत्रयेण धर्मस्यैकत्वं प्रापयितुं ततश्च धर्मेण धर्मिणः स्वरूपे तेन च पुरुषस्वरूपे प्रापयितुं पादस्यैतस्य पुरुषार्थोऽवगन्तव्यः।

सत्त्वं रजस्तम इति गुणत्रयमेव सर्वत्र सर्वकार्येषु कारणस्वरूपमिति पूर्वसूत्रे निर्णीतम्। इदानीं महर्षिः सूत्रकारः सूत्रेणैतेन इदं निर्वक्ति यद् यद्यपि गुणास्त्रयः सन्ति, तथापि ते परिणामरूपेण एकमेव अङ्गादिभावं धारयन्ति। अर्थात् कदा चित् सत्त्वगुणोऽङ्गी, रजस्तमसी चाङ्गभूते; कदापि रजोऽङ्गभूतम्, सत्त्वतमसी चाङ्गरूपे; कदा चिच्च तमोगुणोऽङ्गी, रजःसत्त्वे चाङ्गरूपतां धत्तः। एवमेव सर्वेषां परिणामैकत्वमवसीयते। निष्कर्षोऽयं यद् एको गुणः स्वतन्त्ररूपेण नैव कार्यकारित्वं भजति। त्रयश्चापि गुणाः परस्परं मिश्रिताः सन्ति।

इयानेव भेदो यत् त्रिषु प्रधानगुणोऽङ्गी भवति, अवशिष्टौ द्वौ अङ्ग-रूपेण तिरोहितौ तिष्ठतः। उदाहरणरूपेण विचारणीयमिदं यद् यद्यपि पृथ्वीतत्त्वे अन्यान्यपि चत्वारि तत्त्वानि मिश्रितानि सन्ति, किन्तु प्राधान्यं पृथ्वीतत्त्वस्यैव। पुनरवधेयं यद् यथा महत्तत्त्वे सत्त्वस्यैव प्राधान्यम्, रजस्तमसी तिरोदधतः। ततश्च महत्तत्त्वाद् अहङ्कारोत्पत्तौ सृष्टिविस्तार-दशायां रजस्तमसी क्रमशः प्रधानतां प्राप्नुतः, तदानीं सत्त्वं तिरोधत्ते। एवं हि त्रयो गुणाः मिश्रिताः सन्तिष्ठन्ते। स्व-स्व-प्राधान्यात् स्वतन्त्रभावं दधतः स्वाधीनां संज्ञां बिभ्रति च।

एतेन एतदवसितं यत् त्रयाणामपि गुणानामेकतैव। त्रयाणां त्रिविध-परिवर्तनं परस्परसहायकभावेन एकत्वं साधयति। यतस्तेषां परिणामे

एकत्वं सिद्ध्यति। यावद् गुणानां विभिन्नसत्तायां बुद्धिर्ग्रस्ता तिष्ठति, न तावत् सा एकतत्त्वोदये साहाय्यमनुतिष्ठति। वस्तुनो यथार्थस्वरूपमनुभूयते, अतो गुणपरिणामस्य एकत्वेनैव वस्तुनः याथातथ्यतत्त्वमभिज्ञायते॥ १४॥

सूक्ष्मराज्ये प्रवेष्टुं वस्तुज्ञानपार्थक्यं निर्दिश्यते—

**वस्तुसाम्येऽपि चित्तभेदात्तयोर्विभक्तः पन्थाः॥ १५॥**

वस्तूनामेकत्वेऽपि अन्तःकरणभेदेन तेषु भेदः प्रतीयते। यथा कामपि रूपलावण्यवतीं स्त्रियमालोक्य कश्चित् सुखमधिगच्छति, कोऽपि लोभेर्ष्यावशीभूतो दुःखमनुभवति, कश्चिच्च विचारयुक्तो वैराग्यस्वरूपिणीं निरपेक्षवृत्तिमाश्रयति। सुन्दरी युवती एकैव, किन्तु अन्तःकरणभेदेन भोगलोलुपः कामी तां सुखकारणं मन्यते। सपत्नीस्तां विलोक्य दुःखमधिगच्छति, संन्यासी च तां निरीक्ष्य विरक्तस्ततो मुखं निवर्तयति। एवमेव प्रत्येकवस्तुनि अन्तःकरणभेदात् नानात्वं प्रतीयते। अतो वस्तुन्येकस्मिन् बहुविधभानं सृष्टिवैलक्षण्यम्। कार्यभेदेऽस्वीकृते जगद्वैलक्षण्यं न सम्भवम्। अन्तःकरणभेदास्वीकृतौ जगतो हेतुराहित्यं भवेत्।

इत्थं विवेकतः स्वतः सिद्ध्यति यत् यथा सत्त्वरजस्तमोभिः विषयास्त्रिगुणात्मकाः, तथैव अन्तःकरणमपि। तत्र पदार्थज्ञानमुत्पद्यते। तस्य च ज्ञानस्य धर्मादयः सहकारिणः कारणभूताः। अर्थात् तस्य धर्मस्य प्रादुर्भावतिरोभावाभ्याम् अन्तःकरणमपि तद्धर्मरूपेण भासते। एवं हि वस्त्वेकत्वेऽपि चित्तभेदात् तन्मार्गे विभेदः समुत्पद्यते। प्रकृतिरेका, पुरुषोऽपि तथैव। परन्तु त्रिगुणमयप्रकृतिसङ्गतः पुरुषः प्रकृतिभावं दधद् अन्तःकरणविशिष्टं धर्मित्वं प्रपद्यते। प्रकृतेस्त्रिगुणमयत्वेन प्रत्येकमन्तःकरणं विषयाश्च सर्वमेव त्रिगुणमयम्। अतः पूर्वोक्तप्रमाणेन यत्र वस्तूनामेकत्वं तत्रान्तःकरणभेदाद् वस्तुज्ञानयोः मार्गोऽपि विभिन्नोऽनुभूयते। पूर्वसूत्रेषु सूत्रकृता महर्षिणा धर्मसम्बन्धेन एकत्वं प्रतिष्ठापितम्, ततश्च त्रिगुणैक्यमुद्भाव्य एकत्वं प्रतिष्ठापितम्। इदानीं वस्तूनामैक्यं संसाध्य अन्तःकरणविशिष्टधर्मि-

ज्ञानेन साकं वस्तुतः पार्थक्यं विज्ञाप्यते। एवं किल तेन अन्तर्जगति विशेष-रूपतः एकत्वप्रतिष्ठा क्रियते ॥ १५ ॥

एकत्वं किल विशिष्य सूक्ष्मराज्ये प्रापयितुमाह—

**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥**

वृत्तिस्वरूपदशायाम् अन्तःकरणे चिदाभासपूर्णो धर्मी नानात्वं भजते। एतद्धि नानात्वभावपूर्णमन्तःकरणं जलाशये एकस्य तरङ्गस्यानन्तरम् अपर-तरङ्गस्य उत्थानमिव आन्दोलितं चञ्चलं च तिष्ठति। अत एव निर्लिप्तस्य निर्विकारस्य पुरुषस्य स्वरूपमप्रकाशितं निभाल्यते। क्रमशश्च एकत्व-साहाय्येन योगिराजस्तस्य नानात्वस्य विस्तृतिं योगसाधनं द्वारीकृत्य प्रथमतो यथाक्रमं सङ्कोचयति। ततश्च समाधिभूमिमासाद्य एकतत्त्व-मन्तःकरणस्य सूक्ष्मापि सूक्ष्मतरे राज्ये प्रापयन् अन्ते तस्य सर्वाङ्गीणां पूर्णां प्रतिष्ठां विधाय यदा तत् निर्मलीकुरुते, तदा आत्मस्वरूपेऽवतिष्ठते। निर्विकल्पसमाधिपूर्णतासम्पादनार्थं महर्षिः सूत्रकारोऽधिकाधिकं सूक्ष्म-राज्ये ज्ञाने चैकतत्त्वप्रतिष्ठां विधत्ते।

पूर्वोक्तं विज्ञानमधिकं सुस्पष्टयति—वाह्यविषया एकस्यैवान्तःकरणस्य विषयीभूताः सन्तीत्यपि वक्तुं न शक्यते। एकदा एकमन्तःकरणं यदा तमेव विषयं पश्यति तदैतदपि सम्भवति, यद् द्वितीयमन्तःकरणमपि तद्-वस्तु तेनैव प्रकारेण पश्येत्। यदा एकमन्तःकरणं तद्वस्तु न समनुभवति, तदैतदपि सम्भवं यत्तदनन्तरं द्वितीयमन्तकरणं पुनस्तदनुभवितुं शक्नुयात्। एतदपि नासम्भवं यत् तत्पदार्थं प्रागनुभवदपि अन्तःकरणं परस्तात् नानुभवेत्, अनन्तरं च पुनरनुभवेत्।

एतावता इदमेव सिद्ध्यति यद् विषया एकस्यैव अन्तःकरणस्य परि-णामभूता न सन्ति, न चाप्येतद् वक्तुं शक्यते यत् ते अन्तःकरणतः स्वतन्त्रपदार्था न सन्तीति। अर्थात् त्रिगुणात्मका विषया अपि स्वतन्त्राः-त्रिगुणात्मकं चान्तःकरणं स्वतन्त्रमेव। एतद्द्वितयसम्बन्धेन विलक्षणा वोधप्रतीतिरेव पुरुषस्य भोगो विज्ञेयः। एकतत्त्वस्य ज्ञाने प्रतिष्ठया, एतदेव

अनुभूयते यद् विषयास्त्रिगुणात्मकत्वाद् अनेके, त्रिगुणात्मकं च अन्तःकरणमपि अनेकम्। सुतराम्, अनेकत्वभानसम्बन्धो विषयान्तःकरणजन्यः आस्ते। पुरुषभोगसम्बन्धस्तु केवलेन ज्ञानेनैव। सुतरां पुरुषभोगजन्यं ज्ञानम् एकमेवेति यदा योगी समनुभवति, तदा ज्ञानेऽपि एकतत्त्वप्रतिष्ठां लभते॥ १६॥

नित्यज्ञानमयपुरुषस्य उपलब्धये अन्तःकरणसम्बन्धेन ज्ञानाज्ञानदशां निरूपयति—

## तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्॥ १७॥

ज्ञेयवस्तुनः प्रतिबिम्बपातेन चित्ते ज्ञानाज्ञानाविर्भावः। ज्ञेयपदार्थापरनामानो विषयाः चुम्बकसमानाः, अन्तःकरणं च लौहवदवगन्तव्यम्। यथा चुम्बकेन लौहसम्बन्धे जाते लौहः समाकृष्टश्चुम्बकेन सम्मिलति, तथैव अन्तःकरणस्य विषयैः सम्बन्धे अन्तःकरणं विषयसमाकृष्टं विषयवत् प्रतीयते। यथा रक्तवस्त्रेण असति दर्पणसम्बन्धे दर्पणः स्वीयस्वच्छतास्वरूपं धत्ते, किन्तु रक्तवस्त्रसम्बद्धो दर्पणो वस्त्ररक्ततां गृह्णाति, तथैव अन्तःकरणविषयाणाम् अन्योन्यपार्थक्येऽपि अन्तःकरणं हेतुभूतया अविद्यया विषयान् पश्यदेव विषयस्वरूपं धारयति। यथा रक्तं वस्तु स्वीयं प्रतिबिम्बं पातयित्वा दर्पणमपि रक्तं सम्पादयति, तथैव विषया अपि स्वच्छेऽन्तःकरणे प्रतिफलिता अन्तःकरणमपि स्वीयं स्वरूपं ग्राहयन्ति। यथा दर्पणसम्मुखे रक्तवस्तुस्थापनेन दर्पणोऽपि रक्ताभो भवति, यावच्च तदभिमुखतः पुनस्तद्वस्तु अपसार्य अन्यवर्णवस्तु न स्थाप्यते तावद् दर्पणो रक्ततां न विजहाति, न चापि वर्णान्तरं धारयति; तथैव अन्तःकरणे यो हि विषयः प्रतिफलितस्तमेव विषयमन्तःकरणं विजानाति; तदानीं च यः किल विषयो न प्रतिफलितो नैव तमवबुद्ध्यते; तथैव ज्ञेयरूपस्य वस्तुनः प्रतिबिम्बसत्त्वासत्त्वाद् अन्तःकरणं तस्य वस्तुनो ज्ञानाज्ञानमधिगच्छति। पूर्वसूत्रेण अन्तःकरणस्य व्यापकत्वं विषयाणां चान्तःकरणभिन्नत्वं प्रतिपादितम्। व्यापकमन्तःकरणं

समस्तानपि विषयान् एकदैव ग्रहीतुं शक्नोतीति सन्देहः सूत्रेणैतेन निराकृतः, यतोऽन्तःकरणं स्वसम्बद्धविषयमेव ग्रहीतुं शक्नोतीति।

विज्ञानमिदं प्रकारान्तरेणाऽपि बोधयति—पुरुषप्रकाशेन प्रकाशिते अन्तःकरणयन्त्रे प्रतिफलितो विषय एव प्रतिभासितो भवति। पुनश्च तद्बिम्बाङ्कितः संस्कारः किल 'कर्मसंस्कार'शब्देन उच्यते। अङ्कितस्य कर्मसंस्कारस्य अन्तःकरणेऽनुभूतिरेव 'स्मृति'रुच्यते। परमेतद् अवश्यमेवाभ्युपगन्तव्यं यत् सावधानमन्तःकरणमेव विषयसम्बद्धं सद् विषयमनुभवति, तदैव च स्मृतिसंस्काराणां समुदयः सम्भवति, नान्यथेति। अतो ज्ञेयवस्तुनि प्रतिबिम्बिते सत्येव अन्तःकरणे तज्ज्ञानं जायते। ज्ञाने एकतत्त्वप्रतिष्ठास्वरूपं पूर्वसूत्रे प्रदर्शितम्। अन्तःकरणतः पुरुषः स्वतन्त्रस्वरूपः। "यो बुद्धेः परतस्तु सः" इति श्रुतिवचसः चरितार्थतायै सूत्रेणैतेन एतत् प्रदर्शितं यद् ज्ञानाज्ञानदशा अन्तःकरणसम्बद्धा, पुरुषस्तु ततः परोऽवधेयः॥ १७॥

नित्यज्ञानस्थितिरुच्यते—

## सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्॥ १८॥

वृत्तीनां स्वामी पुरुषः परिणामहीनः, अतः सदैव चित्तवृत्तयो ज्ञातास्तिष्ठन्ति। पूर्वसूत्रेषु अन्तःकरणस्य विषयरूपप्रकृतेश्च विस्तारं सम्यङ् निरूप्य सूत्रेऽत्र महर्षिः सूत्रकारो ज्ञानसम्बन्धेन नित्यज्ञानमयस्य पुरुषस्य स्वरूपं वर्णयति। स एतदपि प्रदर्शयति यत् पुरुषः सर्वदैव एकरूपः परिणामहीनश्च। अतोऽन्तःकरणवृत्तयो यथावत् प्रतीयन्ते। यद्येतद्वैपरीत्यमालोच्येत यद् अन्तःकरणवदात्मनोऽपि परिणामित्वम्, अर्थात् यथा विषयसङ्गेन वृत्तिप्रभावेण चान्तःकरणं नानाभावं भजते, तथैव आत्मनश्चाञ्चल्ये निश्चितमेव तज्ज्ञानवृत्तिषु परिवर्तनं सम्पद्येत; तदा चित्तवृत्तयो यथावन्न विज्ञायेरन्। परन्तु दृश्यते यदन्तःकरणवृत्तयो यथावद् विज्ञायन्ते इति। एतेन प्रमाणितं भवति यत् पुरुषे न कोऽपि परिणामः सम्भवः। अन्तःकरणस्वामिनः पुरुषस्य परिणामराहित्येन अन्तःकरणवृत्तयो यथा-

तथ्येन विज्ञायन्ते। चैतन्यम् अपरिणामि, एकरसं च। तदीयैकरूपाधिष्ठानान्तरङ्गे निर्मलसत्त्वं सदा विराजते। यतो नित्यवस्तुनो गुणा अपि नित्या एव। अतः सत्त्वरूपप्रकाशस्य सदैकरूप्याद् यद्यद् भवति, तत्सर्वमेव यथावद् दृश्यते।

विज्ञानमिदं प्रकारान्तरेणापि अवबोधयति यद् यदाऽन्तःकरणं प्रकृतिमयत्वात् जडस्वरूपं तर्हि तत्र चेतनसत्तायाः सम्भावना नास्ति। पुरुषरूपचैतन्यस्य ज्ञानमेव स्वरूपम्। तदीयज्ञानरूपप्रकाशेन यदा अन्तःकरणं प्रकाशितं जायते, तदानीं तत् चैतन्यवत् प्रतीयते। वृत्तयोऽन्तःकरणतरङ्गरूपाः। ज्ञानं किल अचञ्चलस्य सदैकरूपे वर्तमानस्य प्रकाशः। अतोऽन्तःकरणस्य चाञ्चल्येऽपि पुरुषस्य अचञ्चलत्वेन अन्तःकरणवृत्तितरङ्गा याथातथ्येन दृष्टिगोचरतामायान्ति। एतेन सिद्धमेतद् यत् परिणामिन एकरूपस्य पुरुषस्य प्रभावतः अन्तःकरणनानावृत्तयो ज्ञायन्ते ॥ १८ ॥

स्वाभासस्य विषयाभासस्य च हेतुश्चित्तमेव, एवञ्च तद्भिन्नपुरुषाङ्गीकारः कथमावश्यक इति सन्देहं निराकुरुते—

**न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥**

चित्तं स्वप्रकाशं नास्ति, यतस्तद् दृश्यरूपम्। पूर्वसूत्रे सिद्धान्तितमिदं यत् पुरुषः सदैवापरिणामी भिन्नोऽन्तःकरणात्। सूत्रेणैतेन महर्षिः सूत्रकार इदं निर्वक्ति यदन्तःकरणं न स्वप्रकाशरूपम्। तच्च पुरुषप्रकाशितत्वाद् दृश्यं ज्ञेयमित्यर्थः।

अन्तःकरणस्य प्रधानमङ्गद्वयं मनो बुद्धिश्च सत्पथे गच्छतो न वेति कथनेन स्वतःसिद्धमिदं यत् विचारकर्ता मनोबुद्धिरूपान्तःकरणतो भिन्नपदार्थः। सुतरामन्तःकरणं पुरुषस्य दृश्यमिति निर्णीतम्। यथा इन्द्रियाणि तन्मात्राश्च अन्तःकरणेनैव ज्ञायन्ते, अतस्ताः न स्वप्रकाशाः, तथैवान्तःकरणमपि पुरुषेण विज्ञायते, अतस्तत् न स्वप्रकाशम्। यथा च जडोऽग्निः स्वस्वरूपं न प्रकाशयति, तथैवान्तःकरणमपि विज्ञेयम्। प्रकाश्य-प्रकाशकसंयोगेनैव तस्य प्रकाशः परिदृश्यते, स्वरूपमात्रेण प्रकाशकं न विलोक्यते। पुरुषान्तः-

करणयोः अयमेव प्रकाशकप्रकाश्यसम्बन्धः। तद्विपरीतविवृत्तिरग्रिमसूत्रे वक्ष्यते ॥ १९ ॥

अपि च—

## एकसमये चोभयानवधारणम् ॥ २० ॥

एकस्मिन् क्षणे द्विविधज्ञानमसम्भवम्। एककाले अन्तःकरण-पदार्थयोः सह ज्ञानमसम्भवम्। एकस्मिन् समये विषयरूपस्य पदार्थस्य किं वा स्वमनसः परिबोधो भवितुमर्हति। यदि क्षणिकवादिन इदं ब्रूयुः यद् उत्पत्ति-क्रिययोरभेदात् अन्तःकरणं क्षणिकमिति, तदा तत्सन्देहनिराकृतये शक्यते व्याहर्तुमिदं यत् यद्येवमभविष्यत् तदा एकचित्तं केन चिद् द्वितीयचित्तेन, तच्च केनाप्यपरचित्तेन समग्रहिष्यत्। किं च यद्येकचित्तं परचित्तप्रकाशक-मङ्गीक्रियेत, तर्हि तदेककालावच्छेदेन स्वकीयं परकीयं च प्रकाशयितु-मर्हेत्। परमेतत्सूत्रोक्तयुक्त्या असम्भवमेतत्। अतः प्रश्नोऽयं व्यर्थः।

पूर्वोक्तसूत्रविचारं द्रढीकर्तुमन्यदपि विविच्यते यद् यदा पूर्वोक्तव्यापार-मुत्पद्य तत्फलज्ञानतो बहिर्मुखं भूत्वा चित्तं विस्मृतिमाप्नोति, तदानीमिदं विज्ञायते यद् बुद्धिज्ञानमेव सुखदुःखहेतुतां व्रजति। "अहमेतस्य सुखस्य दुःखस्य वा भोक्ताऽस्मि" इति ज्ञानजनकत्वं बुद्धेर्नास्ति। यतः सुखदुःखे परस्परमत्यन्तविरोधिस्वरूपे। एककालावच्छेदेन ते नानुभूयेते। परन्तु चित्तवृत्तिषु सुखदुःखपरीक्षणं समकालमपि नासम्भवम्। अतः चित्तापरनामकम् अन्तःकरणमेकस्मिन् काले विरुद्धधर्मावलम्बिनीनां वृत्तीनां परीक्षणं कर्तुं न पारयति तदैतत् कथं सम्भवम्? अतः प्रमाणितमिदं यत् तद्विचारदाता कश्चिदन्य एव। अर्थात् अन्तःकरणं स्वयं प्रकाश-शीलं नास्ति, तत्प्रकाशकर्ता कश्चिदपर एव, येनैते अवस्थाभेदा अनुभूयन्ते। स चान्तःकरणप्रकाशकः अन्तःकरणभिन्नश्चैतन्यवान् पुरुष एव सिद्ध्यति।

एतत्सूत्रोक्तेन विचारेण पूर्वं स्वपक्ष-परपक्षविवेकसिद्धान्तमनुष्ठाय पुनश्चान्यद् विविनक्ति यद् अन्तःकरणं विषयाननुभवति, पुरुषेण चान्तः-

करणमनुभूयते। 'कमलपुष्पमतिसुन्दरम्' इत्युक्ते कमलपुष्पम् अन्तःकरणेन अनुभूतमिति सिद्धम्। 'मदीयं चित्तं नाद्य समीचीनम्' इत्युक्ते अन्तः-करणानुभवभानं पुरुषस्यैव जातमिति सिद्ध्यति। परन्तु यदा एतदभ्यु-पगम्यते यद् द्विविधमपि भानमन्योऽन्यं विभिन्नम्, तदनुभवश्च नैकस्मिन् काले सम्पद्यते, तदाऽन्तःकरणतो भिन्नः पुरुषः स्फुटं सिद्ध्यति ॥ २० ॥

यद्यपि एतच्चित्तद्वारा स्वप्राकाश्यं न स्यात्, तथापि चित्तान्तरेण तद्ग्राह्यता सिद्धा भवितुमर्हति। एवञ्च पृथक्पुरुषस्वीकारस्य काऽऽवश्य-कता? इति। शङ्काया अस्याः समाधानाय प्राह—

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥**

पूर्वोक्तविचारं सुस्पष्टयितुं महर्षिः सूत्रकारो ब्रूते—यदि अन्तः-करणस्य अनेकत्वाङ्गीकारः, एकस्य चान्यदीयदृश्यत्वस्वीकृतिः स्यात्, तर्हि बुद्धौ अतिप्रसङ्गदोषः, स्मृतिशक्तौ च सङ्करदोषः समापतेत्। अत एतन्न सम्भवम्। एकं चित्तं चित्तान्तरेण यदि गृहीतं भवेत्, तदानीं पूर्वापर-सम्बन्धो दृढः स्यात्। अर्थात् एकं चित्तं द्वितीयस्य, द्वितीयं च तृतीयस्य, तृतीयं च चतुर्थस्य चित्तस्य ग्राहकं सम्भवेत्। यद्येकमन्तःकरणम् अन्तः-करणान्तरेण गृह्यते इति मन्येत चेत्तर्हि बुद्धिरपि अपरबुद्ध्या गृहीता भवेदिति बुद्धौ अतिप्रसङ्गदोषः प्रसज्येत। अतोऽन्तःकरणस्य संख्यातीतत्व-मभ्युपगतं स्यात्। अन्तःकरणस्य संख्यायामज्ञातायां ज्ञेयस्य ज्ञातुश्चा-भ्युपगमः कथं स्यात्। एवमभ्युपगमेन स्मृतिशक्तौ विरोधः समापतेत्। तेन च स्मृतेर्यथार्थस्वरूपोदयोऽसम्भवः स्यात्। यावत्यो बुद्धयस्तावन्तो-ऽनुभवा इति हेतोः स्मृतिशक्तिः स्वयमेव विनङ्क्ष्यति।

प्रकारान्तरेणापि एतद् विविच्यते—रूप-रसादिज्ञानोत्पत्तिकारिणी बुद्धिः यदा उदेष्यति, तदा बुद्धेरानन्त्यात् स्मृतेरप्यनन्तता प्रसज्येत। एकस्मिन् काले अनेकबुद्धयः अनन्तस्मृतयश्च समुत्पद्येरन्। तदा ज्ञानमिद-मसम्भवं स्याद् यत् स्मृतिरियं रससम्बन्धिनी, रूपसम्बन्धिनी वा।

अनुभवेनैतेन एतादृशो विप्लवः सम्भाव्येत यद् आधुनिकः सत्त्वगुणावलम्वी योगी क्षणान्तर एव घोरतमोगुणाश्रितो नास्तिको भवितुमर्हति। अर्थात् बुद्धेः स्मृतेश्च विस्ताराधिक्यात् पूर्वापरशृङ्खलैव नङ्क्ष्यति। अत एकं चित्तं चित्तान्तरस्य दृश्यमिति स्वीकृतिः विज्ञानविरुद्धेति ॥ २१ ॥

तदा बुद्धेः संवेदनं कथं स्यादित्युच्यते—

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

पूर्वसूत्रेषु महर्षिणा सूत्रकृतैतत् सिद्धान्तितं यत् स्वयंप्रकाशस्वरूपा बुद्धिर्नास्ति, नानाबुद्धिकल्पनाऽपि असङ्गता। अतो विषयसंवेदनं कथमिति शङ्कां निराकर्तुं सूत्रमिदमाह।

अयं भावः—पुरुषस्तु चैतन्यरूपः, तदीयचैतन्यसत्तायां कदापि भेदो न सम्पत्स्यते। यथैको गुणः प्रधानस्य अपरगुणस्य अङ्गतां प्रपद्यते, तदानीं तेष्वङ्गेषु सङ्करभावोऽवश्यम्भावी, परन्तु न तथा पुरुषचैतन्यभावे भेदः। यथा प्रकृतिः चाञ्चल्यविकारविस्तारभावमधिगच्छति, न तथा चैतन्यरूपः पुरुषः। स च सदा चैतन्यवान् एकरूपश्च। अतस्तदीयचितिशक्तेः यदा बुद्धिः साम्मुख्यं भजते, अर्थात् अन्तःकरणे स्थिरे सति यदा बुद्धौ पुरुष-प्रकाशो यथावद् भासमानो भवति, तदैव तेन स्व-स्वरूपज्ञानमासाद्यते। एतेन प्रकारेणैव संवेदनमनुभूयते।

विज्ञानमिदं प्रकारान्तरेणापि अवबोधयति—भोक्तुः पुरुषस्य शक्तिः परिणामविरहा; किन्तु परिणामिषु चञ्चलेषु च विषयेषु पतिता पुरुषदृष्टिः श्चञ्चला प्रतीयते। अत एव तद्वृत्तिसंयोगाधिगमेन बुद्धिवृत्तेः मलयुक्ततया ज्ञानवृत्तिर्भिन्ना प्रतीयते—"यो बुद्धेः परतस्तु सः।" अतो बुद्ध्या पुरुषस्य साक्षात्सम्बन्ध इति वेदादिनानाशास्त्रेषु सिद्धान्तितम्। श्रीमता व्यासदेवेन उदीरितं यत् कुत्रापि स्थानविशेषे ब्रह्म प्रतिष्ठितं नास्ति, येन जीवः समीहमान एव तद् द्रष्टुमर्हति। केवलं बुद्धिनिर्मलतयैव तदनुभवितुं शक्यते। समलायां बुद्धौ प्रकाशन्यूनतया नानाविकाराः प्रादुर्भवन्ति। परमन्तःकरणे स्थैर्यमापन्ने पुरुषस्याभ्यर्णे तदाकारतां प्राप्तायां बुद्धौ

स्वस्वरूपमवगम्यते। अर्थात् स्थिरतया निर्मलतया च बुद्धिर्यदा चैतन्यस्वरूपपुरुषस्य सामीप्यमासादयति, तदानीं तत्र परमात्मनो याथातथ्यज्ञानमनुभूयते।

अन्तःकरणं किल पुरुषभिन्नमिति पूर्वसूत्रे निर्णीतम्। सूत्रेऽत्र अन्तःकरणस्य ज्ञानशक्तिः सविस्तरमुपवर्णिता। पुरुषो हि चैतन्ययुक्तः अपरिवर्तनस्वभावश्च। स केवलमन्तकरणे प्रतिविम्बितं सदन्तःकरणं प्रकाशशीलं विधत्ते। तदैव तत् पुनर्विषयसंयुक्तमसंख्यवृत्तीः परिदधत् परिदृश्यते। पुरुषप्रतिविम्बप्रकाशिता अन्तःकरणस्थिता बुद्धिश्चैतन्ययुक्ता ज्ञानाज्ञानक्रियां विधत्ते। साधारण्येन पुरुषप्रतिविम्बमनिवेद्य यदि चुम्बकवदाकर्षणशक्तिविशिष्टं प्रतिविम्बं मानवोऽवधारयेत्, तदा विमर्शचिन्तनादिषु साहाय्यमासाद्येत। अर्थात् यथा यथा बुद्धिर्निर्मलत्वं भजते, तथा तथा पुरुषः स्वसमीपवर्तिनीं बुद्धिमनुतिष्ठन् तस्यां च स्वस्वरूपं प्रकाशयति ॥ २२ ॥

विज्ञानमिदं पुनरवधारयितुं चित्तस्य सर्वार्थकता प्रतिपाद्यते—

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

द्रष्टृदृश्ययोः सम्बद्धं चित्तं सर्वावभासकतां प्रपद्यते। यथा निर्मल एव स्फटिकमणिः दर्पणो वा प्रतिविम्बग्रहणे समर्थो नान्यः, तथैव रजस्तमोभ्यां विरहितेन शुद्धसत्त्वगुणसंयुक्तेन अन्तःकरणेनैव बुद्धिर्निर्मला सती याथातथ्येन प्रतिविम्बग्रहणं कर्तुं शक्नोति। एतेन एतदवधारणीयं यद् यदा रजस्तमसी शुद्धे सत्त्वगुणे विलयनमापद्येते, तदानीं निर्वातप्रदीपवद् अचला बुद्धिः सदैव एकरूपा भगवत्स्वरूपदर्शने सामर्थ्यं लभते। तस्या इयमवस्था मुक्तिपदप्रतिष्ठां यावद् विद्यमाना तिष्ठति।

अन्तःकरणस्य सा विपरीतदशा उच्यते, यदा तद् इन्द्रियद्वारा विषयैः सह सम्बद्धं सद् विषयवत्प्रतीयते। यथा स्फटिकमणिः रक्तवस्तुसाहचर्यं भजन् रक्तवत् प्रतीयते, तथैव अन्तःकरणमपि विषयग्रस्तं विषयवत् जडरूपं प्रतिभासते। यदा चान्तःकरणं विशुद्धं सद् भगवद्दर्शनमनुतिष्ठति,

तदानीं तदीया 'एकचेतनदशा' प्रोच्यते। इयमेकतत्त्वावस्था वर्णितपूर्वा। यदा चान्तःकरणं विषयग्रस्तं जडतां प्रपद्यते, तदैषा तदवस्था 'विगतचेतना' प्रणिगद्यते।

अन्तःकरणमध्यवर्तिस्थानं तदवधेयम्, यस्य एकतः पुरुषोऽपरतश्च विषयास्तिष्ठन्ति। उभयसम्बद्धं तत् सृष्टिक्रियायां ग्रहीतृ-ग्राह्य-ग्रहणमूलकेषु सर्वविधविषयेषु प्रवर्तमानमास्ते। पितामहो ब्रह्मा यथा चत्वारि मुखानि धारयित्वा सृष्टिकार्यं विधत्ते, तथैव अन्तःकरणमपि मनो-बुद्धि-चित्ताऽहङ्काररूपाणि चतुरङ्गानि धारयत् सृष्टिकार्ये प्रवर्तते। परन्तु तदेव नीचैरुपढौकमानं विषयग्रस्तमचेतनत्वं भजते। यदा च तद् योगसाधनरूपं पुरुषार्थं द्वारीकृत्य ऊर्ध्वमुखं सत् निम्नस्थमलेभ्यः समुपरतं जायते, तदानीमेकतत्त्वसाहाय्येन चैतन्यसंयुक्तं परमात्मदर्शनसामर्थ्यं लभते॥ २३॥

यदि चित्तेनैव सकलोऽपि व्यवहारो निष्पद्यते, तर्हि स्वतन्त्रपुरुषाङ्गीकारो व्यर्थ इति समाधत्ते—

**तदसंख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात्॥ २४॥**

असंख्यवासनाभिः चित्रितमपि चित्तं पुरुषभोगापवर्ग-नैमित्तिकमेव यतस्तत् परेण संहत्य कार्यमनुतिष्ठति। पूर्वसूत्रेणैतत् सिद्धान्तितं यद् अन्तःकरणस्यैव सर्वकारिता, तदा पुरुषस्वीकारे सन्दिहानस्य जिज्ञासोः सन्तोषाय विज्ञानमिदं सुस्पष्टयति महर्षिः सूत्रकारः सूत्रेणैतेनेति।

अयं भावः—संख्यातीतवासनासंवलितमपि अन्तःकरणं यद्यद् अनुतिष्ठति, तत्सर्वमेव सेवकवत् प्रभुहितार्थं विदधाति। यदि पूर्वालोचनया निर्णीतमिदं यत् पुरुषभोगार्थमेव प्रकृतिः सर्वं विधत्ते, तर्हि निश्चितमिदं यत् सवासनमन्तःकरणं यत्किमप्यनुतिष्ठति, तत्सर्वमपि पुरुषकृत एव। यथार्थतस्तत्कार्येषु ईषदपि तदीया स्वार्थपरता नास्ति। पूर्वालोचितविमर्शतः अनुभूतमिदं यद् धृतबहुरूपमन्तःकरणं नानाभोगान् उत्पादयदपि परसाहचर्येणैव तत्सर्वमनुतिष्ठति—पुरुषभोगसाधनार्थमेव विदधाति। केवलं पुरुषभोगसाधकमेव अन्तःकरणम्, तद्भिन्नं नान्यत् किमपि।

यथा शय्याऽऽसनादिपदार्था गृहमेधिभोग्याः, तथैव अन्तःकरणानुष्ठिताः पुरुषार्थाः पुरुषभोगसाधका एव। जडरूपमन्तःकरणं पुरुषचैतन्यसंवलितं सत् सर्वं विधत्ते। अतस्तदीयं सर्वमप्यनुष्ठानं स्वीयप्रभुस्वरूपस्य पुरुषस्य कृत एवावगन्तव्यम्।

सूत्रकारमहर्षिप्रयुक्तः 'चित्त'शब्दः अन्तःकरणार्थक एव। सांख्यदर्शने महर्षिणा कपिलेन यत्र यत्र यथा 'प्रकृति'शब्दः प्रयुक्तः तथैवात्र महर्षिणा सूत्रकृता योगदर्शने 'चित्त'शब्दस्य प्रयोगो विहितः। 'चित्ता'पर-नामकम् अन्तःकरणं वासनास्थानं पुरुपभोगोत्पादकं च। तच्च केवलं पुरुषस्वरूपचैतन्यप्रतिविम्वधारकं यन्त्रमिवावधेयम्। सुतरां तत् पुरुप-भोगार्थकमेव केवलं विद्यते।

एकतत्त्वसाहाय्येन वुद्धिपर्यन्तं कैवल्यसाधकयोगिनाम् आनयनान-न्तरं प्रागनेकसूत्रैः वहुविधाः सन्देहा निराकृताः। स्वरूपज्ञानसंयुक्तः पुरुषो वुद्धेः पर इति वैदिको राद्धान्तः। अतो वुद्धिराज्यस्य परे पारे स्थितस्य पुरुषस्य स्वरूपावधारणपूर्वं यैर्यैः विचारविमर्शादिभिः मुमुक्षवो विचलता-मापद्यन्ते, तत्समाधानं पूर्वोक्तसूत्रैरनुष्ठितम्। प्रागुक्तसूत्रेपु महर्पिणा सूत्रकारेण विविधवैज्ञानिकविचारनिर्णयम्, अन्तःकरणस्य पुरुपस्य च स्वरूपम, उभयस्वातन्त्र्यं चेत्यादि सविशेपं वर्णयित्वा अग्रिमसूत्रेपु कैवल्यस्वरूपयोगस्य लक्ष्यं सविस्तरं वर्णयिष्यते।

शुद्धवुद्धमुक्तस्वभावश्चैतन्यस्वरूपः पुरुषो अन्तःकरणतो भिन्नः। सः अन्तःकरणेन सह स्वसम्वन्धं संस्थाप्य तत्र प्रतिविम्वितः सन् अन्तःकरणा-भिन्नमात्मानं मन्यते। एतदेव पुरुषस्वरूपविस्मृतिकारणम्। अन्तःकरणं किल पुरुपभिन्नं वस्तु। तच्च यद्यदनुतिष्ठति, तत् सर्वं पुरुपभोगसम्पादनार्थ-मेव। एतेनैतदेव सिद्ध्यति यत् पुरुषस्वरूपविस्मारकम् अन्तःकरणमेव। तदेव विपयैः सह पुरुषसंयोगं विधत्ते। सिद्धान्तमिमं द्वारीकृत्य महर्पिणा सूत्रकारेणैतत् निर्णीतं यद् यावत् पुरुपान्तःकरणयोः यथावत्स्वरूपम् उभयोः सम्वन्धः स्वातन्त्र्यं च जिज्ञासुहितसाधनाय न वर्णयिष्यते, तावत्

पुरुषस्य मुक्तदशापरनामक-कैवल्यपदमर्म याथातथ्येन नावधारयितुं शक्यते। अतो महर्षिस्तत्सर्वं सविस्तरं वर्णयित्वा वक्ष्यमाणसूत्रेषु कैवल्य-पदं सम्यग् विवेचयिष्यति।

यद्यपि तद्विवृतिः यत्र तत्र प्रागप्यनुष्ठिता, तथापि कैवल्यपदविरुद्ध-दशाभिः पुरुषस्य साक्षात् सम्बन्धसत्त्वात् तेऽन्तरायाः प्राक् प्रपञ्चिताः। इदानीं योगसाधनलक्ष्यं मुक्तिरूपकैवल्यपदं वक्ष्यते। पूर्वं प्रतिकूल-दशाप्रदर्शनमनुष्ठाय ततश्च अनुकूलस्वाभाविकदशाप्रदर्शनेन त्वरितमेव तत्त्वाववोध इति हेतुना प्राक् तत्सविस्तरस्वरूपं विविच्य, अग्रे मुक्तिपदरूपं कैवल्यं वक्ष्यते इति॥ २४॥

चित्त-पुरुषविवेकशीलस्य योगिनोऽवस्था निर्दिश्यते—

**विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः॥ २५॥**

विशेषदर्शिन आत्मभावस्य भावनाया विनिवृत्तिर्जायते। नानाविषय-बद्धाः साधारणदर्शिनो जीवा इव एकतत्त्वसाहाय्येन परां सिद्धिमधिगता विशेषदर्शिनो योगिनः संसारमिमं नानुभवन्ति। आत्मदर्शिनो योगिनः पूर्वोक्तपद्धतिमनुसृत्य जगदिदम् अन्यथैव पश्यन्ति। अत एव ते 'विशेष-दर्शिन' आख्यायन्ते।

योगसाधनेन निर्मलान्तःकरणाः पूर्णं ज्ञानमधिगतवन्तो योगिनः चित्तं पुरुषश्चेति उभौ भिन्नपदार्थाविति मन्यन्ते। एतादृशज्ञानोदयेन तदन्तः-करणस्य शरीरादिविषयिणी मिथ्याभावना निवर्तते, ते च यन्त्रवदन्तः-करणस्य कर्तृत्वमवधारयन्ति। अतः शनैः शनैः योगिराजानां तेषां शारीरिको भावो विनिवर्तते। यथा वर्षर्तुनिपतितैः नवनीरदवारिविन्दुभिः अङ्कुरितदूर्वादलावलोकनेन तन्मूलसत्तासद्भावोऽनुभूयते, तथैव अन्तर्वहि-र्भावतः परिज्ञातप्रकृति-पुरुषभेदाः समधिगतमोक्षमार्गा योगिनः परिचीयन्ते। प्रकृतेः पुरुषस्य पारस्परिकस्वातन्त्र्यानुभवाद् देहाध्याससम्बन्धराहित्यात् जगदिदं तुच्छं मिथ्याभूतमवधारयन्तस्ते परमात्मानमेव केवलं सत्यमाम-

नन्ति। अत एव ईश्वरीयज्ञान-चर्चायां भगवत्कथोपासना-भक्तिकार्येषु नित्याभिरुचिः निष्कामजगत्सेवास्वाभाविकप्रवृत्तिश्च तेषु दृश्यते। यदा महात्मसु चैतल्लभ्येत चेद् यत् तेषामन्तःकरणवृत्तय आत्मज्ञानविचारे, तत्त्वोपदेशे, भगवद्गुणगाने, परमेश्वरमहिमप्रचारे च सदैव संलग्ना-स्तिष्ठन्ति, यदा च योगिषु विलोक्येत यत्ते मोक्षमार्गवर्णने, भगवद्गुण-श्रवणे रतिं दधानाः परमेश्वरं भजन्तो रोमाञ्चिता जायन्ते, परमानन्दस्वरूप-भगवद्भावस्मरणमात्रेणैव यदा आनन्दाश्रूणि ते प्रवाहयेरन्, तदैव ज्ञातव्यं यत्तेषु परमानन्दमयं परमात्मज्योतिः प्रकाशते। तदैवावधेयं यत्ते मायापाशं समूलमुन्मूलयन्तः परमेशितुः परब्रह्मणः सच्चिदानन्दमयमधिकारं प्राप्नुवन् इति। इमामेव अवस्थाम् अधिकृत्य योगिनः कैवल्यस्वरूपं मुक्तिपद-मधिकुर्वन्ति।

एतद्दशापूर्णज्ञानोदयेन योगिराजेन ज्ञायते यदसौ क आसीत्, कश्च जातः; इदानीं कोऽस्ति, कुत्र च तेन गन्तव्यमास्ते, इत्यादि। इयं हि योगिनो विशिष्टदर्शनदशा। अस्यामवस्थायां नश्यति अविद्यारूपी भ्रमः, योगी च दिव्यं ज्ञानमधिकृत्य चित्तधर्मतो ह्युपरतः कैवल्यभूमिमासा-दयति। अर्थात् पुरुषान्तःकरणयोः पारस्परिकस्तात्त्विको भेदः परिज्ञायते, येन तदीयोऽनुरागः परमपदमुपढौकते, तदीया दृष्टिश्च संसारतः परावृत्त्य कैवल्यस्वरूपं मुक्तिपदमुपसर्पति। परमेण वैराग्येण यदा अन्तःकरणवृत्तीना-मुन्मेष एव न जायते, तदानीमन्तःकरणं स्वयमेव शाम्यति, पुरुषश्च स्व-स्वरूपमधिगच्छति॥ २५॥

तदानीं कीदृशी चित्त-दशेति निरूप्यते—

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्॥ २६॥**

तदा = तस्मिन् काले, विशेषदर्शितायामधिगतायां पूर्णज्ञानं चित्तं विवेकनिम्नम् = विवेकपथवाही, कैवल्यप्राग्भारम् = कैवल्याभिमुखं प्रसर्पति। चित्तं किल पूर्वोक्तावस्थातः प्राक् विविधविषयभारैः आक्रान्तमासीत्।

तदेवेदानीं विषयाणां पूर्णहानात् त्यक्तभारं ज्ञानस्वरूपाकर्षणतेजसा समाकृष्टं कैवल्यपदपरमात्माभिमुखं प्रतिष्ठते।

विज्ञानमिदं प्रकारान्तरेणापि अवबोधयति। तथा हि—अन्तःकरणस्यैकतो विषयाः अपरतश्च परमात्मा। यावदन्तःकरणं विषयाभिमुखं तावद् दृष्टिः पुरुषतो व्यावृत्ता सांसारिकविषयेषु ग्रस्ता तिष्ठति। परन्तु यदाऽन्तःकरणस्य विषयवासनाः समूलं विनश्यन्ति, तदा विशेषदर्शिनो योगिनश्चित्तं विषयविमुखं सत् कैवल्यपदं परमात्मस्वरूपमेव निर्निमेषं निरीक्षते। तद्धि कैवल्यमधिगच्छति। उक्तमपि गीतोपनिषदि—

"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते।
योगारूढस्य तस्यैव शमः कारणमुच्यते॥" इति।

शमो हि समाध्यपरपर्यायः। समाधेः दशात्रैविध्यम्, यथोक्तं महर्षिणाऽङ्गिरसा—"तदेवेदम्, इदं तत्, तदेवाहम्" इति। प्रथमायामवस्थायां जगदेव ब्रह्मेति भासते। द्वितीयायां ब्रह्मैव जगदिति। तृतीयायां च दशायाम् 'अहमस्मि सच्चिदेकं ब्रह्मे'ति बोधः समुज्जृम्भते॥ २६॥

अत्र अवस्थाभेदमप्याह—

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः॥ २७॥**

पूर्वसंस्काराद्धेतोः समाधिदशायामपि कदा कदाऽपि योगिनो मिथ्याज्ञानमुत्पद्यते। कैवल्यपदरूपसमाधिदशायां प्रथमायां यद्यपि योगिना परिपूर्णं ज्ञानमासाद्यते, तथापि तदीयसमाधिदशायामस्यां स्वीयान्तःकरणसंस्कारेभ्यः कैवल्यानुभवव्यतिरिक्तं प्रकारान्तरसृष्टिसम्बन्धिमिथ्याज्ञानमपि कदा कदाऽपि समुदेति।

यद्यपीदं योगिसमाधिप्रत्यूहरूपम्, किन्तु नैतेन योगिनः काऽपि हानिः। संस्कारास्ते दग्धबीजवत् नाङ्कुराय प्रभवन्ति। समाधिस्थितयोगिनो विविधपूर्वसंस्कारैः क्षणिकमिथ्याज्ञाने समुत्पन्ने सति बाह्यलक्षणैरसौ बद्धजीव इव प्रतीयते; परन्तु यथा पक्षिपालहस्तेन बद्धरज्जुपाशः पक्षी

वियति उड्डयमानोऽपि पक्षिपालकरे एव समागत्य विश्राम्यति, तथैव समधिगतसमाधेर्योगिनः अन्तःकरणे पूर्वसंस्कारैर्विषयप्रवृत्तौ समुद्गतायामपि क्षणेनैव तद्विषयप्रवृत्तिः विनश्यति। तत्प्रवृत्तिहानाय उपायानुष्ठानमावश्यकं न वेति प्रश्नस्योत्तरं सूत्रेऽग्रिमे वक्ष्यते ॥ २७ ॥

एतदवस्थाहानं निर्दिशति—

**हानमेषां क्लेशवदुक्तम् ॥ २८ ॥**

स्पष्टोऽर्थः। प्रथमपादप्रतिपादिताऽविद्यादिक्लेशनाशवत् एतादृशविषयाकारवृत्तिदशानाशोऽपि अवधेयः। यथा क्लेशबीजनाशेन न पुनः क्लेशाः प्रादुर्भवन्ति, तथैव ज्ञानाग्निदग्धाः संस्काराः समाधिस्थस्य योगिनोऽन्तःकरणे पुनर्नूतनं संस्कारं नैव प्रादुर्भावयितुमर्हन्ति। निर्विकल्पसमाधिभूमिमारूढस्य आत्मज्ञानं प्राप्तवतो योगिराजस्यान्तःकरणे विद्यायाः परिपूर्णविकाससत्त्वात् पूर्वप्रबलसंस्कारबलेन कदाचिद् विषयाकारप्रवृत्तौ सत्यामपि क्षणान्तरेणैव सा विषयप्रवृत्तिः स्वयमेव विनश्यति। अतो न तेन कापि भयसम्भावनेति भावः ॥ २८ ॥

ततः समाधेरुदयो निर्दिश्यते—

**प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥**

प्रसंख्यानेऽपि = विवेकज्ञानेऽपि, अकुसीदस्य = समीहारहितस्य योगिनश्चेतसि सर्वथा विवेकख्यातेः सत्त्वात् धर्ममेघः समाधिरधिगम्यते इत्यर्थः। पूर्वोक्तरीत्या यदा योगी विवेकपूर्णतामधिगच्छति, अत्युत्कृष्टवैराग्यवशात् पूर्णज्ञानदशायाम् अकुसीदः = इच्छारहितस्तिष्ठति, तदा तत्र प्रागुक्तसंस्कारमिश्रितदशा पूर्णरूपेण प्रणाशमेति, तदैव च योगी निश्चलम् अद्वितीयभावमासाद्य ज्ञानस्वरूपतां प्रपद्यते।

दशेयं महर्षिणा सूत्रकारेण "धर्ममेघ"समाधिनाम्ना समाम्नाता। यथा मेघो जलं वर्षति, तथैव समाधिरप्ययं क्लेशकर्मादिक्षयकारकम्

अविद्यानाशकम् अपवर्गसाधकं धर्मं वर्षति। अत एवायं 'धर्ममेघः' समाधिः। एतादृशसमुन्नताधिकारवतां लक्षणानि शास्त्रेऽभिहितानि। तथा हि—

"तदन्तिके तदा सर्वे धर्ममार्गा भजन्त्यहो।
वात्सल्यं हि यथा पुत्राः पौत्राश्च सन्निधौ पितुः॥

ममैव ज्ञानिनो भक्ता धर्मं साधारणं किल।
अधिकर्तुं क्षमन्ते वै पूर्णतो नात्र संशयः॥

मद्भक्ता ज्ञानिनो विज्ञाः! धर्मज्ञानाब्धिपारगाः।
सार्धं केनापि धर्मेण विरोधं नैव कुर्वते॥

साधारणे विशेषे च धर्मेऽसाधारणे तथा।
सम्प्रदायेषु सर्वेषु भक्ता ज्ञानिन एव मे॥

ममैवेच्छास्वरूपिण्या धर्मशक्तेः स्वधाभुजः।
सर्वव्यापकमद्वैतं रूपं नन्वीक्षितुं क्षमाः॥
संसारेऽत्राभिधीयन्ते श्रीजगद्गुरवो ध्रुवम्॥" इति।

अयमेव समाधिः पूर्णज्ञानस्य सार्वभौमधर्मस्य हेतुः। इयं भूमिरेव कैवल्यपदस्य द्वाररूपा। इयं दशैव परमवैराग्यस्य फलम्। अत्र योगविघ्ना नावशिष्यन्ते। एतदनन्तरं कैवल्यपदमास्ते॥ २९॥

तदनन्तरं किमित्युच्यते —

### ततः क्लेशकर्मनिवृत्तिः॥ ३०॥

ततो धर्ममेघ-समाधितः क्लेशकर्मणां हानिर्जायते। कर्मक्लेशनाशेन योगी जीवन्मुक्तो भवति। क्लेशकर्मणां जीवन्मुक्तदशायाश्च सविस्तरवर्णनं प्रपञ्चितपूर्वम्। नात्र पुनरुक्तिरुचिता। जीवन्मुक्तदशामधिगत्य योगिनो निःशेषं मायाबन्धनं विमुञ्चन्ति। तदानीं ते सर्वं कुर्वन्तोऽपि न किमपि कुर्वन्ति॥ ३०॥

अनन्तरं सम्पद्यमानं प्रतिपाद्यते—

**तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥**

तदानीं सर्वावरणरूपं यन्मलं तेन अपेतस्य ज्ञानस्य आनन्त्यं ज्ञेयमल्पम् अवशिष्यते। यदा समाधिस्थस्य योगिनः सर्वमलमावरणरूपं दूरीभवति, तदा तस्यान्तःकरणम् अनन्तज्ञानेन परिपूर्णं जायते। रजस्तमसोः शुद्धे सत्त्वे पूर्णविलयेन योगिनोऽन्तःकरणे ज्ञानविघ्नकारकं न किमप्यवशिष्यते। इयमेव ज्ञानस्य अनन्तपूर्णता। दशायामेतस्यां योगिना न किञ्चिदपि परिज्ञातुमवशिष्यते। अर्थात् ज्ञानस्य परिपूर्णतया ज्ञानस्येहा विलयमुपढौकते। सेयं योगिनः सर्वज्ञावस्था। तदानीं योगी यत्रैव दृष्टिं प्रेरयति, सर्वमवगच्छति। एतदवस्थाविशेषवर्णनम् उक्तपूर्वम्। तस्य पुनरुक्तिर्व्यर्था। कैवल्यपादे तत्सम्बन्धिनः यावतो विवरणस्य आवश्यकत्वम्, तावदेवात्र इङ्गितमात्रेण प्रदर्शितम् ॥ ३१ ॥

तदनन्तरं च किं भवतीति प्रतिपाद्यते —

**ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥**

तदनन्तरं कृतार्थानां गुणानां परिणामक्रमोऽपि समाप्यते। पूर्वोक्तपूर्णज्ञानदशायाम् उदीयमानायां प्राकृतिकसत्त्वरजस्तमसां क्रमोऽपि समाप्तिं गच्छति। बन्धनावस्थायां यथा सत्त्वरजस्तमांसि स्वीयभोगादिप्रयोजनसमुत्पादनेन परिणामतः अनुलोमविलोमभावद्वारा सृष्टिस्थितिलयक्रियामकुर्वन्, न तथा मोक्षावस्थायामिति भावः। एकतत्त्वपूर्णोदयेन योगिराजस्य बुद्धितत्त्वं मनोविरहितं सत् विकसितविशुद्धज्ञानं जायते। तदानीमसौ योगिराजः शिवसायुज्यं समधिगच्छन् प्रकृतिद्रष्टा बोभवीति। तस्मिन् काले प्रकृतेस्त्रयो गुणा न तं स्ववशमानेतुं प्रभवन्ति। प्रत्येकगुणसमुत्पत्ति-विलयक्रमो यदा योगिराजदृष्टिमतीत्य न वर्तते, तदा कोऽपि गुणः स्वपाशे तं पातयितुं नार्हति। त्रिगुणानां शक्तिहीनत्वे तत्क्रमस्य च

विलये जाते योगी त्रिगुणमुक्तो जायते। इयमेव पुरुषस्य प्रकृतिविमुक्तेः अवस्था ॥ ३२ ॥

क्रमोऽयं किंस्वरूप इति निरूप्यते—

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥**

कालसूक्ष्मभागेन निरूप्यमाणः परिणामावसानविज्ञेयः 'क्रम' इत्युच्यते। पूर्वसूत्रार्थस्य सारल्यमनुष्ठातुं महर्षिः सूत्रकारः क्रमलक्षणं निर्दिशति। अत्यन्तसूक्ष्मकालः 'क्षणः' प्रोच्यते। एकस्यानन्तरं द्वितीयक्षणस्य अवबोधः 'क्रम' आख्यायते।

प्रसङ्गतोऽत्र उदीयमानानां शङ्कानां निवृत्तिरपि समासतः क्रियते।

ननु वर्तमानस्य क्षणस्य पश्चात् काले यः परिणामः, तस्य पूर्वापरगतिः 'क्रम'शब्देन अभिधीयते इति यदुक्तं तदसत्। यतो हि, यथा वस्त्रस्य प्राचीनत्वं वस्त्रनाशरूपपरिणामे न ज्ञातुं शक्यते, तथैव क्रमलक्षणमपीति चेत् ?

अत्र समाधत्ते—अनित्यपदार्थक्रमे यथा विशुद्धता, न तथा नित्यपदार्थक्रमेऽवगन्तव्या। नित्यपदार्थानां नित्यतया क्रमः साधुरीत्या अवगन्तुं शक्यते। विषयोऽयम् उदाहरणेनानेन अवधेयः—वस्त्रादिनाशवतः पदार्थस्य विनाशे पदार्थोऽसौ मृत्स्वरूपं धत्ते, किन्तु न तथा त्रिगुणपरिणामः। त्रिगुणपरिणामे एकगुणस्य प्रधानत्वे अपरौ गुणौ तिरोधत्तः, यथाक्रममाविर्भावं तिरोभावं च भजतः।

नित्यपदार्थानां क्रमोऽप्ययं कथं नित्य इति चेद् ?

उच्यते; नित्यता द्विविधा—१. कूटस्थ-नित्यता, २. परिणाम-नित्यता चेति। पुरुषस्य तु कूटस्थनित्यता, गुणानां पुनः परिणामनित्यता वेद्या। पुरुषनित्यतायां विमर्शो नावश्यकः। गुणानां नित्यतायामयं विचारो यद् यदा परिणतौ तत्त्वानि न नश्यन्ति, तदा तानि नित्यान्येव। यस्य कार्यकारणरूपतत्त्वस्य नाशो न स्यात्, स नित्य एव।

परिणामिनो वस्तुनः कथं नित्यतेति चेत् ?

श्रूयताम्—गुणेषु नित्यत्वम् , बुद्ध्यादिषु च अन्तदशावधेयः क्रमस्तिष्ठति। नित्यायाः प्रकृतेः साम्यावस्थायां त्रयो गुणा विलीयन्ते, वैषम्यावस्थायां तु ते पार्थक्येनैव दृष्टिगोचरतामायान्ति। अग्नौ दाहिका शक्तिरिव प्रकृतौ गुणानां सत्ता नूनं भाविनी। त्रिष्वपि गुणेषु चैकतरं प्रबलम् अभ्यर्णमुपस्थितमेव बुद्धिर्गृह्णाति। परन्तु नित्यगुणेषु यः क्रमस्तिष्ठति, तस्यान्तो जायते। गुणानां नित्यत्वेन परिणामोऽप्यसौ नित्य एवेति वक्तुं शक्यते। विकारविरहितकूटस्थनित्यपदार्थेषु यः क्रमस्तस्य नित्यतायां सन्देहो न भवितुमर्हतीति।

ननु संसारस्य स्थितौ प्रलये च विद्यमानगुणक्रमस्य समाप्तिर्भवति न वेति प्रश्न एकदेशीयः। अतस्तदुत्तरमपि एकदेशीयं भवितुमर्हति। गुणक्रमेण सृष्टिस्थितिप्रलयाः क्रममनुसृत्य भवन्त्येव। सृष्टेः पश्चात् स्थितिः, तस्या अनन्तरं प्रलयः, तदनन्तरं पुनः सृष्टिर्भवति भविष्यति च। परन्तु सिद्धान्तोऽयं निश्चप्रचो यद् येषां विषयसम्बन्धिनी तृष्णा नाशमुपगता, ते योगिनो ज्ञानवन्तो न पुनरुत्पत्स्यन्ते। तेषां विभागस्य त्रिगुणमयी प्रकृतिः क्रमसहिता विलयं गच्छति।

विचारैरेतैः बहुषु शङ्कासु दूरीभूतास्वपि महती चैका शङ्का जागर्ति यद् यदि कूटस्थस्य परिणामस्य चेत्युभयोः नित्यता स्वीक्रियेत, तर्हि संसारोऽयम् अनन्तः सान्तो वा वक्तुं शक्यः, अर्थादियं त्रिगुणमयी प्रकृतिलीला, सृष्टिक्रियेति यावत् , नाशवती नित्या वा ? शङ्केयं नूनमतिगहना। इयं किल जिज्ञासुगणेषु प्रायशो जागर्ति, एतयैव नानामत-मतान्तरेषु विरोधः प्रादुर्भवति, मानवबुद्धिश्च प्रायशः परिवर्तते। किन्तु त्रिकालदर्शिनो महर्षयो न किञ्चिदपि परित्यक्तवन्तः। जीवहितसाधनाय तैः सर्वमपि उक्तमास्ते। भ्रमः, ज्ञानविपर्ययः, व्यर्थसन्देहश्च जीवानामज्ञानविजृम्भिताः। अविश्वासिनामधिकारिणां ध्यानपुरस्सरशास्त्रानालोचनयैव ते समुत्तिष्ठन्ते।

यद्यप्येतादृशभ्रमसन्देहस्य समाधानं किञ्चिद् विवृतपूर्वम्, किन्त्वत्रापि तत्समाधानं प्रोच्यते। तथा हि—कैवल्यपदजुषां मुक्तयोगिनां दृष्टौ संसारस्य विलयो जायते। परन्तु साधारणजीवानां कृते संसारनित्यता तिष्ठत्येव। यदा जीवः स्वीयपुरुषार्थं द्वारीकृत्य अविद्याबन्धनाद् विमुच्यते, तदा तदंशप्रकृतिः सान्ता सती महाप्रकृतौ विलीयते। इयमेव प्रकृतेरन्तता, संसारस्य नाशो वा। परन्तु एकस्य योगिनः अंशभूतायाः प्रकृतेर्विलयेऽपि अनन्तब्रह्माण्डीयानन्तजीवप्रकृतिः अनन्ता तिष्ठति। इयमेव प्रकृतेरनन्तता, इयमेव महामायास्वरूपिण्या महाशक्तेर्नित्यता च। अत एव महर्षिणाऽङ्गिरसा प्रोक्तम्—

"अनाद्यनन्ताऽध्यात्मिकी सृष्टिः।" "प्रकृतेश्च तथात्वम्।"

"आधिदैविकाधिभौतिकसृष्टिः सादिसान्ता।"

"ततो ब्रह्माण्डपिण्डे नश्वरे।" इति।

ब्रह्मणः प्रकृतेरानन्त्यात् प्रवाहस्वरूपसृष्टिक्रियामयी अनन्तकोटिब्रह्माण्डसृष्टिः अनाद्यनन्ता। अतः प्रकृतेरपि तथात्वमवधेयम्। किन्तु प्रत्येकं पिण्डं ब्रह्माण्डं च सादि सान्तम्। अतः संसारस्य समष्टिरूपेण अनन्तता, व्यष्टिरूपेण च सान्ततेति उभयमपि सिद्ध्यति। सृष्टेः सादित्वस्य अनादित्वस्य चावबोधे काठिन्यमापतति, अर्थात् क्षणक्रमविचारेण पूर्वापरान्वेषणे आदिक्षणस्य विचारप्रयोजनमापतति।

सिद्धान्तोऽयं यद्यपि प्रागपि प्रपञ्चितः, किन्तु मूलसन्देहनिवारणाय अत्रापि किञ्चिदुच्यते—सृष्टिरनादिरेव, सृष्टिकारणभूतप्रकृतेः अनादित्वात्। परन्तु गम्भीरविज्ञानप्रबोधाय ब्रह्मणः सृष्टिसमुत्पत्तिः, तया च सृष्टेरादित्वं साधनीयमेव भवति। यत्रास्माभिर्गन्तव्यमास्ते, तदारभ्य स्थानं स्वनिकटपर्यन्तमार्गस्य यदि याथातथ्येनानुभवो नास्ति, तर्हि कदापि गन्तव्यस्थलं नासादयितुं शक्यते। एवमेव वेदोक्तविचारे बुद्ध्या विविच्यमाने न कुत्रापि सिद्धान्तविरोधस्य मतभेदस्य वा सम्भावना।

शास्त्रोक्तिर्न कुत्रापि परित्यक्तलक्ष्या। सत्त्वरजस्तमसां त्रिगुणानां वैषम्यावस्था प्रकृतौ दृश्यते। साम्यावस्थायां प्रकृतौ त्रयो गुणा न पार्थक्येन दृष्टिगोचरतामापद्यन्ते। अतो विज्ञानसिद्धमेतद् यत् साम्यावस्थायाः प्रकृतेर्दशायां गुणपरिणामक्रमस्य अस्तित्वं न तिष्ठति। साम्यावस्थां भजन्त्यां मुक्तात्मनः प्रकृतौ गुणपरिणाम-क्रमस्य सम्भावनैव नास्ति। तां प्रकृतेः साम्यावस्थां प्राप्य प्रकृतिस्थो योगिराजः स्वरूपोपलब्ध्या जीवपरमाराध्यदशां यामधिगच्छति, साऽग्रिमसूत्रे वक्ष्यते॥ ३३॥

इदानीं योगपरमफलं कैवल्यस्वरूपमाह—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चिच्छक्तिरिति॥ ३४॥**

पुरुषार्थरहितगुणानां परिणामद्वारा विलयः कैवल्यम्, किं वा पुरुषस्य स्वरूपेऽवस्थानमपि कैवल्यमवधेयम्। कैवल्यं मोक्षो वेत्युभौ पर्यायवाचकौ। येषां गुणानां फलं जीवैर्भुज्यते, तेषां सृष्टिकारकगुणानां प्रतिलोमद्वारा लयेन तेभ्य उपरमो मोक्षः। अर्थात् प्राकृतिकत्रिगुणपाशविमुक्तिरेव मोक्षः। बुद्धिस्वरूपान्तःकरणसम्बन्धराहित्येन पुरुषस्य निजस्वरूपेऽवस्थितिः स्वातन्त्र्यं वा मोक्ष इत्येतत्सूत्रोक्तस्वरूपप्रतिष्ठार्थः। पूर्वोक्तसूत्रप्रतिपादितासु अवस्थासु प्रविशतो योगिनः अन्ते निर्विकल्पाख्यस्य असम्प्रज्ञातस्य समाधेः परिपूर्णावस्थायाः प्राप्तिरेव मोक्षः कैवल्यं वा। एकतत्त्वसाहाय्येन योगिराजः क्रमशः स्वस्याभिमुखं नैजमन्तःकरणमग्रे सारयन् वैषम्यावस्थां प्रकृतिं यदैव साम्यावस्थायां परिणमयति, तदैव स्वरूपप्रतिष्ठाद्वारेण स कैवल्यमधिगच्छति। समाधिभूमौ केन प्रकारेण एकतत्त्ववृद्धिः क्रियते, तत्सम्यगुपवर्ण्य ततश्च ज्ञानप्रतिष्ठायै

प्रयोजनीयविचारसिद्धान्तं निर्णीय सूत्रेणैतेन कैवल्यपदस्य यथार्थस्वरूपं निर्णीतम्।

पुरुषार्थशून्यगुणानां विलोम एव कैवल्यम्।

विज्ञानमिदमवधारयितुं पूर्वमेतद् विचारणीयं यत् पुरुषार्थयुक्तगुणानां कीदृशी स्थितिरिति? जीवो यावत् समष्टिब्रह्माण्डसम्बन्धेन व्यष्टिरूपे स्वीयं स्वतन्त्रसम्बन्धं संस्थाप्य अद्वितीयपूर्णचेतनमयब्रह्मसत्तात आत्मानं पृथगवधार्य जीवकेन्द्रमेकं स्थापयति। यावच्च जीवकेन्द्रस्य तस्य स्थायित्वं तावदेव पुरुषार्थस्य स्थितेः प्रयोजनीयता। निर्लिप्ते द्रष्टृरूपपरमपुरुषे न कापि पुरुषार्थसम्भावना। सुतरां यावद् अज्ञानजनितजैवभावसद्भावः, तावदेव पुरुषार्थस्वातन्त्र्यमपि अवधेयम्। यावदन्तःकरणवृत्तिचाञ्चल्येन बुद्धिस्तरङ्गायिता तिष्ठति, न तावत् द्रष्टुः पुरुषस्य स्वरूपावस्थानं सम्भवम्। समाधिदशायां पुरुषार्थस्य चरमदशामधिगत्य योगिराज एकतत्त्वस्य परिपूर्णोदयेन पुरुषार्थसीमानमतिक्रामति। तदानीं पुरुषार्थेन वैषम्यावस्थां प्राप्ता योगिराजस्य नैजा प्रकृतिः साम्यावस्थामधिगच्छति, तदीयास्त्रिगुणाश्च स्वकीयस्वभावसिद्धां विलोमदशां प्राप्य स्वभावे विलीयन्ते। मूलप्रकृतौ स्वस्याः प्रकृतेर्विलयेन पुरुषस्य द्रष्टृरूपे अवस्थानं जायते।

योगदर्शनेऽत्र पुरुष-प्रकृत्योः स्वाधीनसत्ता स्वतन्त्रगतिश्च उपवर्णिता। पुरुषहेतव एव प्रकृतिः क्रियाकलापं विधत्ते। यदा कैवल्यपदोदयेन पुरुषः स्व-स्वरूपं प्रतिपद्यते, तदानीं स्वत एव प्रकृति-पुरुषयोः सम्बन्धविच्छेदात् प्रकृतिः क्रियाहीनतां प्राप्ता विलीयते। इयमवस्थैव वेदान्तस्य अद्वैतभावः, शास्त्रान्तरस्य आत्यन्तिकदुःखनिवृत्तिः, ज्ञानमार्गस्य ब्रह्मसद्भावः, भक्तिशास्त्रस्य पराभक्तिः, योगशास्त्रस्यैतस्य कैवल्यं चेति। पुरुषस्य स्वरूपे अवस्थानम्, पूर्ववत् सृष्टिलयेऽपि पुरुषस्य स्वरूपे प्रतिष्ठा, स्वपूर्वस्वरूपा-

धिगम एव मोक्षः कैवल्यं वा। तटस्थज्ञानातीता पूर्णज्ञानदशैव कैवल्यम्। द्वैतभावविरहिता अद्वैतावस्थैव कैवल्यम्। इमामेवावस्थाम् अधिगत्य अल्पज्ञानवान् जीवः सर्वज्ञ-परमपुरुष-साक्षात्कारेण समुद्रे तरङ्गवत् पुरुषे परमे विलीयते। यत्परो नास्तीति दशैव कैवल्यम्। इयं वाङ्मनोबुद्ध्य-गोचरावस्थैव मोक्षः। इयमेव कैवल्यदशा सर्वेषां साधनानां लक्ष्यभूता। एतत्कैवल्यमेव वेदसिद्धान्तः। इदमेव कैवल्यं योगसाधनस्य चरमं लक्ष्य-मिति तत्त्वम् ॥ ३४ ॥

॥ समाप्तमिदं योगदर्शनम् ॥



# पाश्चात्त्यानां योगविषयिणी दृष्टिः

— श्री श्रीकृष्णदत्त भट्टः —

[ मन्त्री—अ० भा० सर्व-सेवा-सङ्घ-प्रकाशनस्य, वाराणसी ]

'योगश्चित्तवृत्तिनिरोधः ।'

योगो नाम चित्तस्य वृत्तीनां निरोधः ।

चित्तस्य पञ्च वृत्तयः काः काः ? तासां लक्षणं किम् ? तासां निरोधस्य साधने अभ्यासो वैराग्यं च के ? समाधिः कः ? ईश्वर-प्रणिधानं किम् ? चित्तस्य के के विक्षेपाः ? तेषां नाशः कथं क्रियेत ? क्रियायोगस्य स्वरूपं किम् ? पञ्च क्लेशाः के ? तेषां नाशस्य कानि साधनानि ? अष्टाङ्गयोगः कः ? तेषां पञ्च बाह्याङ्गानां कानि लक्षणानि ? तेषाम् अनुष्ठानं सिद्धयश्च कीदृश्यः ? त्रीणि अन्तरङ्गसाधनानि—धारणा, ध्यानम्, समाधिश्च = संयमाश्च के ? संयमेन योगविभूतयः कथं प्राप्यन्ते ? सिद्धयः साधकस्य आत्मोद्धारे किमिति उपसर्गभूताः ? धर्ममेघसमाधिः कः ? कैवल्यप्राप्तिश्च कथं जायते ? पतञ्जलिना योगदर्शने सर्वस्याऽस्य सूत्ररूपेण वर्णनं कृतमस्ति—समाधिपादः, साधनपादः, विभूतिपादः, कैवल्यपादश्चेति पादचतुष्टयेन ।

योगस्य परिज्ञानं नहि सरलं वस्तु ।

शब्दानां परिज्ञानेन योगो बुद्धौ समारोढुं शक्यः–कल्पनेयं न साधीयसी । अन्यच्च, शब्दानाम् अनेकार्थाः । सूत्रकृता कस्मिन् अर्थे कः शब्दः प्रयुक्तः इति वक्तुमशक्यम् । योगसूत्राणि भारतवासिना पतञ्जलिमुनिना विरचितानि । तेषां परिज्ञानाय भारतस्य, भारतीयसंस्कृतेः, भारतीयपरम्परायाः, भारतीय-दार्शनिक-पृष्ठभूमेश्च सम्यक् परिज्ञानमावश्यकम् । वैदेशिकम् उपनेत्रं परिधाय यदि कश्चिद् योगस्य रहस्यग्रन्थीः विभेदयितुं कामयेत, तर्हि तथ्यस्य मर्मावाप्तिः नूनं तस्य असम्भविनी स्यात् ।

## योगपरा वैदेशिकानां ग्रन्थाः

योगविषये वैदेशिकानां बहु आकर्षणं समभवत्, अद्यापि वर्तते च। तेषां कथैव का, ये किल योगं केवलं चमत्कारमेव मन्यते। तत्त्वतस्ते योगस्य प्राथमिकानि वर्णान्यपि न जानन्ति। ये पुनः योगं गभीरया दृशा अवलोकयन्ति, तेष्वपि सन्ति बहव एतादृशाः ये योगस्य मौलिकमर्थं न परिज्ञातवन्तः। तेषुः के चन एतादृशा अपि भविष्यन्ति, येषां मनसि भारतस्य कस्मिन्नपि वस्तुनि यथार्थः समादरो न वर्तते। तैः सूत्राणां कपोल-कल्पितमर्थं कृत्वा नूनमन्यायः कृतः।

वैदेशिकैः योगविषयकं यावद् वाङ्मयं विरचितम्, तत्र कतिपये मुख्या ग्रन्था इमे सन्ति—

| | |
|---|---|
| एनीबेसेण्ट | : इन्ट्रोडक्शन टु योग। |
| आर्नोल्ड सी० एच० | : ११० ईयर्स आफ यूथ थ्रू योग। |
| बेली, एलीस | : लाइट आफ दि सोल। |
| बेहनान, के० टी | : योग : ए साइण्टिफिक इवैलुएशन। |
| बरनार्ड, टी० | : हठ-योग। |
| कोस्टर, जी० | : योग : एण्ड वैस्टर्न साइकोलाजी। |
| डेनीलो, जे० | : योग : दि मेथड आफ रि-इण्टेग्रेशन। |
| लाँसबेरी, जी० सी० | : बुद्धीस्ट मैडिटेशन इन दि सदर्न स्कूल। |
| स्पीगेलवर्ग, एफ० | : स्पिरिचुएल प्रैक्टिसेज आफ इण्डिया। |
| वुड, अर्नेस्ट | : प्रैक्टिकल योग : एनश्येण्ट एण्ड माडर्न। |
| " | : ग्रेट सिस्टम आफ योग। |
| " | : योग। |
| " | : योग-डिक्शनरी। |
| " | : आकल्ट ट्रेनिंग आफ दि हिन्दूज। |
| " | : माइण्ड एण्ड मैमरी ट्रेनिंग। |
| " | : कानसेनट्रेशन, ए प्रैक्टिकल कोर्स। |

वुड्रूफ, सर जान : दि गारलैण्ड आफ लैटर्स ।
" : शक्ति एण्ड शाक्त ।
" : दि सर्पेण्ट पावर ।
वुड्स, जे० एच० : योग-सिस्टम आफ पतंजलि ।
येसूदियन एण्ड हेच : योग एण्ड हेल्थ ।

एतेषां कतिपयानामत्र विचारं कुर्मः ।

### वेहनानस्य ग्रन्थः

डाक्टर के० टी० वेहनानस्यैकं पुस्तकमस्ति—Yaga : A Scientific Evaluation ( योग : ए साइण्टिफिक इवैलुएशन )। अयं महाभागः 'येल-विश्वविद्यालयस्य स्नातकत्वमासाद्य योगविषयकं ज्ञानमधिगन्तुं भारत-स्थिते 'लोनावला'-स्थाने श्रीस्वामिकुवलयानन्दानां सविधे समागतः। किन्तु अनेन स्वकीयः शोधग्रन्थः स्वामिपादानां तत्त्वावधाने न सम्पादितः। प्रत्युत अमेरिकादेशे परावृत्य एकस्य मनोविज्ञानविशेषज्ञस्य तत्त्वावधाने सम्पादितः। अतः स्वाभाविकमेतत् यत् पतञ्जलेः हार्दपरिज्ञाने स पदे पदे भ्रान्तिं गत इति ।

### वुड्स-महाभागस्य अनुवादः

हार्वर्ड-विश्वविद्यालयस्य प्राध्यापकेन जे० एच० वुड्स महाभागेन योगसूत्रस्य, व्यासभाष्यस्य, तट्टीकायाश्च अनुवादो विहितः। उक्तविश्वविद्यालयेन ग्रन्थोऽयं भव्यरूपेण प्रकाशितः। अस्य प्रणयने, मुद्रणादौ च अतितरां व्ययः कृतः। अयं योगसूत्रस्य प्रामाणिकोऽनुवादो मन्यते। भारतीयविश्वविद्यालयेष्वपि सविशेषं मान्यतां गतोऽसौ ग्रन्थः। किन्तु सूक्ष्मेक्षिकया विचार्यमाणे जिज्ञासुभिः वहुमान्येऽस्मिन् ग्रन्थेऽपि यत्र तत्र प्रमादाः समुपलभ्यन्ते। यथा—

'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ।' ( १।२९ )

"There after comes the right knowledge of

him who thinks in an inverse way and the removal of obsta cles."

'श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ।' ( १।४९ )

"Has another object than the insight resulting from things heard or from inferences, in as much as its intended object is a particular."

'प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ।' ( २।१८ )

"With a disposition to brightness and to activity and to inertia and with the elements and organs as its essence, and with its purpose, the experience and the liberation ( of the self ), this the object-of-sight".

'बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ।' ( ३।४३ )

"An outwardly unadjusted fluctuation is the Great discarnate, as a result of this dwindling of the covering to the brightness."

'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ।' ( ४।२९ )

"For one who is not usurious even in respect of elevation, there follows in every case, as a result of discriminative discernment, the concentration ( called ) Rain cloud of ( knowable ) things".

The Yoga system of Patanjali. ( Harward )

श्रीकृष्णाजी केशव कोल्हटकर-महोदयो लिखति यद् यदि कश्चिद् भारतीयो जिज्ञासुः श्रीवुडमहोदयप्रणीतग्रन्थमाधृत्य योगस्य अभ्यासं

चिकीर्षेत, तर्हि युक्तमिदं भवेद् यत् स मौलिकसंस्कृतग्रन्थानाम् अध्ययनं कुर्यात्। अन्यथा स नूनं भ्रान्तो भवेत्'[1] इति।

## अर्नेस्ट-वुड्कृता व्याख्या

अर्नेस्ट ई० वुडमहाभागेन योगदर्शनस्य गभीरमध्ययनं कृतमस्ति। Practical Yoga : Ancient and Modern (प्रैक्टिकल योग : एनश्येण्ट एण्ड माडर्न) ग्रन्थे तेन योगसूत्रस्य विस्तृतोऽनुवादो विहितः। महाभागस्यास्य अनुवादोऽयं साधीयान्। तथापि यत्र तत्र विचारणीयोऽपि वर्तते। यथा—

'शौचात्स्वाङ्गजुगुप्सा परैरसंसर्गः।' (२।४०)

"From (external) cleanliness arises protectiveness of the body and detachment from others."

'परैरसंसर्गः' इत्यस्य व्याख्यां कुर्वन् स कथयति—

The word in the original here comes from a root which means, according to context, "to protect" or "to Censure or despise." I have chosen the former rendering, as it accords with practice. It would be strange indeed that dislike of the body should arise from the habit of cleanliness. Desire to protect it from dirt and "had living magnetism" is much more logical. I knew one Yogi who had built for himself in a garden a room of bars appearing not unlike a cage at a Zoo, in the middle of which he used to sit, so that when visitors come—some of whom would

१. कोल्हट्कर : पातञ्जल-योगदर्शन, भूमिका, पृ० २०८-११।

have undesirable emanations—they would be kept at a little distance ………………Practical Yoga, 1952, page 112.

'अपरिग्रहस्थैर्ये जन्मकथन्ता संबोधः ।' ( २।३९ )

"When non-greed is accomplished, there arises perception of the method of births."

श्री 'अप्रबुद्ध'-महाभागेन 'दि साइन्स आफ योग' ग्रन्थस्य द्वितीये खण्डे श्री अर्नेस्ट वुड्महोदयस्य 'प्रैक्टिकल योग'ग्रन्थस्य तदन्तर्गतायाः श्री'पाल ब्रंटन'कृत-भूमिकायाश्च कियन्ति स्थलानि सविस्तरं विवेचितानि । श्रीवुड्महोदयेन 'अन्तर्धानम्' इत्यस्य 'internal states' इति, 'भुवनम्' इत्यस्य 'inhabited regions' इति, एवमाद्याः अनेक-शब्दानां स्वकल्पिता अर्थाः कृताः । श्रीअप्रबुद्धैर्मन्यते यद् वुड्महा-भागस्य वैदुष्यं निर्विचिकित्सं किल । किन्तु तैः पतञ्जलेः हार्दं प्रति अप्रामाणिकैर्भूत्वा प्रचाराय विज्ञानस्य वलिः प्रदत्त इति । श्रीअप्रबुद्धाः कथयन्ति—

"One cannot but be sorry to find how with all his admirable capacities, Mr. Wood has, instead of remaining true to the original as advertised, sacrificed science to propoganda."[1]

इत्थं सूक्ष्मेक्षिकया विलोक्यमाने स्फुटीभवति यत् पाश्चिमात्यै-र्विद्वद्भिः योगविषये यत्किमपि लिखितम् , तत्र पदे पदे भूयांसो गुरुतराः प्रमादाः सम्भूताः । कोऽत्र हेतुः स्यादिति तु वक्तुं दुःशकम् । यथावद् विषयाकलनक्षमताया अभाव एवास्य प्रधानं कारणं मन्तुं शक्यम् । व्यक्तिविशेषस्य विषये इदमपि वक्तव्यं भवति यत् तेन वर्ण-विद्वेषवशादेव

१. अप्रबुद्ध : दि साइन्स आफ योग, खण्डम् २, भूमिका पृ० ३०-३२ ।

—ज्ञान-दाये केवलं श्वेताङ्गा एवाधिकृता इति मत्वा—योगसूत्राणां स्वकपोलकल्पितः अर्थः कृतः। दृष्टिभेदेन नासम्भवि एतत्। न्यायाधीशः श्रीवुड्रफमहाभागः सत्यमेव वदति यत् 'पाश्चिमात्याः यावत् स्वात्मानं भारतीयस्थितौ निवेश्य भारतीयज्ञानस्य अनुशीलनं न विधास्यन्ति, तावत् ते तस्य मौलिकं हार्दमभिप्रायं नावगमिष्यन्ती'ति—

"In giving an account of Indian beliefs and practices, We, who are foreigners, must place ourselves in the skin of the Hindu and must look at their doctrine and ritual through their eyes and not our own. It is difficult, I know for most to do this; but, until they can, their work lacks real value. And this is why, depsite their industry and learning, the accounts given by western authors of Eastern beliefs so generally fail to give their true meanings. Many I think do not even make an attempt. They look at the matter from the point of view of their own creed, or ( What is much worse ), racial prejudice may stand in their way of the admission of any excellence or superiority in a coloured people."—Shakti and Skakta 2nd edition. Preface, pp. viii and ix.

## योगो मनोविज्ञानं च

श्रीमत्या गेरल्डाइनकोस्टर-महोदयया 'योगः पाश्चात्यमनोविज्ञानं च' विषयेऽस्मिन् पुस्तकमेकं लिखितमस्ति—Yoga and western psychology ( योग एण्ड वैस्टर्न साइकोलाजी )। तया उच्यते यत्

पश्चिमदेशेषु योगस्य महती तृष्णा वर्तते। धर्मेण जना न तृप्यन्ति। अत एव ते योगमनुधावन्ति। सा लिखति—

"Yoga is of practical interest and value to those for whom religion in the ordinary sense of the world has no appeal."

किन्तु अत्र विदुष्या अनया 'वैराग्यम्' 'असन्तोष'त्वेन परिगृहीतम्। सा लिखति—

The sudent of yoga is necessarily one who is dissatisfied. With his own adaptation of life and 'to external work. He is likely to be one who suffers from the nesions fatigue, ill health and ill-success in ordinary life."

कीदृशी विडम्बनेयम्! श्रीमती कोस्टरमहोदया मनुते यत् 'जीवनेन असन्तुष्टो रुग्णोऽसफलो वा जनो योगे उन्मुखीभवती'ति। योगरहस्यं मनुष्याणां सहस्रेषु कश्चिदेव ज्ञातुं शक्तः। अद्यतनीयाः भौतिकवादिनो यदि नाम तं यथार्थतो ज्ञातुं न प्रभवन्ति चेत्, न तत्र किमपि विस्मयकरं वस्तु।

साम्प्रतं पाश्चात्त्यजगति मनोविज्ञानं सुबहु प्रगतमास्ते, किन्तु योगो नाम ततः कियदपि उच्चतमं वस्तु। पाश्चात्त्यविपश्चितोऽपि इदं स्वीकुर्वन्ति। डाक्टर बेहनानमहोदयः स्वीये 'योग'ग्रन्थे लिखति यत् 'योगो मनोविश्लेषणं च उभेऽपि मानवीय-चिकित्सापद्धती। किन्तु तयोः योगः उच्चतरं वस्तु' इति—

'Yoga and Pycho-analysis are both therapentic systems. Yoga goes much further than that.'

श्रीमती कोस्टर-महोदया लिखति—'मानसविकासस्य व्यावहारिकी पद्धतिर्नाम योगः। चिकित्सानिदानवद् व्यावहारिकोऽयम्। विश्वविद्यालय-

यीयो मनोविज्ञानपाठ्यक्रमो यावान् जीवनसम्बद्धः, योगस्ततोऽपि अतितरां जीवनेन सम्बद्धः। अतिविज्ञाः मानसचिकित्सका अद्यापि यानि वस्तूनि अन्वेषयन्ति, योगसूत्रे तानि पूर्वत एव समुल्लिखितानि सन्ति। योगस्य पद्धतिरियं वैज्ञानिकी वास्तविकप्रयोगाधृता चास्ति—

'Yoga is a practical method of mind development, as practical as analytical therapy and for more closely related to real life than overage University course of Psychology. Yoga-Sutras do contain information which the most advanced Psycho-therapists are seeking···The approach is Scientific and based on actual experiments."

—Yoga and Western Psychology PP. 245-246.

श्री डाक्टर विष्णु महादेव भट-महोदयेन युक्तमेव लिखितं यत् मनोविज्ञाने भारतीयमानसशास्त्ररूपे योगे च द्यावाभूम्नोः अन्तरं वर्तते। अस्य कारणद्वयम्—

(१) योगो हि चित्तनिरोधस्य शास्त्रम्। पाश्चिमात्यमनोविज्ञाने पुनः मनसि जायमानानां द्वन्द्वानां सङ्घर्षाणां च विवेचनमस्ति।

(२) योगे चित्तस्य ऐकाग्र्यं तन्निरोधश्च सर्वाधिकौ अभिमतौ। मनोविज्ञानस्य पुनः चित्तस्य अवस्थाद्वयेनानेन लेशतोऽपि न सम्बन्धः[१]।

चित्तस्य पञ्च अवस्थाः—१. क्षिप्ता, २. विक्षिप्ता, ३. मूढा, ४. एकाग्रता, ५. निरुद्धा चेति भेदात्। मनोविज्ञानं हि एतासामेव विवेचनं विश्लेषणं च विदधाति। ततोऽग्रेसरणं तत् न जानात्येव। किन्तु योगस्य आरम्भ एव ऐकाग्र्यस्थित्या जायते; धारणा-ध्यान-समाधिद्वारा च

१. वि० म० भट: यौगिक पावर्स एण्ड गॉड रियलाइजेशन, १९६०, पृ० ६३-६४।

स चित्तनिरोधसीमानमपि समाक्रामति। जीवस्य अन्तिमलक्ष्यभूतस्य कैवल्यस्य अयमेव पन्थाः।

अत एव कोस्टर-पालब्रंटन-सरअलेक्जेण्डर-केननप्रभृतयः पाश्चात्त्य-विपश्चित एकस्वरेण कथयन्ति यत् पाश्चिमात्यं मनोविज्ञानं यत्र परिसमाप्यते, तत एव भारतीयमनोविज्ञानस्य श्रीगणेशः—

Indian Psychology begins where Western Psychology ends.'[1]

## वैज्ञानिकानां दृष्टिः

कतिपये वैज्ञानिकाः योगस्य चमत्काराणां गभीरमध्ययनं विदधति। तैः नैकैः प्रयोगैस्तेषां विश्लेषणं चेष्टितम्, अन्ते च योगस्य महत्त्वं प्रामाणिकतया स्वीकृतम्। एतेषु डाक्टर एलेक्सिस कारेल, हैरी प्राइस, प्रोफेसर जोरनेल, डाक्टर रिचेट, डाक्टर ओस्टी, सर ओलिवर लाज, सर विलियम क्रुक्स, डाक्टर जेम्स, डाक्टर राइन, डाक्टर मैकडूगल एवमाद्याः प्रमुखाः सन्ति[2]।

किन्तु वैज्ञानिकेष्वपि सङ्कुचितवृत्तीनां नाल्पता। एतादृशाः सत्यं सत्यत्वेन स्वीकर्तुं त्रसन्ति। अत एव बेकननामकेन पाश्चात्त्येन कदापि न स्वीकृतं यत् पृथ्वी सूर्यस्य परितः परिभ्रामतीति। एतदेव तत्त्वं प्रकटयितुं गैलीलियो-महाशयस्य कृते कारावासः समापतितः। सर विलियम बैरेट-महाशयेन 'ब्रिटिश एसोसियेशन'संस्थायाः पुरतः Thought Transference ( विचाराणामेकतः अपरत्र परिनयनम् ) विषये एको निबन्धः पठितः, परं संस्थया तया तस्य प्रकाशनं नानुमतम्। सर विलियमक्रुक्स-महाभागेन 'रायल सोसाइटी'-संस्थाया मन्त्री निवेदितो यत् स Psychical Research Society ( साइकिकल रिसर्च सोसाइटी ) संस्थायाः अधिवेशने समागच्छतु इति, परं यस्तेन सोऽनु-

१. वि० म० भट : यौगिक पावर्स एण्ड गॉड रियलाइजेशन, पृ० ६४।

२. तत्रैव, पृ० २२-२३।

रोधः सावहेलमस्वीकृतः। 'फिफ्टी ईयर्स ऑफ साइकिकल रिसर्च'-ग्रन्थस्य लेखकेन हैरीप्राइस-महोदयेन यदा 'लन्दन-विश्वविद्यालयः' अनुरुद्धो यत् भवत्संस्थाने विषयस्यास्य अन्वेषणव्यवस्था भाव्या इति, तदा 'लन्दन-टाइम्स'पत्रे 'भूतानामध्ययनम्' ( chair in Ghosts ) इत्युक्त्वा विचारस्यास्य उपहासोऽक्रियत।

किन्तु एतादृशाः सङ्कुचिता व्यवहारा न चिरस्थायिनः। अन्ते सत्यस्य प्रकटनं सुनिश्चप्रचम्। सम्प्रति यूरोपीयेषु अमेरिकीयेषु च नैकेषु विश्वविद्यालयेषु विषयाणामेतेषां सर्वेषां गवेषणस्य व्यवस्था सम्पन्ना, सम्पद्यते सम्पत्स्यते च। निखिलेऽपि विश्वस्मिन् पक्षपातशून्यज्ञानस्य गवेषणम् अद्यतनीयमावश्यकं वृत्तम्।

भारतीयोगस्य परिज्ञानं नितरां दुरूहम्। अद्यावधि पाश्चात्त्यैर्यथावत् एष नावगतः। विषय एवायम् एतादृशो यदस्य कृते भगवता श्रीकृष्णेन गीतायां स्फुटमुक्तम्—

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया।' इति।

निरहङ्कारभावेन वास्तविक-जिज्ञासुवृत्त्यैव योगसदृशस्य दुरूहविषयस्य अध्ययनं करणीयम्। 'थियासफी'-सम्प्रदायस्य सुख्यातैः विद्वद्भिः— मैडम ब्लावट्सकी, डाक्टर एनी बेसेंट, कर्नल अलकाट, पादरी लीडवीटर आदिभिः—योगविषयमधिकृत्य अनेके आश्चर्यप्रदा अनुभवाः समुल्लिखिताः। अर्नेस्टवुडसदृशैः कतिपयैः विद्वद्भिः विषयेऽत्र सुबहु प्रयतितम्। तेषां 'योग'–'प्रैक्टिकलयोग-'कन्सेण्ट्रेशन'-प्रभृतिग्रन्थेषु योगसम्बद्धा अनेके साधीयांसो विचाराः सन्तीति प्रामाणिकतया अस्माभिः स्वीकरणीयम्। भ्रमश्च सद्भावपुरस्सरं निराकरणीयः। तदैव योगसदृशेन परमोपयोगिना शास्त्रेण मानवताया शुभं भवेदिति।

सम्पादकः, प्रकाशकः, मुद्रकश्च : गोविन्द नरहरि वैजापुरकरः,
श्रीभारतधर्ममहामण्डलम्,
जगतगंज, वाराणसी कैन्ट ।
मुद्रण-स्थलम् : मनोहर प्रेस, जतनबर, वाराणसी ।
आवरणपृष्ठमुद्रक : खण्डेलवाल प्रेस, वाराणसी ।
मुखपृष्ठचित्रकार : वैजनाथ वर्मा, वाराणसी ।

  

## सूर्योदयस्य नियमाः

१. 'सूर्योदय-मासिकपत्रस्य वार्षिकं मूल्यं धनादेश ( मनीआर्डर )-द्वारैव प्रेषणीयम् । वी० पी० द्वारा प्रेषणे ५० पणाः पृथक् प्रदेयाः स्युः ।

२. आवर्षं गम्भीरसाहित्यसमन्विताः १२ अङ्काः प्रकाश्यन्ते । नवीन-ग्राहकत्वं प्रथमाङ्कतः ( जनवरी-अंकतः ) एव स्वीकृतं भवति । माध्य-मिकेन केनापि अङ्केन ग्राहकत्वं न स्वीक्रियेत ।

३. आंग्लमासस्य प्रथमदिनाङ्के 'सूर्योदयः' प्रकाशितो भवति, परं तत्प्रेषणं द्वित्रदिवसैः अर्वागेव जायते । वारद्वयं संशोध्य ग्राहकेभ्यः स प्रेष्यते । अतस्तदलाभे पूर्वं स्वकीय-पत्रालयतस्तदनागमनस्य निश्चयं कृत्वैव १० दिनाङ्कानन्तरं वयं सूचनीयाः ।

४. लेख-कवितादीनां भाषा संयता, सरला, शुद्धा च भाव्या । प्रकाश-नीय-लेखादीनां स्पष्टाक्षरैः कर्गजस्यैकपृष्ठे एव लेखनमावश्यकम् । अस्वीकृता लेखादयः पोस्टविभागीय--चिटिका ( टिकट )-प्राप्त्यनन्तरं परावर्तयितुं शक्ष्यन्ते ।

५. सूर्योदय'स्य वार्षिकं शुल्कं रूप्यकपञ्चकं वर्तते ।

६. सूर्योदय-सम्बद्धः कीदृशोऽपि पत्र-व्यवहारः 'सूर्योदय-कार्यालयः, श्रीभारतधर्ममहामण्डलम्, जगतगंज, वाराणसी' इति सङ्केतेन करणीयः । सम्पादकीय-विषयसम्बद्धे पत्र-व्यवहारे 'सम्पादकः' इति, व्यवस्थाविभागीय-पत्रव्यवहारे च 'व्यवस्थापकः' इति च स्पष्टं लेखनीयम् । तेन उत्तरलाभे मुधा विलम्बो न भवेत् ।

